अत्र शब्दशक्तिमूलविरोधाङ्गेनार्थान्तरन्यासेन (१३२) विधि-रपि त्वामनुवर्त्तते इति सर्वपदद्योत्यं वस्तु ।

तुह वल्लहस्स गोसम्मि आसी अहरो मिलाणकमलदलो ।
इअ णववहू सोऊण कुणइ वअणं महीसंमुहम् (१३३)॥(८)

अत्र रूपकेण त्वयाऽस्य मुहुर्मुहुः परिचुम्बनं तथा कृतं, येन म्लानत्वमिति मिलाणादिपदद्योत्यं काव्यलिङ्गम् । एषु स्वतःसम्भवी व्यञ्जकः ।

राईसु चन्दधवलासु ललिअमाप्फालिऊण जो चावं ।
एकच्छत्तं विअ कुणइ भुअणरज्जं विअंभन्तो (१३४)॥(१०)

अत्र वस्तुना येषां कामिनामसौ राजा स्मरस्तेभ्यो न कश्चिदपि तदादेशपराङ्मुख इति जागद्भिरुपभोगपरैरेव तैर्निशा अतिवाह्यते इति भुअणरज्जपदद्योत्यं वस्तु प्रकाश्यते ।

निशितशरधियाऽर्पयत्यनङ्गो
दृशि सुदृशः स्वबलं वयस्यराले ।
दिशि निपतति यत्र सा च, तत्र
व्यतिकरमेत्य समुन्मिषन्त्यवस्थाः ॥ (११)

---

(१३२) शब्दशक्तिमूलस्य सर्वदा अनुवर्तत्यादिविरोधस्य अङ्गेन उपपादकेन, पराङ्मुखे त्वयीत्याद्यर्थान्तरन्यासेनेत्यर्थः ।

(१३३) तव वल्लभस्य प्रातरासीदधरो म्लानकमलदलम् ।
इति नववधूः श्रुत्वा करोति वदनं महीसम्मुखम् इति सं० ।
गोसशब्दो प्रभाते देशीति नागेशभट्टादयः । महेश्वरस्तु गोसम्मीतिपदं गोष्ठे इत्यनूद्य गौः शेते अस्मिन्निति योगेन प्रभातपरं वर्णयाञ्चकार, प्राकृते लिङ्गानियमात् 'दलो' इत्यस्य पुंस्त्वमित्यप्यवदत् ।

(१३४) रात्रिषु चन्द्रधवलासु ललितमास्फाल्य यश्चापम् ।
एकच्छत्रमिव करोति त्रिभुवनराज्यं विजृम्भमाण इति सं० ।

अत्र वस्तुना युगपदवस्थाः परस्परविरुद्धा अपि प्रभवन्तीति व्यतिकरपदद्योत्यो विरोधः।

॥रिञ्जन्तो वि उणो संदावकअत्थिएण हिअएण।
थणहरवअस्सएण विसुद्धजाइ ण चलइ से हारो(१३५)॥(१२)

अत्र विशुद्धजातित्वलक्षणहेत्वलङ्कारेण हारोऽनवरतं कम्पमान एवास्ते इति चलइपदद्योत्यं वस्तु।

सो मुद्धसामलाङ्गो धम्मिल्लो कलिअललिअणिअदेहो।
तीए खंधाहि वलं गहिअ सरो सुरअसंगरे जअइ (१३६)॥(१३)

अत्र रूपकेण मुहुर्मुहुराकर्षणेन तथा केशपाशः स्कन्धयोः प्राप्तः, यथा रतिविरतावप्यनिवृत्ताभिलाषः कामुकोऽभूदिति खंधपदद्योत्या विभावना(१३७)। एषु कविप्रौढ़ोक्तिमात्रनिष्पन्नशरीरः।

णवपुण्णिमामिअंकस्स सुहअ! को तं सि? भणसु सच्चं।
का सोहग्गसमग्गा पओसरअणि व्व तुह अज्ज? (१३८)॥(१४)

---

(१३५) वार्य्यमाणोऽपि पुनः सन्तापकदर्थितेन हृदयेन।
स्तनभरवयस्येन विशुद्धजातिर्न चलत्यस्या हारइति स०।

(१३६) स मुग्धश्यामलाङ्गो धम्मिल्लः कलितललितनिजदेहः।
तस्याः स्कन्धाद्बलं गृहीत्वा स्मरः सुरतसङ्गरे जयतीति स०।

(१३७) विभावनेति प्रकाश्यते इति शेषः, अत्रैव रूपकेणेत्यस्यान्वयः। अयं भावः, रत्यनिवृत्तिरूपाभिलाषहेत्वभावेऽपि अभिलाषोदयात् विभावना, रतिनिवृत्तिश्च खंधपदेनैव द्योतिता, आकर्षणेन हि धम्मिल्लस्य स्कन्धप्राप्तेः प्रायशो रतिनिवृत्तिं विनाऽसम्भवादिति।

(१३८) नवपूर्णिमामृगाङ्कस्य सुभग! कस्त्वमसि? भण सत्यम्।
का सौभाग्यसमग्रा प्रदोषरजनीव तवाद्येति स०।

अत्र वस्तुना मयीव अन्यस्यामपि प्रथममनुरक्तस्त्वं न तत इति णावेत्यादि-पच्चोसेत्यादिपदद्योत्यं (१३९) वस्तु व्यज्यते ।

सहि ! णवणिहुवणसमरम्मि अङ्कवालीसहीए णिविडाए ।
हारो णिवारिओ विअ उच्छेरन्तो तदो कहं रमिअं(१४०)॥(१५)

अत्र वस्तुना हारच्छेदादनन्तरम् अन्यदेव रतमवश्यमभूत्, तत्कथय कीदृगिति व्यतिरेकः कहंपदगम्यः (१४१) ।

पविसन्ती घरवारं विवलिअवअणा विलोइऊण पहं ।
खन्धे घेत्तूण घडं हाहा णट्ठो त्ति रुअसि सहि ! किन्ति?(१४२)॥

अत्र हेलालङ्कारेण सङ्केतनिकेतनं गच्छन्तं दृष्ट्वा यदि तत्र गन्तुमिच्छसि, तदा अपरं घटं गृहीत्वा गच्छेति वस्तु किन्ति-पदद्योत्यम् (१४३) । यथा वा,

विसंठुलं तुमं सहि ! दिट्ठिऊण कुडेण तरलतरदिट्ठिं ।
वारप्फंसमिसेण अप्पा गुरुओ त्ति पाडिअ विभिण्णो(१४४)॥(१६)

---

(१३९) अत्रायं विभागः, णवपुरिसमामिअक्कस्सेत्यनेन प्रथम-मनुरक्तस्त्वमिति, पच्चोसरअणीत्यनेन तु न तत इति व्यज्यते ।

(१४०) सखि नवनिधुवनसमरे अङ्कपालीसख्या निविड़या ।
हारो निवारित एव उच्छ्रियमाणस्ततः कथं रमितमिति स० ।
निधुवनं सुरतं, अङ्कपाली आलिङ्गनम् । उच्छ्रियमाणः द्वयोस्तृतीय-स्तथाऽधिको भवन्निति नागेशभट्टादयः ।

(१४१) कहंपदेन जिज्ञासाऽवगम्यते, जिज्ञासा च प्रसिद्धस्य नोदेतीति तद्विलक्षणैवेयं रतिर्जातेति जिज्ञासया व्यज्यत इति भावः ।

(१४२) प्रविशन्ती गृहद्वारं विवलितवदना विलोक्य पन्थानम् ।
स्कन्धे गृहीत्वा घटं हाहा नष्ट इति रोदिषि सखि ! किमिति इति स० ।

(१४३) व्यज्यत इतिशेषः, अत्रैव हेलालङ्कारेणेत्यस्यान्वयः ।

(१४४) विशृङ्खलां त्वां सखि ! दृष्ट्वा कुटेन तरलतरदृष्टिम् । द्वारस्पर्श-मिषेण आत्मा गुरुक इति पातयित्वा विभिन्न इति स० । कुटेन घटेन ।

अत्र नदीकूले लतागहने कृतसङ्केतमप्राप्तं गृहप्रवेशावसरे पश्चादागतं दृष्ट्वा पुनर्नदीगमनाय द्वारोपघातव्याजेन बुद्धि-पूर्व्वं व्याकुलया त्वया घटः स्फोटित इति मया चिन्तितम्, तत्किमिति नाश्वसिषि? तत् समीहितसिद्धये व्रज, अहं ते श्वश्रूनिकटे सर्व्वं समर्थयिष्ये इति द्वारस्पर्शनव्याजेनेत्यपह्नुत्या वस्तु (१४५)।

ओल्लाइ मल्लरसेण अ विइण्णताम्बूलउत्थअमणा सा।
वुड्ढा वि णवोढेव्व परवहू अहह हरइ तुह हिअअं(१४६)॥(१७)

अत्र काव्यलिङ्गेन वृद्धां परवधूं, त्वम् अस्मान् उज्झित्वा अभिलषसीति त्वदीयमाचरितं वक्तुं न शक्यमित्याक्षेपः परवधू-पदप्रकाश्यः (१४७)। एष कविनिबद्धवक्तृप्रौढोक्तिमात्रनिष्पन्न-शरीरः। वाक्यप्रकाशे तु पूर्व्वमुदाहृतम्। शब्दार्थोभयशक्त्युद्भवस्तु पदप्रकाशो न भवतीति पञ्चत्रिंशद्भेदाः।

प्रबन्धेऽप्यर्थशक्तिभूः॥ ४२॥

यथा गृध्रगोमायुसंवादादौ,—
अलं स्थित्वा श्मशानेऽस्मिन् गृध्रगोमायुसङ्कुले।
कङ्कालबहुले घोरे सर्व्वप्राणिभयङ्करे॥

---

(१४५) वारस्पर्शमिषेणेतिपदद्योत्यमिति प्रदीपप्रभा। सखीतिपद-द्योत्यमिति माहेश्वरमतम्।

(१४६) आर्द्रीकृता मधुरसेन च वितीर्णताम्बूलोत्सुकमनाः सा।
वृद्धाऽपि नवोढेव परवधूरहह हरति तव हृदयमिति सं०॥

(१४७) परवधूत्वेनैव ते चित्तहरणमिति चेतवद्वारेण प्राचीनमतसिद्ध-आक्षेपालङ्कारो व्यज्यते इत्यर्थः।

न चेह जीवितः कश्चित् कालधर्ममुपागतः।
प्रियो वा यदि वा द्वेष्यः, प्राणिनां गतिरीदृशी॥

इति दिवाप्रभवतो गृध्रस्य पुरुषविसर्जनपरमिदं वचनम् (१४८)।

आदित्योऽयं स्थितो मूढाः! स्नेहं कुरुत साम्प्रतम्।
बहुविघ्नो मुहूर्त्तोऽयं जीवेदपि कदाचन॥
अमुं कनकवर्णाभं बालमप्राप्तयौवनम्।
गृध्रवाक्यात्कथं मूढास्त्यजध्वमविशङ्किताः?॥

इति निशि विजृम्भमाणस्य गोमायोर्जनव्यावर्त्तननिष्ठम् (१४९) वचनमिति प्रबन्धएव प्रथते। अन्ये तु एकादश भेदा ग्रन्थविस्तरभयान्नोदाहृताः, स्वयन्तु लक्षणतोऽनुसर्त्तव्याः। अपिशब्दात् पदवाक्ययोः।

**पदैकदेशरचनावर्णेष्वपि रसादयः (१५०)।**

तत्र प्रकृत्या यथा,—

रइकेलिहिअणिअसणकरकिसलअरुद्धणअणजुअलस्स।
रुद्दस्स तइअणअणं पव्वइपरिचुंबिअं जअइ (१५१)॥

---

(१४८) पुरुषस्य मृतसम्बन्धिजनस्य, विसर्जनं श्मशानतोऽपसारणम्, गृहं प्रति निवर्त्तनमिति फलितोऽर्थः।

(१४९) जनस्य मृतात्मीयजनस्य, व्यावर्त्तनं श्मशानपरित्यागात् निवर्त्तनं, तन्निष्ठं तत्तात्पर्य्यकम्।

(१५०) पदानां विभक्त्यन्तरूपाणां एकदेशेषु प्रकृतिप्रत्ययोपसर्गरूपांशत्रयेषु, रचनासु दीर्घसमासादिरूपविन्यासविशेषेषु, वर्णेषु अक्षरविशेषेषु च, रसादयः असंलक्ष्यक्रमव्यङ्ग्याः सम्भवन्तीत्यर्थः।

(१५१) रतिकेलिहृतनिवसनाकरकिसलयरुद्धनयनयुगलस्य।
रुद्रस्य तृतीयनयनं पार्वतीपरिचुम्बितं जयतीति सं०।

प्राकृते समासेन निवसनेत्यस्य ह्रस्वः।

अत्र जयतीति नतु शोभत इत्यादि (१५२), समानेऽपि हि स्थगनव्यापारे लोकोत्तरेणैव व्यापाररूपेणास्य पिधानमिति तदेवोत्कृष्टम्। यथा वा,—

प्रेयान् सोऽयमपाकृतः सशपथं पादानतः कान्तया,
द्वित्राण्येव पदानि वासभवनाद्यावन्न यात्युन्मनाः।
तावत्प्रत्युत पाणिसंपुटगलन्नीवीनिबन्धं धृतो
धावित्वैव कृतप्रणामकमहो प्रेम्णो विचित्रा गतिः॥

अत्र पदानीति नतु द्वाराणीति(१५३)। तिङ्सुपोर्यथा,—

पथि पथि शुकचञ्चूचारुराभाऽङ्कुराणां,
दिशि दिशि पवमानो वीरुधां लासकश्च।
नरि नरि किरति द्राक् सायकान् पुष्पधन्वा,
पुरि पुरि विनिवृत्ता मानिनी मानचर्चा॥

अत्र किरतीति किरणस्य साध्यमानत्वं, निवृत्तेति निवर्त्तनस्य

---

(१५२) उक्तमिति शेषः, समाने करकृतनयनपिधानतुल्ये, स्थगनव्यापारे तृतीयनयनविधानक्रियायां, लोकोत्तरेण अलौकिकेन चुम्बनात्मकेन, अस्य तृतीयनयनस्य ।' अयम्भावः, जयत्यर्थेन उत्कर्षोऽवगम्यते, तृतीयनयनस्य उत्कर्षस्य उत्कृष्टपिधानवत्तया, पिधानस्योत्कर्षस्य चुम्बनरूपालौकिककरणकतया, चुम्बनेन पिधानन्तु रसोत्कर्षादेव भवतीति जिधातुरेव रसोत्कर्षप्रतीतेः प्रयोजक इति, 'शोभते' इत्युक्तौ तु उत्कर्षकारणचिन्तानुदयेन वाच्यार्थएव विश्रान्तिः ; इह तु सहृदयहृदयमेव प्रमाणम् ।

(१५३) उक्तानीति शेषः, एवमग्रेऽपि, द्वारादिपदमपहाय पदपदपरीणात् द्वारपर्य्यन्तगमनासहिष्णुताप्रतीत्या उत्कण्ठातिशयो व्यज्यते । अत्र नामप्रकृतिगम्यत्वम् ।

सिद्धत्वं तिङा सुपा च, तत्रापि क्तप्रत्ययेनातीतत्वं द्योत्यते ।

यथा वा,

लिखन्नास्ते भूमिं बहिरवनतः प्राणदयितः,
निराहाराः सख्यः सततरुदितोच्छूननयनाः ।
परित्यक्तं सर्व्वं हसितपठितं पञ्जरशुकैः,
तवावस्था चेयं, विसृज कठिने ! मानमधुना ॥

अत्र लिखन्निति न तु लिखतीति ; तथा आस्ते- इति न तु आसीदिति, अपितु प्रसादपर्य्यन्तमास्ते-इति ; भूमिमिति न तु भूमाविति ; न हि बुद्धिपूर्व्वकमपरं किञ्चिल्लिखतीति तिङ्-सुब्विभक्तीनां व्यङ्ग्यम् (१५४) ।

गामरुहाहम्हि गामे वसामि णअरट्ठिइं ण आणामि ।
णाअरिआणं पइणो हरेमि जा होमि सा होमि(१५५) ॥

अत्र नागरिकाणामिति षष्ठ्याः(१५६) ।

---

(१५४) अयम्भावः, लिखन्निति-शत्रा लिखनक्रियाया अप्राधान्याव-गमात् अतात्पर्य्यविषयत्वेन अबुद्धिपूर्व्वकत्वम् ध्वनितम्, आस्ते-इति प्रारब्धा-परिसमाप्तिपर्य्यन्ततावोधकवर्त्तमानतिङाऽवस्थानस्य प्रसादपर्य्यन्तताल्लाभः, एवं भूमिमिति द्वितीयाविभक्त्याऽधिकरणस्य कर्म्मत्वप्रतीतेः लेखनीय-मपरं कर्म्मान्तरं नास्तीति प्रतीयते, एतेनापि च मोहातिशयो व्यज्यते इति । अत्र तिङ्सुपोः प्रस्तावे लिखन्नितिशतृप्रत्ययस्यैव व्यञ्जकत्वप्रदर्शनं प्रासङ्गिकम् ।

(१५५) ग्रामरुहा अहं ग्रामे वसामि नगरस्थितिं न जानामि ।
नागरिकाणां पतीन् हरामि या भवामि सा भवामीति सं० ॥

कथन्ते का त्वमस्यदपे इत्यधिक्षिपन्तीं नागरिकां प्रति ग्रामीणाया इयमुक्तिः ।

(१५६) नागरिकाणामित्यपहाय नागरिकाणाम्मतीनिति उक्तम् ; तेन च

रमणीयः क्षत्त्रियकुमार आसीत्।

-इति कालस्य। एषा हि भग्नमाहेश्वरकार्मुकं दाशरथिं प्रति कुपितस्य भार्गवस्योक्तिः (१५७)। वचनस्य यथा,—

ताणं गुणग्गहणाणं, ताणं उक्कंठाणं, तस्स पेम्मस्स।
ताणं भणिआणं, सुन्दर! एरिसिअं जाअमवसाणं? (१५८)॥

अत्र गुणग्रहणादीनां बहुत्वं, प्रेम्णश्चैकत्वं द्योत्यते (१५९)। पुरुषव्यत्ययस्य यथा,

रे रे चञ्चललोचनाञ्चितरुचे, चेतः! प्रमुच्य स्थिर-
प्रेमाणं महिमानमेणनयनामालोक्य किं नृत्यसि?
किं मन्ये विहरिष्यसे? बत हतां मुञ्चान्तराशामिमाम्,
एषा कण्ठतटे कृता खलु शिला संसारवारां-निधौ (१६०)॥

---

सम्बन्धषष्ठ्या तत्सम्बन्धेन पतिषु चातुर्य्यातिशयो द्योत्यते, तेन च तासु इतरतः स्वस्यातिचातुर्य्यं व्यङ्ग्यम्। अत्र 'नागरिकाणामित्यनादरे षष्ठी ता अनादृत्य इत्यर्थः' इति वर्णयन्ति बहवः।

(१५७) आसीदित्यतीतकालबोधकलङा, मत्क्रोधकवलितस्यास्य रमणीयत्वमतीतं न तु वर्त्तमानं भविष्यद्वेति व्यज्यते, तेन क्षणादेनं संहरामीति-प्रतीत्या भार्गवस्य क्रोधातिशयो व्यङ्ग्यः।

(१५८) तेषां गुणग्रहणानां तासामुत्कण्ठानां तस्य प्रेम्णः।
तासां भणितीनां सुन्दर! ईदृशं जातमवसानमिति सं॰॥

(१५९) बहुत्वं बहुविधत्वम्, एकत्वम् एकविधत्वम्। तथाच गुणग्रहणादीनां प्रेमहेतूनां बहुविधत्वेऽपि कार्य्यं प्रेम एकजातीयमेव न कदाचिदप्यन्यथाभावं प्राप्तमिति बहुवचनैकवचनाभ्यां व्यज्यते इति प्रदीपः।

(१६०) स्थिरम् प्रेम यत्र, तादृशम् महिमानम् विषयानाकार-

अत्र प्रहासः(१६१) । पूर्वनिपातस्य यथा,

येषां दोर्बलमेव, दुर्बलतया ते सम्मताः ; तैरपि
प्रायः केवलनीतिरीतिशरणैः कार्य्यं किमुर्व्वीश्वरः ? ।
ये क्ष्मायक ! पुनः पराक्रमनयस्वीकारकान्तक्रमाः,
ते स्युर्नैव भवादृशास्त्रिजगति द्वित्राः पवित्राः परम् ॥

अत्र पराक्रमस्य प्राधान्यमवगम्यते (१६२) । विभक्तिविशेषस्य यथा,

प्रधनाध्वनि धीरधनुर्ध्वनिभृति विधुरैरयोधि तव दिवसम् ।
दिवसेन तु नरप ! भवानयुङ्क्त विधिसिद्धसाधुवादपदम् ॥

अत्र दिवसेनेत्यपवर्गे तृतीया फलप्राप्तिं द्योतयति(१६३) ।

भूयोभूयः सविधनगरीरथ्यया पर्य्यटन्त
दृष्ट्वा दृष्ट्वा भवनवलभीतुङ्गवातायनस्था ।

---

जनितसन्तापं, अन्तरायां अन्तर्व्विद्यमानामायां मनोमतमभिलाषं, एका स्त्री, भाया वा ।

(१६१) अयं भावः, 'त्वं मन्ये विहरिष्यसे' इत्यस्य अहं विहरिष्ये इति किं त्वं मन्यसे ? इत्यर्थः, अत्र "प्रहासे च मन्योपपदे मन्यतेरुत्तम एकवच्च" इति (१।४।१०६) सूत्रेण युष्मदस्मदोर्योगे उत्तममध्यमयोर्व्विपर्य्ययेण विधानं, तेन च प्रहासोऽभिव्यक्त इति ।

(१६२) पराक्रमनयेत्यत्र अल्पाचोऽपि नयपदात् पराक्रमपदस्य "अभ्यर्हितञ्च" इति (२।२।३४) सूत्रवार्त्तिकेण कृतः पूर्वनिपातः पराक्रमस्य प्राधान्यरूपमभ्यर्हितत्वं द्योतयति ।

(१६३) 'अपवर्गे तृतीया' (२।३।६ सू०) इति सूत्रेण फलप्राप्तौ द्योत्यायामेव तृतीयाविधानात् । अत्र दिवसमिति द्वितीयाविभक्तिरपि रिपूणां फलाप्राप्तिं सूचयति ।

साक्षात्कामं नवमिव रतिर्मालती माधवं यत्
गाढोत्कण्ठाललितलुलितैरङ्गकैस्ताम्यतीति (१६४)॥

अत्र अनुकम्पाद्योतकः कप्रत्ययस्य (१६५)।

परिच्छेदातीतः सकलवचनानामविषयः
पुनर्जन्मन्यस्मिन्ननुभवपथं यो न गतवान्।
विवेकप्रध्वंसादुपचितमहामोहगहनो
विकारः कोऽप्यन्तर्जडयति च तापञ्च कुरुते॥

अत्र प्रशब्दस्योपसर्गस्य।

कृतञ्च गर्वाभिमुखं मनस्त्वया,
किमन्यदेवं निहताश्च नो द्विषः।
तमांसि तिष्ठन्ति हि तावदंशुमान्
न यावदायात्युदयाद्रिमौलिताम्।

अत्र तुल्ययोगिताद्योतकस्य 'च' इति निपातस्य(१६६)।

---

(१६४) इतीति, इति यत्, तत् लवङ्गिकया कथितमिति पूर्वेणान्वयः। भवनवलभी भवनोपरिनिर्म्मितमण्डपः, सौधचूड़ा वा इति बहवः, गृहाच्छादनवक्रदारु इति तु नागेशभट्टः। लुलितं खिन्नं कम्पितं वा।

(१६५) अनुकम्पाद्योतकस्य, अङ्गकैरित्यत्र "अनुकम्पायां" (५।३।७६) इति सूत्रेण विहितात् कप्रत्ययादनुकम्पातिशयो व्यज्यते।

(१६६) चकारेण मनोगर्वाभिमुखीकरणारिहननयोः प्राकरणिकयोरेककालत्वलक्षणैकधर्म्मसम्बन्धात् तुल्ययोगितेति प्राचीनमतेनेदम्। चेतिनिपातरूपप्रातिपदिकमात्रस्यैव व्यञ्जकत्वं, न तु प्रत्ययघटकतया तस्येति पदैकदेशतेति निदर्शनमविदर्शनम्। प्रदीपकारादयस्तु तुल्य-

रामोऽसौ भुवनेषु विक्रमगुणैः प्राप्तः प्रसिद्धिं पराम्
अस्मद्भाग्यविपर्ययाद्यदि परं(१६७) देवो न जानाति तम् ।
वन्दीवैष यशांसि गायति मरुद्यस्यैकवाणाहति-
श्रेणीभूतविशालतालविवरोद्गीर्णैः स्वरैः सप्तभिः ॥

अत्रासाविति भुवनेष्विति गुणैरिति सर्व्वनाम-प्रातिपदिक-वचनानां (१६८) ; न त्वदिति न मदिति अपि तु अस्मदिति अस्य सर्व्वाक्षेपिणः (१६९) ; भाग्यविपर्य्ययादित्यन्यथा-सम्पत्तिमुखेन (१७०), नत्वभावमुखेनाभिधानस्य ।

तरुणिमनि कलयति कलामनुमदनधनुर्भ्रुवोः पठत्यग्रे ।
अधिवसति सकलललनामौलिमियं चकितहरिणचलनयना ॥

अत्र इमनिजव्ययीभावकर्मभूताधराणां स्वरूपस्य ; तरुणत्वे-

---

योगितापदं समुच्चयपरमिति, चकारस्य पदैकदेशत्वाभावेऽपि केवलस्य तस्याप्रयोगात् पदैकदेशत्वोपचार इति च व्याचक्षुः ।

(१६७) यदिपरं शब्दोऽवधारणार्थे निपातः ।

(१६८) व्यञ्जकत्वमिति शेषः, एवं सर्व्वत्र । भुवनेषु न तु देशेषु भुवने वा ; गुणैः न तु दोषैः गुणेन वेति उभयत्रैव प्रातिपदिक-वचनयोर्व्यञ्जकत्वम् ।

(१६९) उक्तमिति शेषः । 'अस्य' बहुवचनान्तास्मच्छब्दघटित-समासांशस्य अस्मत्मात्रादेशस्यास्मदित्यस्य, सर्व्वाक्षेपिणः समस्तरक्षः-कुलोपस्थापकस्य ।

(१७०) अस्य च 'अभिधानस्य' इत्यत्रापि शेषान्वयः, अन्यथा-सम्पत्तिः दुर्भाग्यरूपेण परिणमनम्, अभावमुखेन अभाग्यादितिरीत्या ; तथाच अस्माकं भाग्यं नास्तीति न, परन्तु येनैव भवद्वात्सल्याद्यनुबन्धिना भाग्येन आजन्मसुखिनो वयं, तदेव अधुना दुःखफलदमस्माकमिति ध्वनितम् ।

इति, धनुषः समीपे-इति, मौली वसतीति त्यादिभिस्तुल्ये एषां वाचकत्वे अस्ति कश्चित् स्वरूपस्य विशेषो यश्चमत्कारकारी, स एव व्यञ्जकत्वं प्राप्नोति (१७१)। एवमन्येषामपि बोद्धव्यम्। वर्णरचनानां व्यञ्जकत्वं गुणस्वरूपनिरूपणे (८म उ०) उदाहरिष्यते। अपिशब्दात् (१७२) प्रबन्धेषु नाटकादिषु। एवं रसादीनां पूर्व्वगणितभेदाभ्यां (१७३) सह षड्भेदाः।

**भेदास्तदेकपञ्चाशत्,**

व्याख्याताः (१७४)।

**तेषां चान्योन्ययोजनम्॥ ४३॥**

**सङ्करेण त्रिरूपेण संसृष्ट्या चैकरूपया।**

---

(१७१) इमनिजा तद्धितेन सुकुमाराक्षरेण तारुण्यमेव नवं वयः प्रतीयते, 'तरुणत्वे' इत्युक्तौ तु त्वप्रत्ययस्य प्रौढ़ाक्षरतया वयसोऽपि प्रौढ़त्वं प्रतीयेत। अनुमदनधनुरिति पूर्व्वपदार्थप्रधानाव्ययीभावेन उत्तरपदार्थीभूतधनुषोऽप्राधान्यं प्रकाशयता तन्निरपेक्षवशीकरणसामर्थ्यं भ्रूलतायास्य प्रत्याय्यते; तथा मौलिमितिकर्म्मप्रत्ययेन कर्म्मीभूतसकलललनामौलिव्याप्तिसूचनद्वारा सौन्दर्य्यातिशयो व्यज्यते इति।

(१७२) 'वर्णेष्वपि'-इत्यपिशब्दात्।

(१७३) पदवाक्यप्रकाश्याभ्यामित्यर्थः। पद-वाक्य-पदैकदेश-रचना-वर्ण-प्रबन्ध-प्रकाश्यतया षड्भेदो रसादिरित्यर्थः।

(१७४) व्याख्याताः व्याख्यातप्रायाः, तथाहि अविवक्षितवाच्यस्य अर्थान्तरसंक्रमितवाच्यात्यन्तितिरस्कृतवाच्यतया द्वौ भेदौ, तौ च पदवाक्ययोरिति चत्वारः; विवक्षितान्यपरवाच्येषु असंलक्ष्यक्रमव्यङ्ग्यस्य उक्तरीत्या षट्; संलक्ष्यक्रमव्यङ्ग्यस्य तु एकचत्वारिंशत् भेदाः, (शब्दशक्तिमूलस्य द्वौ भेदौ, तौ च पदवाक्ययोरिति चत्वारः; अर्थशक्त्युद्भवस्य द्वादश भेदाः प्रत्येकं पदवाक्यप्रबन्धगताः-इति षट्त्रिंशत्; उभयशक्त्युद्भवस्यैक इति एकचत्वारिंशत्) इति मिलित्वा शुद्धस्य ध्वनेरेकपञ्चाशत् भेदाः।

न केवलं शुद्धा एवैकपञ्चाशद्भेदा भवन्ति, यावत्तेषां स्वप्रभेदैरेकपञ्चाशता (संशयास्पदत्वेन, अनुग्राह्यानुग्राहकतया, एकव्यञ्जकानुप्रवेशेन चेति) त्रिविधेन सङ्करेण, परस्परनिरपेक्षरूपया एकप्रकारया संसृष्ट्या चेति चतुर्भिर्गुणने (१७५),—

वेदखाब्धिवियच्चन्द्राः [१०४०४] (१७६),

---

(१७५) तेषां एकपञ्चाशतो भेदानां, स्वप्रभेदैरेकपञ्चाशता चतुर्भिर्गुणने इत्यन्वयः। साक्षात् परम्परया वा यथाकथञ्चित् परस्परसापेक्षः संयोगः संकरः, तद्भिन्नः स संसृष्टिः। संकरस्थले हि क्वचित् साधकबाधकमानाभावादेकतरानवधारणेन अयं अयं वा इति भवति संशयः, क्वचिच्च तत्र एकोपादेयतया प्रधानयोरपि एकस्य कथञ्चिदपरानुगुणत्वमात्रेण अङ्गाङ्गिभावापरनामकानुग्राह्यानुग्राहकभावः, क्वचित्तु एकव्यञ्जकव्यङ्ग्यतया एकाश्रयानुप्रवेश इति संकरस्य त्रैविध्यम्। इदमत्रावधेयं, प्रधानव्यङ्ग्ययोः संसृष्टिसंकराभ्यामेव ध्वनेस्तथात्वाभावेऽपि तथात्वव्यपदेश इति एतत् सर्व्वं उदाहरणेन स्फुटीभविष्यति।

(१७६) 'अङ्कस्य वामतो गतिः' इति नियमेन चतुरुत्तरचतुःशताधिकायुतपरिमिताः (१०४०४) भेदाः सम्पद्यन्ते इत्यर्थः, तथाहि एकपञ्चाशतो भेदानां एकपञ्चाशता गुणने एकाधिकषट्शतोत्तरसहस्रद्वयं (२६०१) भवति, योजनञ्च संसृष्ट्यादिचतुःप्रकारैरिति तावतां चतुर्भिर्गुणने यथोक्तसंख्या (१०४०४) सम्पद्यते। एकस्मिन्नपि श्लोके एकविधध्वनिद्वयसम्भवेन स्वस्य स्वेन योजनं नासम्भवि।

अत्र "अत्रार्वाचीनाः, [गणनेयमयुक्ता, अपिमापिसभेदस्य योजने एकैकभेदस्याभावात्, तथाहि अर्थान्तरसंक्रमितवाच्यस्य अत्यन्ततिरस्कृतवाच्येन योजने यो भेदः स एव अत्यन्ततिरस्कृतवाच्यस्यार्थान्तरसंक्रमितवाच्येन योजनायाम्, एवमन्यत्रापि, तस्मात्

'एको राशिर्द्विधा स्थाप्य एकमेकाधिकं कुरु।
समार्द्धेनाहतो गुण्यः, एतत् संकलितं लघु'॥

-इत्युक्तदिशा द्विपञ्चाशदर्द्धेन षड्विंशत्या एकपञ्चाशतं गुणयेत्, तथाच रसपञ्चाग्निमेदिन्य इति त्रयोदश शतानि षड्विंशत्यधिकानि (१३२६) जायन्ते, योगः चतुःप्रकार,-इति तेषु चतुर्भिर्गुणितेषु वेदाब्दहने-

शुद्धभेदैः सह,—

शरेषुयुगखेन्दवः [ १०४५५ ] ॥ ४४ ॥

तत्र दिङ्मात्रमुदाह्रियते,—

खणपाहुणिआ देअर! जाआए सुहअ। किं पि दे भणिआ।
रुअइ पडोहरवलहीघरम्मि अणुणिज्जउ वराई (१७७) ॥

---

षड् इति पञ्च सहस्राणि चतुरधिकं शतत्रयं च (५३०४) संकीर्णभेदाः इत्येव ज्यायः] इति वदन्ति। वयं ब्रूमः, अनुभवसिद्धौ तावत् पुष्पकेसरेष्विव ध्वनिष्वपि सूक्ष्मत्वातिशयानतिशयौ, तथा चार्थान्तरसंक्रमितवाच्यस्य यत्रातिशयस्तत्रात्यन्ततिरस्कृतवाच्येन तद्योजना, यत्र तु तद्वैपरीत्यं, तत्रात्यन्ततिरस्कृतवाच्यस्येतरेण योजनमिति व्यपदेशः, एवमन्यत्राप्यूह्यम्। एतदेव प्राधान्यमादाय गणना सौत्री। नन्वेवं यत्रोभयोस्तुल्यमेव चारुत्वं, तस्य भेदान्तरत्वं स्यादिति, नैवं, अपकर्षीभावस्यातिशयपदेन स्वीकारात्, तत्रोभयभेदसंकरस्वीकारात्। एतादृशे चास्थाने पदाभ्रमणमेव महत् पौरुषमिति सहृदयभावनाच्छायालोचनीयमिति" इति प्रदीपप्रभया सुतरामेव दर्पणमालिन्यमजनि। अत्र "पदैकदेशपदवाक्यमहावाक्यानामेकव्यञ्जकस्यान्यतरेणाव्यञ्जनात् कथं तेषामेकव्यञ्जकानुप्रवेश इत्येतावताऽपि वक्रतरत्वाद:" इतिमहेश्वराक्षेपस्तु न केनापि समाहितः; अत्रेदं बोध्यम्, 'एकव्यञ्जकानुप्रवेशः' इत्यत्र व्यञ्जकत्वं यथाकथञ्चित् सहकारितामात्रेणापीति अवश्यमङ्गीकार्यम्, अतएव रामोऽस्मीत्यादौ लक्ष्यार्थस्य व्यञ्जकतायां सहकारितामात्रेणैव रामपदं व्यञ्जकमिति वक्ष्यति, एवञ्च वाक्यव्यङ्ग्येऽपि तदेकदेशपदादेः सहकारितारूपेण व्यञ्जकतया यत्र वाक्यतदेकदेशपदयोर्द्वयोरेव व्यङ्ग्यद्वयमस्ति, तत्रैव तत्पदरूपैकव्यञ्जकानुप्रवेशः सम्भवतीति, अत्र "एतादृशे चास्थाने पदाभ्रमणमेव महत् पौरुषमिति" इति प्रदीपोक्तं मा विचारि इत्यलम्।

(१७७) क्षणप्राघुणिका देवर! जायया सुभग! किमपि ते भणिता।
•रोदिति शून्यपश्चाद्भागवलभीगृहेऽनुनीयतां वराकीति सं॥

क्षणे उत्सवे, प्राघुणिका निमन्त्रणेन समागता। पडोहरशब्दो गृहपश्चाद्भागे देशीति बहवः।

अत्रानुनयः किमुपभोगलक्षणेऽर्थान्तरे संक्रमितः, किम् अनुरणनन्यायेनोपभोग एव व्यङ्ग्ये व्यञ्जकः ? इति संदेहः (१७८)।

स्निग्धश्यामलकान्तिलिप्तवियतो वेल्लद्बलाका घनाः,
वाताः शीकरिणः पयोदसुहृदामानन्दकेकाः कलाः ।
कामं सन्तु, दृढं कठोरहृदयो रामोऽस्मि, सर्वं सहे,
वैदेही तु कथं भविष्यति, हहा हा देवि ! धीरा भव ॥

अत्र लिप्तेति पयोदसुहृदामिति च अत्यन्ततिरस्कृतवाच्ययोः संसृष्टिः (१७९)। ताभ्यां सह रामोऽस्मीत्यर्थान्तरसंक्रमितवाच्यस्यानुग्राह्यानुग्राहकभावेन (१८०), रामपदलक्षणैकव्यञ्जकानुप्रवेशेन च अर्थान्तरसंक्रमितवाच्यरसध्वन्योः (१८१) सङ्करः। एवमन्यदप्युदाहार्यम् ॥

इति काव्यप्रकाशे ध्वनिनिर्णयो नाम चतुर्थ उल्लासः ॥

---

(१७८) तथा चात्र व्यङ्ग्यसंदेहेनैतन्मूलक एवाविवक्षितवाच्यध्वनि-विवक्षितान्यपरवाच्यध्वन्योः संदेहसंकरः ।

(१७९) अमूर्त्ते वियति कान्त्या द्रवद्रव्यसंयोगविशेषस्य लेपनस्य असम्भवात्, अचेतने तु मेघे चित्तवृत्तिविशेषस्य लेपनस्य सौहृदस्यासम्भवाच्च लेपनं व्यापने, सौहृदञ्च केकाद्यनुबन्धित्वेऽत्यन्ततिरस्कृतम् । अत्र च लक्ष्यार्थयोरातिशय्ये व्यङ्ग्ये, तयोश्च परस्परं निरपेक्षतयाऽवस्थानात् संसृष्टिः, तन्मूलकैव ध्वन्योरपि संसृष्टिः ।

(१८०) ताभ्यां अत्यन्ततिरस्कृतवाच्यध्वनिभ्यां सह अर्थान्तरसंक्रमितवाच्यध्वनेरनुग्राह्यानुग्राहकभावेन सङ्कर इत्यन्वयः, तथाहि रामपदस्य सकलदुःखपात्रतया प्रसिद्धरूपोऽर्थो लक्ष्यः, तेन च रामस्य स्वावधीरणं व्यङ्ग्यं, तदानीं तस्य स्वावधीरणं तु लिप्तपदसुहृत्पदव्यङ्ग्ययोः मेघस्याकाशव्यापनकेकाद्यनुबन्धित्वातिशययोरुद्दीपकयोः प्रयोज्यमेवेति तयोरनुग्राहकत्वं, स्वावधीरणस्य तु अनुग्राह्यत्वमिति व्यङ्ग्याभ्यां व्यङ्ग्यस्य उक्तरूपसङ्करमूलक एव ध्वनिभ्यां ध्वनेस्तद्व्यपदेशः ।

(१८१) उक्तरूपेण स्वावधीरणस्येव विप्रलम्भस्यापि कथञ्चित् रामपदव्यङ्ग्यत्वात्, वाक्यव्यङ्ग्यस्य विप्रलम्भस्य तदेकदेशरामपदव्यङ्ग्यत्वानपायाद्वा व्यङ्ग्ययोः स्वावधीरणविप्रलम्भरसयोः रामपदरूपैकव्यञ्जकानुप्रवेशरूपः संकरोऽस्तीति तन्मूलको ध्वन्योरपि तथा व्यपदेशः ।

## ॥ पञ्चम उल्लासः ॥

एवं ध्वनौ निर्णीते गुणीभूतव्यङ्ग्यप्रभेदानाह,—

अगूढमपरस्याङ्गं वाच्यसिद्ध्यङ्गमस्फुटम् ।
सन्दिग्धतुल्यप्राधान्ये काक्काक्षिप्तमसुन्दरम् ॥ १ ॥
व्यङ्ग्यमेवं (१) गुणीभूतव्यङ्ग्यस्याष्टौ भिदाः स्मृताः।

कामिनीकुचकलशवत् गूढं चमत्करोति, अगूढन्तु स्फुटतया वाच्यायमानमिति गुणीभूतमेव । अगूढं यथा,—

यस्यासुहृत्कृततिरस्कृतिरेत्य तप्त-
सूचिव्यधव्यतिकरेण युनक्ति कर्णौ ।
काञ्चीगुणग्रथनभाजनमेष सोऽस्मि,
जीवन्न संप्रति भवामि किमावहामि ! (२) ॥

अत्र जीवन्नित्यर्थान्तरसंक्रमितवाच्यस्य (३) ।

उन्निद्रकोकनदरेणुपिशङ्गिताङ्गाः
गायन्ति मञ्जु मधुपा गृहदीर्घिकासु ।

---

(१) एवं एतेन कारणेन ।

(२) वृहन्नलारूपेणाऽवस्थितस्यार्जुनस्याक्षेपोक्तिरियम् । मया कृता तिरस्कृतिः पराभवो यस्य सः । शरणागतस्य रिपोः तप्तलौहशलाकया कर्णवेधो देशाचारसिद्ध इत्युदाहरणचन्द्रिकादयः सर्व्वे ।

(३) व्यङ्ग्यं अगूढमित्यन्वयः । एवं परत्र । अत्र जीवनं अभिमत-कार्य्याक्षमत्वेनाप्रशस्तजीवनं लक्षयति, तेन च मरणमेव श्रेयः इति व्यङ्ग्य-मसहृदयैरपि गम्यमिति ।

एतत्तत्काले च, रवेर्नवबन्धुजीव-
पुष्पच्छदाभमुदयाचलचुम्बि बिम्बम् ॥

अत्र चुम्बनस्यात्यन्ततिरस्कृतवाच्यस्य (४)।

अत्रासीत् फणिपाशबन्धनविधिः, शक्त्या भवद्देवरे
गाढं वक्षसि ताड़िते हनुमता द्रोणाद्रिरत्राहृतः।
दिव्यैरिन्द्रजिदत्र लक्ष्मणशरैर्लोकान्तरं प्रापितः,
केनाप्यत्र मृगाक्षि ! राक्षसपतेः कृत्ता च कण्ठाटवी ॥

अत्र 'केनाप्यत्र'-इत्यर्थशक्तिमूलानुरणनरूपस्य। 'तस्याप्यत्र'-इति युक्तः पाठः (५)। [१]

'अपरस्य' रसादेर्वाच्यस्य वा, ( वाक्यार्थीभूतस्य ) अङ्गं रसादि अनुरणनरूपं वा (६)। यथा,

अयं स रसनोत्कर्षी पीनस्तनविमर्दनः।
नाभ्यूरुजघनस्पर्शी नीवीविस्रंसनः करः ॥

---

(४) अत्र चुम्बतिर्वक्त्रसंयोगरूपे मुख्यार्थे सबाधः सन् संयोगत्वेन सामान्येन उदयाचलसूर्यबिम्बसंयोगं लक्षयन् 'प्रभातं' वाच्यवत् प्रकाशयति। संयोगत्वसामान्यरूपेणापि वक्त्रसंयोगरूपमुख्यार्थस्यान्वयाप्रवेशात् अत्यन्ततिरस्कृतवाच्यत्वम्।

(५) अत्रानुनायकोपनायकप्रतिनायकेषु निर्दिष्टेषु, चतुर्थवाक्ये नायको राम एवार्थशक्त्या प्रतीयते, स च 'केनापि' इत्युपादानेन वाच्यायमानतयाऽगूढः कृतः, तस्याप्यत्रेति पाठे गूढतया ध्वनित्वमव्याहतमेवेति प्रदीपः।

(६) वाक्यार्थीभूतस्य वाक्यतात्पर्यविषयतया प्रधानस्य, निष्पन्नरस-भावस्य अङ्गत्वाभावात् रसपदं स्थायिभावपरम्। अत्र यथासंख्यान्वयस्तु प्रमाणशून्यतया उपेक्ष्यः, उदात्तालङ्कारोदाहरणे "नात्र वीरो रसः, तस्येहाङ्गत्वात्" इति वदता ग्रन्थकृतैव रसादेर्वाक्याङ्गतायाः स्वीकृतत्वेन तस्यात्रानन्तर्भावे पृथक्प्रभेदत्वापत्तिः।

अत्र शृङ्गारः कवयस्य।

कैलासालयभाललोचनरुचा निर्वर्तितालक्तक-
व्यक्तिः पादनखद्युतिर्गिरिभुवः सा वः सदा त्रायताम्।
स्पर्द्धाबन्धसमृद्धयेव सुदृढं रूढा यया नेत्रयोः
कान्तिः कोकनदानुकारसरसा सद्यः समुत्सार्य्यते (७)॥

अत्र भावस्य रसः।

अत्युच्चाः परितः स्फुरन्ति गिरयः, स्फारास्तथाऽम्भोधयः,
तानेतानपि बिभ्रती किमपि न क्लान्तासि! तुभ्यं नमः।
आश्चर्य्येण मुहुर्मुहुः स्तुतिमिति प्रस्तौमि यावद्भुवः,
तावद्बिभ्रदिमां स्मृतस्तव भुजो, वाचस्ततो मुद्रिताः॥

अत्र भूविषयो रत्याख्यो भावो राजविषयस्य रतिभावस्य।

बन्दीकृत्य नृप! द्विषां मृगदृशस्ताः पश्यतां प्रेयसाम्,
श्लिष्यन्ति प्रणमन्ति लान्ति परितश्चुम्बन्ति ते सैनिकाः।
अस्माकं सुकृतैर्दृशोर्निपतितोऽस्यौचित्यवारां-निधे!
विध्वस्ता विपदोऽखिलास्तदिति तैः प्रत्यर्थिभिः स्तूयसे(८)॥

अत्र भावस्य रसाभासभावाभासौ (९) प्रथमद्वितीयार्द्ध-द्योत्यौ।

अविरलकरवालकम्पनैर्भ्रुकुटीतर्जनगर्जनैर्मुहुः।
ददृशे तव वैरिणां मदः, स गतः क्वापि तवेक्षणे क्षणात्॥

अत्र भावस्य भावप्रशमः (१०)।

---

(७) प्रणतिपरे भगवति भवे भवान्या मानभङ्गेन नेत्रारुण्यनाशवर्णनमिदम्।

(८) प्रेयसामिति अनादरे षष्ठी। लान्ति गृह्णन्ति।

(९) प्रथमार्द्धे शृङ्गारोऽनुचितविषयकतया, द्वितीयार्द्धे तु रतिरूपो भावः शत्रुविषयकतया आभासः।

(१०) वैरिणां गर्व्वरूपो भावस्तस्य प्रशमः राजविषयकरतिभावेऽङ्गम्।

साकं कुरङ्गकदृशा मधुपानलीलां
कर्त्तुं सुहृद्भिरपि वैरिणि ते प्रवृत्ते।
अन्याभिधायि तव नाम विभो! गृहीतम्
केनापि तत्र विषमामकरोदवस्थाम्॥

अत्र त्रासोदयः।

असोढा तत्कालोल्लसदसहभावस्य तपसः,
कथानां विस्रम्भेष्वथ च रसिकः शैलदुहितुः।
प्रमोदं वो दिश्यात्कपटवटुवेशापनयने
त्वराशैथिल्याभ्यां युगपदभियुक्तः स्मरहरः॥

अत्रावेगधैर्य्ययोः सन्धिः।

पश्येत्कश्चित्, चल चपल रे! का त्वराऽहं कुमारी,
हस्तालम्बं वितर, हहहा, व्युत्क्रमः, क्वासि यासि।
इत्थं पृथ्वीपरिवृढ! भवद्विद्विषोऽरण्यवृत्तेः
कन्या कञ्चित् फलकिसलयान्याददानाऽभिधत्ते॥

अत्र शङ्कासूयाधृतिस्मृतिश्रमदैन्यविबोधौत्सुक्यानां शवलता।

एते च रसवदाद्यलङ्काराः (११)। यद्यपि भावोदय-भावसन्धि-भावशवलत्वानि नालङ्कारतयोक्तानि (१२), तथापि कश्चित् (१३) ब्रूयादित्येवमुक्तम्। यद्यपि स नास्ति कश्चिद्विषयः, यत्र ध्वनिगुणीभूतव्यङ्ग्ययोः स्वप्रभेदादिभिः सह सङ्करः संसृष्टिर्वा

---

(११) एते गुणीभूता रसादयः, गुणीभूतो रसो रसवत्, भावस्तु प्रेयः, रसाभासभावाभासौ ऊर्ज्जस्वि, भावशान्त्यादिः समाहित इति।

(१२) व्यक्तिविवेककृद्भिः।

(१३) ध्वनिकारः।

नास्ति, तथापि प्राधान्येन व्यपदेशा भवन्तीति क्वचित् केनचिद्व्यवहारः (१४)।

> जनस्थाने भ्रान्तं कनकमृगतृष्णान्धितधिया,
> वचो वैदेहीति प्रतिपदमुदश्रु प्रलपितम्।
> कृतालङ्का भर्तुर्वदन परिपाटीषु घटना
> मयाप्तं रामत्वं कुशलवसुता न त्वधिगता (१५)॥

अत्र शब्दशक्तिमूलानुरणनरूपो रामेण सहोपमानोपमेयभावो वाच्यताङ्गतां नीतः (१६)।

> आगत्य संप्रति वियोगविसंष्ठुलाङ्गीम्
> अम्भोजिनीं क्वचिदपि क्षपितत्रियामः।
> एतां प्रसादयति पश्य शनैः प्रभाते
> तन्वङ्गि! पादपतनेन सहस्ररश्मिः॥

(१४) प्राधान्यञ्च अतिशयितचमत्कृतिमत्तया; तथाच अङ्गीभूतरसादीनां चमत्कृत्यातिशय्ये गुणीभूतव्यङ्ग्यत्वं, अङ्गिमत्तयात्वे ध्वनित्वमिति।

(१५) कनकविषये मृगतृष्णा, देहीतिवचः, भर्तुः पालकस्य परिपाटीषु सेवारचनासु का घटना आयासः अलं अत्यर्थं न कृता, तद्वद्, कुशलं वसु धनं यस्य तस्य भावस्तत्ता, अथच कुशलवौ सुतौ यस्याः सा सीता।

(१६) शब्दशक्तिमहिम्ना पादत्रयद्योत्या उपमा वाच्यायाः रामत्वप्राप्तेः उपकारकतयैव कवेरभिप्रेतेत्यङ्गत्वम्। 'रामत्वम् आप्तम्' इत्यनेनैव वाच्यार्थसिद्धिरिति नास्याः वाच्यसिद्ध्यङ्गत्वम्, उपमाया वाच्यत्वाभावाच्चात्रोपमा अलङ्कारः। 'वाच्यतां नीतः' इति पाठे तु 'पादत्रयद्योत्यापि रामेण सहोपमा 'मयाप्तं रामत्वम्' इत्यनेन वाच्यतां नीता, तदङ्गञ्च, शब्दशक्तिमूलानुरणनरूपो द्वितीयोऽर्थः'-इति प्रदीपानुसरणमेव साधीयः।

अत्र नायकवृत्तान्तोऽर्थशक्तिमूलो वस्तुरूपो निरपेक्षरविकमलिनीवृत्तान्ताध्यारोपणेनैव स्थितः (१७) ॥ [२]

वाच्यसिद्ध्यङ्गं यथा,—

भ्रमिमरतिमलसहृदयतां प्रलयं मूर्च्छां तमः शरीरसादम् ।
मरणञ्च जलदभुजगजं प्रसह्य कुरुते विषं वियोगिनीनाम् ॥

अत्र हालाहलं व्यङ्ग्यं भुजगरूपस्य वाच्यस्य सिद्धिकृत् (१८) ।

यथा वा,—

गच्छाम्यच्युत ! दर्शनेन भवतः किं तृप्तिरुत्पद्यते ?
किं त्वेवं विजनस्थयोर्हतजनः सम्भावयत्यन्यथा ।
इत्यामन्त्रणभङ्गिसूचितवृथावस्थानखेदालसाम्
आश्लिष्यन् पुलकोत्कराञ्चिततनुर्गोपीं हरिः पातु वः ॥

---

(१७) दर्शितोदाहरणे विनैवानुनयं अपगतमाना नायिका सख्या उपालभ्यते, तथाहि सहस्ररश्मिरिति बहुनायिकावत्त्वं ध्वन्यते, कश्चिदपीति उपनायिकागृह एवेति निश्चयाभावः, तत्रापि यामत्रयमेव नाधिकमिति, तथापि अयं पादपतनेनानुनयति, ईदृशो हि कामिनोर्व्यवहारः, त्वं पुनर्बहुकालं परनायिकासक्ते विनैवानुनयं प्रसन्नाऽसीत्युपालम्भः । एवञ्च नायकनायिकावृत्तान्तकथनमेवाभिप्रेतम्, स च वृत्तान्तो व्यज्यमानः वाच्ये रविकमलिनीवृत्तान्तेऽभिन्नतया च आरोप्यमाणः तस्य प्रकृतार्थतां सम्पादयन् तदुत्कर्षमाधत्ते इत्यङ्गतयैवास्ते । यत्र स्वत एव सिद्धरूपस्य वाच्यस्य व्यङ्ग्येनोत्कर्षाधानमात्रं तत्रायं प्रभेदः, यत्र पुनर्व्यङ्ग्यं विना वाच्यमेवात्मानं न लभते, तत्र वाच्यसिद्ध्यङ्गत्वमिति व्यङ्ग्यसापेक्षनिरपेक्षसिद्धिभ्यामनयोर्भेदः । अयमेव समासोक्तिरलङ्कारः ।

(१८) जलद एव भुजग इतिरूपणं वाच्यं तावत् न सिध्यति, यावत् विषमित्यनेन जलवाचकेन हालाहलं न व्यज्यते इति । निहतार्थत्वं श्लेषादौ न दोषः ।

अत्र अच्युतादिपदव्यङ्ग्यम् आमन्त्रणेत्यादिवाच्यस्य (१९)। एतच्चैकत्र एकवक्तृगतत्वेन, अपरत्र भिन्नवक्तृगतत्वेनेत्यनयोर्भेदः। [३]

अस्फुटं यथा,—

अदृष्टे दर्शनोत्कण्ठा दृष्टे विच्छेदभीरुता।
नादृष्टेन न दृष्टेन भवता लभ्यते सुखम्॥

अत्रादृष्टो यथा न भवसि, वियोगभयञ्च यथा नोत्पद्यते, तथा कुर्य्या इति क्लिष्टम्। [४]

सन्दिग्धप्राधान्यं यथा,—

हरस्तु किञ्चित्परिवृत्तधैर्य्यश्चन्द्रोदयारम्भ इवाम्बुराशिः।
उमामुखे बिम्बफलाधरोष्ठे व्यापारयामास विलोचनानि॥

अत्र परिचुम्बितुमैच्छदिति किं प्रतीयमानं, किंवा विलोचनव्यापारणं वाच्यं प्रधानमिति सन्देहः। [५]

तुल्यप्राधान्यं यथा,—

ब्राह्मणातिक्रमत्यागो भवतामेव भूतये।
जामदग्न्यस्तथा मित्रम्, अन्यथा दुर्मनायते॥

अत्र जामदग्न्यः सर्व्वेषां क्षत्रियाणामिव रक्षसां क्षणात् क्षयं करिष्यतीति व्यङ्ग्यस्य वाच्यस्य च समं प्राधान्यम्। [६]

काक्वाक्षिप्तं यथा,—

मथ्नामि कौरवशतं समरे न कोपात्,
दुःशासनस्य रुधिरं न पिवाम्युरस्तः।

---

(१९) अच्युत! मद्विधनायिकासन्निधावपि अस्खलितधैर्य्यं, यतो नोपभोगाय यतसे, दर्शनेन न तृप्तिः किन्तु उपभोगेन, उपभोगे सति दुर्जनतया अन्यथाख्यातेनापि न दुःखायेति व्यङ्ग्यम्, स्थितिमदिति शेषः।

संचूर्णयामि गदया न सुयोधनोरू,
सन्धिं करोतु भवतां नृपतिः पणेन॥

अत्र मथ्नाम्येवेत्यादि व्यङ्ग्यं वाच्यनिषेधसहभावेन स्थितम्(२०)। [७]

असुन्दरं यथा,—

वाणीरकुडंगुड्डीणसउणिकोलाहलं सुणन्तीए।
घरकम्मवावड़ाए वहूए सीअन्ति अङ्गाइं (२१)॥

अत्र दत्तसङ्केतः कश्चिल्लतागहनं प्रविष्ट इति व्यङ्ग्यात् सीदन्त्यङ्गानीति वाच्यं सचमत्कारम्॥ [८]

**एषां भेदा यथायोगं वेदितव्याश्च पूर्व्ववत्॥ २॥**

यथायोगमिति

'व्यज्यन्ते वस्तुमात्रेण यदाऽलंकृतयस्तदा।
ध्रुवं ध्वन्यङ्गता तासां काव्यवृत्तेस्तदाश्रयात् (२२)॥'

---

(२०) कौरवकुलनिधननिश्चितप्रतिज्ञस्य भीमस्य न मथ्नामीत्याद्युक्तिरेव बाधिता, अतो न मथ्नामीति काकुः न मथ्नामीति नेत्येवं मथननिषेधनिषेधेन मथनावधारणात्मकं व्यङ्ग्यं हठेनैव उपस्थापयन् मथननिषेधस्य वाक्यार्थीभूतस्य प्रतीतिसमकालमेव तं व्यङ्ग्यार्थं प्रत्याययति, काकुं विना वाक्यार्थस्य बाधितत्वेन अप्रतीतेः। काकाक्षिप्तं व्यङ्ग्यं वाक्यार्थस्य विरुद्धरूपस्य बाधमपाकरोति, वाच्यसिद्ध्यङ्गं तु पदार्थस्य सिद्धिकृदिति।

(२१) वानीरकुञ्जोड्डीनशकुनिकोलाहलं शृण्वन्त्याः।
गृहकर्म्मव्यापृताया वध्वाः सीदन्त्यङ्गानीति स०॥

(२२) ध्वन्यङ्गता वाच्यवस्त्वपेक्षयाऽलङ्कारत्वेनैवातिशायितया ध्वनि-त्वनिर्व्वाहकता, काव्यवृत्तेः काव्यव्यवहारस्य, तदाश्रयात् अलङ्कारसापेक्ष-त्वात्। अयं भावः, वाच्यात् वस्तुनोऽलङ्कारस्य चारुत्वनियमेन अगूढ़-

—इति ध्वनिकारोक्तदिशा वस्तुमात्रेण यत्रालङ्कारो व्यज्यते, न तत्र गुणीभूतव्यङ्ग्यत्वम् (२३)।

**सालङ्कारैर्ध्वनेस्तैश्च योगः संसृष्टिसङ्करैः ।**

सालङ्कारैरिति तैरेवालङ्कारैः (२४), अलङ्कारयुक्तैश्च तैः। तदुक्तं ध्वनिकृता,—

'स गुणीभूतव्यङ्ग्यैः सालङ्कारैः सह प्रभेदैः स्वैः ।
सङ्करसंसृष्टिभ्यां पुनरप्युद्योतते बहुधा इति ॥'

---

त्वादिना व्यङ्ग्यत्वाधीनचारुत्वापनयेऽपि अलङ्कारत्वलता चारुताऽव्याहतैवेति सर्व्वत्रैव वस्तुव्यङ्ग्यालङ्कारस्थले ध्वनित्वम् ।

(२३) स्वतःसम्भवि-कविप्रौढोक्तिसिद्ध-कविनिबद्धप्रौढोक्तिसिद्ध-वस्तु-व्यङ्ग्यालङ्काराणां पदवाक्यप्रबन्धगतत्वेन त्रिरूपतया वस्तुव्यङ्ग्यालङ्कारस्य नवविधत्वमिति ध्वनिभेदसंख्यैकपञ्चाशतो नवन्यूनेन अष्टानां भेदानां प्रत्येकं द्वाचत्वारिंशद्विधत्वमिति मिलित्वा गुणीभूतव्यङ्ग्यस्य षट्त्रिंशदधिकत्रिशत-भेदाः (३३६) शुद्धाः । (महेश्वरस्तु वस्तुव्यङ्ग्यालङ्कारस्य प्रभेदान् विचारन् 'सप्ताधिकचतुःशतरूपम् [४०७]' इति बभाण)। एवमस्य संसृष्टिसंकराभ्यां चतुरशीत्यधिकपञ्चशताधिकैकपञ्चाशत्सहस्रोत्तरचतुर्लक्षभेदाः (४५१५८४) संकीर्णाः, शुद्धैः सह विंशत्यधिकनवशतोत्तरैकपञ्चाशत्सहस्राधिकचतुर्लक्ष-भेदाः (४५१९२०), गुणनप्रकारस्तु ध्वनिस्थलीयोक्तदिशाऽवसेयः ।

(२४) तैरेव गुणीभूतव्यङ्ग्यप्रभेदैरेव, अलङ्कारैः रसवदादिपदाभिधेयैः । अत्र च सालङ्कारैरिति भिन्नार्थकयोरेकरूपपदयोरेकशेषः, एकत्र (अलङ्कार-पदस्य भावप्राधान्येन निर्द्दिष्टस्यालङ्कारत्वार्थकतया) सालङ्कारपदस्य अल-ङ्कारोऽर्थः, अपरत्र तु अलङ्कारसहितोऽर्थः । सर्व्वत्रैव काव्येऽलङ्कारसद्भाव-नियमेन अलङ्कारासंकीर्णो ध्वनिगुणीभूतव्यङ्ग्ययोरन्योन्ययोग एव दुर्लभ इत्याशङ्कापनुत्तये रसवदाद्यलंङ्कारस्यैव एव स्वभिन्नालङ्कारान्तराभावसम्भवेन तत्सम्भव इति प्रदर्शनार्थमित्यप्युक्तम् । वस्तुतः गुणीभूतव्यङ्ग्येन अलङ्कारेण

अन्योन्ययोगादेवं स्यात् भेदसङ्ख्याऽतिभूयसी ॥३॥

'एवम्' अनेन प्रकारेण, अवान्तरभेदगणनेन, अतिप्रभूततरा गणना, तथाहि शृङ्गारस्यैव भेदप्रभेदगणनायामानन्त्यं, का गणना तु सर्व्वेषाम् ।

सङ्कलनेन पुनरस्य ध्वनेस्त्रयो भेदाः, व्यङ्ग्यस्य त्रिरूपत्वात्, तथाहि किञ्चिद्वाच्यतां सहते, किञ्चित्त्वन्यथा, तत्र वाच्यतासहमविचित्रं विचित्रं चेति ; अविचित्रं वस्तुमात्रं, विचित्रं तु अलङ्काररूपं ( यद्यपि प्राधान्येन तदलङ्कार्य्यं, तथापि ब्राह्मणश्रमणन्यायेन तथोच्यते ) ; रसादिलक्षणस्त्वर्थः स्वप्नेऽपि न वाच्यः, स हि रसादिशब्देन शृङ्गारादिशब्देन वाऽभिधीयेत, न चाभिधीयते, तत्प्रयोगेऽपि विभावाद्यप्रयोगे तस्य अप्रतिपत्तेस्तदप्रयोगेऽपि विभावादिप्रयोगे तस्य प्रतिपत्तेश्चेत्यन्वयव्यतिरेकाभ्यां विभावाद्यभिधानद्वारेणैव प्रतीयते इति निश्चीयते, तेनासौ व्यङ्ग्य एव, मुख्यार्थबाधाद्यभावान्न पुनर्लक्षणीयः ।

अर्थान्तरसंक्रमितवाच्यात्यन्ततिरस्कृतवाच्ययोर्वस्तुमात्ररूपं व्यङ्ग्यं विना लक्षणैव न भवतीति प्राक् [१७। ६] प्रतिपादितम् । शब्दशक्तिमूले तु अभिधाया नियन्त्रणेनानभिधेयस्यार्थान्तरस्य, तेन सहोपमादेरलङ्कारस्य च निर्विवादं व्यङ्ग्यत्वम् । अर्थशक्तिमूलेऽपि, विशेषे (२५) सङ्केतः कर्त्तुं न युज्यते इति

---

च ध्वनेरन्योन्ययोग इत्येव परमार्थः । एतैः प्रभेदैरुपनिबध्यमानः पुरातनोऽप्यर्थो नवनवीभवतीति सप्रयोजनं ध्वनिभेदप्रदर्शनमिति प्रदीपः ।

(२५) विशेषे घटित्वादिव्यक्तौ, आनन्त्यादिदोषात् न तत्र शक्तिः ।

सामान्यरूपाणां पदार्थानामाकाङ्क्षासन्निधियोग्यतावशात् परस्परसंसर्गो यत्रापदार्थोऽपि विशेषरूपो वाक्यार्थस्तत्राभिहितान्वयवादे का वार्त्ता व्यङ्ग्यस्याभिधेयतायाम् (२६)।

येऽप्याहुः (२७),—

'शब्दवृद्धाभिधेयांश्च प्रत्यक्षेणात्र पश्यति।
श्रोतुश्च प्रतिपन्नत्वमनुमानेन चेष्टया॥
अन्यथानुपपत्त्या तु बोधेच्छक्तिं द्वयात्मिकाम्।
अर्थापत्त्याऽवबुध्येत सम्बन्धन्त्रिप्रमाणकम्'.(२८)॥

---

(२६) 'सामान्यरूपाणां' सामान्यतो गोत्वादिना सर्व्वेषां गवादिव्यक्तीनां, 'यत्र' मते, 'विशेषरूपः' वृत्तित्वानुकूलत्वादिविशेषात्मकः, 'अपदार्थः' अभिधयाऽनुपस्थितः, 'वाक्यार्थः' तात्पर्य्यवृत्त्या वाक्यप्रतिपाद्यः। अपदार्थोऽपीत्यपिभिन्नक्रमे, वाक्यार्थोऽपि अपदार्थ इत्यन्वयः। कथम्भावः, यन्मते वाच्यार्थबोधविषयीकृतमपि संसर्गं शक्त्योपस्थापनपरिक्षीणशक्तिरभिधा नावभासयतीति तदर्थं तात्पर्य्यवृत्तिरवलम्ब्यते, तन्मते वाक्यार्थबोधोत्तरकालीनायां व्यङ्ग्योपस्थितौ नैवाभिधायाः प्रभाव इति किमु वक्तव्यम्।

(२७) येऽपि अन्विताभिधानवादिनः आहुरित्यन्वयः।

(२८) 'शब्दः' देवदत्त, गामानयेत्यादि वाक्यं, 'वृद्धौ' उत्तममध्यमौ प्रयोज्यप्रयोजकौ, 'अभिधेयः' गवानयनादिरूपः। 'श्रोतुः' मध्यमवृद्धस्य, 'प्रतिपन्नत्वं' वाक्यार्थाभिज्ञत्वं, 'चेष्टया' तस्य गवानयनानुकूलव्यापारेण (हेतुना), 'अनुमानेन' 'श्रुतादेव गामानयेति वाक्यात् मध्यमवृद्धः, गवानयनं स्वकर्त्तव्यतया उत्तमवृद्धानुमतम्-इति जानाति'-इति रीत्याऽनुमित्या 'बोधेत्' इत्यपिमेणान्वयः। 'द्वयात्मिकां' वाचकत्वं वाच्यत्वञ्चेति द्विविधां, 'शक्तिं' सङ्केतापरनामकं वाक्यवाक्यार्थयोःसम्बन्धं; 'अन्यथानुपपत्त्या' 'गामानयेत्यादिवाक्यश्रवणात् गवानयनाद्यर्थज्ञानं एतद्वाक्येनैतदर्थस्य वाच्यवाचकसम्बन्धं विना अनुपपन्नम्'-इत्यनुपपत्त्या (हेतुभूतया), 'अर्थापत्त्या' प्रमाणेन बोधेदित्यन्वयः। अनन्तरञ्च 'त्रिप्रमाणकं' उक्तरीत्या प्रत्यक्षानु

-इति प्रतिपादितदिशा 'देवदत्त! गामानय' इत्याद्युत्तमवृद्धवाक्यप्रयोगाद्देशात् देशान्तरं सास्नादिमन्तमर्थं मध्यमवृद्धे नयति सति, 'अनेनास्माद्वाक्यादेवंविधोऽर्थः प्रतिपन्नः'-इति तच्चेष्टयाऽनुमाय तयोरखण्डवाक्यवाक्यार्थयोरर्थापत्त्या वाच्यवाचकभावलक्षणसम्बन्धमवधार्य्य बालस्तत्र व्युत्पद्यते ; परतः 'चैत्र ! गामानय, देवदत्त ! अश्वमानय, देवदत्त ! गां नय' इत्यादिवाक्यप्रयोगे तस्य तस्य शब्दस्य तं तमर्थमवधारयतीति (२९) अन्वयव्यतिरेकाभ्यां प्रवृत्तिनिवृत्तिकारि वाक्यमेव प्रयोगयोग्यमिति वाक्यस्थितानामेव पदानां अन्वितैः पदार्थैरन्वितानामेव संङ्केतो गृह्यते इति विशिष्टा एव पदार्था वाक्यार्थः, नतु पदार्थानां वैशिष्ट्यम् (३०)। यद्यपि वाक्यान्तर-

---

मानार्थापत्तिरूपप्रमाणत्रयाधिगतं, 'सम्बन्धं' सङ्केतं 'अवबुध्येत' आवापोद्वापाभ्यां गोशब्दस्य गौरेवार्थः, अम्विभक्तेः कर्मत्वमिति रीत्या विशेषतो पदपदार्थनिष्ठतया निर्णीयेत, सर्व्वत्र बालकः कर्त्ता। एतत् सर्व्वं वृत्तौ स्पष्टम्।

(२९) आवापोद्वापाभ्यां विशेषे सङ्केतं दर्शयति परत इति, 'चैत्र ! गामानय' इति आवापः, देवदत्तेत्यादिकस्तु उद्वापः। अयमभिसन्धिः, गोपदसत्त्वे एव गवार्थप्रतीतिः, तदसत्त्वे च तदप्रतीतिरिति गोपदस्यैव गौरर्थः, एवमन्यत्रापि।

(३०) 'अन्वितानामेव' अन्वितेषु पदार्थेषु। 'विशिष्टाः' अन्विताः। 'पदार्थाः' पदशक्याः। 'वाक्यार्थः' वाक्यप्रतिपाद्यः। 'वैशिष्ट्य' सम्बन्धः, स च पदाशक्योऽपि तात्पर्य्यवशाद् वाक्यप्रतिपाद्य इत्यर्थः। अत्रायं निष्कर्षः, सङ्केतग्रहो हि उक्तरीत्या व्यवहारादेव प्रथमतो भवति (व्याकरणादीनामन्येषां सङ्केतग्राहकाणां शाब्दबोधसापेक्षतया प्राथम्याभावात्), व्यवहारश्च मध्यमवृद्धस्य गवानयनप्रवृत्त्यादिरूपः सर्व्वदैव उत्तमवृद्धोक्त-गामानयेति-वाक्यश्रवणादेव भवति, न कदापि गोपदमात्रश्रवणात्, वाक्यस्थितानान्तु

प्रयुज्यमानान्यपि प्रत्यभिज्ञाप्रत्ययेन तान्येवैतानि पदानीति निश्चीयन्ते इति पदार्थान्तरमात्रेणान्वितः पदार्थः सङ्केत-गोचरः, तथापि सामान्यावच्छादितो विशेषरूप एवासौ प्रति-पद्यते, व्यतिषक्तानां पदार्थानां तथाभूतत्वात्(३१)-इत्यन्विता-भिधानवादिनः। तेषामपि मते सामान्यविशेषरूपः पदार्थः सङ्केतविषय इत्यतिविशेषभूतो वाक्यार्थान्तर्गतोऽसङ्केतितत्वाद् अवाच्य एव यत्र पदार्थः प्रतिपद्यते, तत्र दूरे अर्थान्तरभूतस्य

---

पदानामर्थाः (गामानयेत्यादौ आनयनेन, गां रक्षेत्यादौ रक्षणेनेत्येवं रीत्या) नियतमेवापरपदार्थान्विताः, अतो व्यवहारमूलकः सङ्केतग्रहोऽन्वितगवा-दिष्वेव भवतीति तदुत्तरभाविनोऽपि व्याकरणादिभ्यः शक्तिग्रहास्तथैवान्वित-पदार्थविषयका इति नान्वयबोधार्थं तात्पर्य्यवृत्तिः स्वीकार्य्येति।

(३१) अयं भावः, गामानयेत्यादौ यदेव आनयपदं, तदेव अश्वमानय-इत्यादावपीति-(पूर्व्वज्ञातस्य ज्ञानं प्रत्यभिज्ञा)-प्रत्यभिज्ञाबलेनोभयत्रैकमेव आनय-पदमिति निर्णीयते, एवञ्च आनय-पदस्य गवान्वितत्वं अश्वान्वितत्वं वा नार्थः, किन्तु उभयसाधारण्याय सामान्यतोऽपरपदार्थान्वितानयनत्वेन अपरपदार्थान्वितानयनमेवार्थः इत्येव वाच्यं, तथा च गामानयेत्यादौ गवा-न्वयरूपान्वयविशेषबोधनाय तात्पर्य्यवृत्तिः स्वीकार्य्येत्याशङ्का, यथा न्यायमते गोत्वेन सामान्यतः शक्तिग्रहेऽपि आकाङ्क्षादिवशात् गोविशेषस्य बोधः, तथा सामान्यतोऽपरपदार्थान्वितत्वेन शक्तिग्रहेऽपि आकाङ्क्षादिवशात्, समभिव्याहृत-गामितिपदार्थान्वयबलाच्च गवान्वितत्वरूपविशेषान्वयस्य बोधः, गामितिपदार्थेन अन्वितस्यानयपदार्थस्यैव गवान्वितानयनरूपत्वादिति परि-हरति यद्यपीति। 'वाक्यान्तरप्रयुज्यमानानि' 'गामानय' इतिवाक्यभिन्ने 'अश्व-मानय' इति वाक्ये उक्तानि, 'सामान्यावच्छादितः' गोत्वेन धटकगव इव, अपर-पदार्थान्वितानयनत्वादिसामान्यधर्मप्रकारेण गृहीतसङ्केतः सर्व्व एव आनयना-द्यर्थः, 'व्यतिषक्तानां' परस्परमन्वितानां, 'तथाभूतत्वात्' विशेषरूपत्वात्।

निःशेषच्युतेत्यादौ विध्यादेश्चर्चा (३२)। अनन्वितो(३३)ऽर्थो ऽभिहितान्वये, पदार्थान्तरमात्रेणान्वितस्त्वन्विताभिधाने, अन्वितविशेषस्त्ववाच्य एव-इत्युभयनयेऽप्यपदार्थ एव वाक्यार्थः।

यदप्युच्यते, 'नैमित्तिकानुसारेण निमित्तानि कल्प्यन्ते'-इति (३४)। तत्र निमित्तत्वं कारकत्वं ज्ञापकत्वं वा ? शब्दस्य प्रकाशकत्वान्न कारकत्वम्; ज्ञापकत्वन्तु अज्ञातस्य कथं ? ज्ञातत्वं च सङ्केतेनैव, स चान्वितमात्रे, एवञ्च निमित्तस्य नियतत्वं यावन्न निश्चितं, तावन्नैमित्तिकस्य प्रतीतिरेव

---

(३२) 'सामान्यविशेषरूपः' 'सामान्येन' अपरपदार्थान्वितानयनत्वादिसाधारणधर्मेण, 'विशेषरूपः' वस्तुगत्या गवानयनादिरूपोऽर्थः। 'यत्र' मते 'अतिविशेषभूतः' गवानयनत्वादिना गवानयनादिरूपः पदार्थः 'असङ्केतितत्वादवाच्य एव' 'वाक्यार्थान्तर्गतः' गामानयेत्यादिवाक्यार्थमध्यनिविष्टः प्रतिपद्यते इत्यन्वयः। 'चर्चा' अनुसन्धानं, वाच्यत्वस्येति शेषः। अयं भावः, वस्तुत्वेन वस्तुपदवाच्योऽपि घटो यथा घटत्वेन तदवाच्यः, तथा अपरपदार्थान्वितानयनत्वेन (अभिहितान्वयवादे केवलेनानयनत्वेन) आनयपदवाच्यमपि गवानयनं गवानयनत्वेन तदवाच्यमेवेत्यसङ्केतिते तस्मिन् वाक्यगम्ये प्राथमिकबोधविषयीकृतेऽपि न अभिधा व्यापार इति नितरामेव अनन्तरभाविनि व्यङ्ग्यबोधेऽभिधाविरामः।

(३३) उभयमतसारमनूद्य दोषमुद्घाटयति अनन्वित इति अनन्तरोक्तभावार्थेन व्याख्यातप्रायमेतत्।

(३४) यस्मिन् सति ज्ञाते वा यावान् अर्थो जायते ज्ञायते वा तावत्येव तस्मिन् तस्य ( यथाक्रमं कारकत्वरूपो ज्ञापकत्वरूपो वा ) निमित्तभाव इतिन्यायेन शब्दश्रवणानन्तरं यावानर्थः (वाच्यो वा व्यङ्ग्यो वा) प्रतीयते तत्र सर्व्वत्रैव उपस्थितत्वात् शब्द एव निमित्तमिति किमनेन विचाराडम्बरेण इति पूर्व्वपक्षः।

कथम्? इति 'नैमित्तिकानुसारेण निमित्तानि कल्प्यन्ते' इति अविचारिताभिधानम् (२५)।

ये (२६) त्वभिदधति, 'सोऽयमिषोरिव दीर्घदीर्घतरो व्यापारः' इति, 'यत्परः शब्दः स शब्दार्थः' इति च विधिरेवात्र वाच्य इति। तेऽप्यतात्पर्य्यज्ञास्तात्पर्य्यवाचो युक्तेर्देवानांप्रियाः (२७)। तथाहि (२८) 'भूतभव्यसमुच्चारणे भूतं भव्याय

---

(२५) 'प्रकाशकत्वात्' अर्थबोधकत्वात्, 'न कारकत्वं' नार्थजनकत्वं, 'सङ्केतेन' शक्तिरूपसङ्केतवत्तया, 'नियतनिमित्तत्वं' अव्यभिचरितनिमित्तभावः, 'नैमित्तिकस्य प्रतीतिः' इदमेतन्निमित्तकमिति ज्ञानम्। अयं सिद्धान्तसारः, व्यङ्ग्योपस्थितौ शब्दस्य ज्ञापकत्वरूपं निमित्तत्वमस्माकमपि सम्मतं, तत्र नास्माकं विवादः, परन्तु व्यञ्जनाया अस्वीकारे तन्न सम्भवति, शब्दस्य अर्थनिमित्तत्वं हि व्यापारसापेक्षमेव नियतम्, यथा वाच्यार्थलक्ष्यार्थयोरभिधालक्षणे व्यापारौ, तथा इहापि कोऽपि व्यापारोऽवश्यमङ्गीकार्य्यः, अन्यथा हि शब्दस्य निमित्तत्वानिश्चयेन नैमित्तिको व्यङ्ग्यार्थः-इत्येव भवदभिमतोऽपि न सिद्ध्यति, यदि तु व्यापारं विनाऽपि शब्दस्य निमित्तत्वं स्यात् तदा अभिधालक्षणे अपि दत्तजलाञ्जली स्यातामित्यस्माभिरुच्यते,-इत्यभिप्रायमबुद्ध्वाभिधानं अविचारविजृम्भितमेव।

(२६) यथा सुनिपुणेन संहितेषुरेक एकेनैव वेगरूपव्यापारेण रिपोर्वर्म्मच्छेदमर्म्मभेदप्राणप्रयाणानि विधत्ते, तथा कविप्रयुक्त एक एव शब्द एकेनैव अभिधाव्यापारेण पदार्थोपस्थित्यन्वयबोधव्यङ्ग्यप्रतीतीः जनयतीति वाच्य एव व्यङ्ग्यार्थः, अपिच यत्र यदर्थे यस्य शब्दस्य तात्पर्य्यं, तत्र स एव तच्छब्दार्थ इत्यर्थकेन 'यत्परः'-इतिनियमेन निःशेषेत्यादौ अन्तिकगमनविधिस्तात्पर्य्यविषयतया वाच्य एवेति निश्चीयते,-इति मतमुत्थापयति ये त्वेति।

(२७) 'तात्पर्य्यवाचः' यत्परः-इति मीमांसकनियमोक्तेः। देवानांप्रियाः पशवः।

(२८) 'यत्परः' इति नियमस्येत्यमर्थो मीमांसकैर्निरणायि, वाक्या-

उपदिश्यते' इति कारकपदार्थाः क्रियापदार्थेनान्वीयमानाः प्रधानक्रियानिर्वर्त्तकस्वक्रियाभिसम्बन्धात् साध्यायमानतां प्राप्नुवन्ति (३९), ततश्चादग्धदहनन्यायेन यावदप्राप्तं तावद्विधीयते (४०), यथा ऋत्विक्प्रचरणे प्रमाणान्तरात् सिद्धे, 'लोहितोष्णीषा ऋत्विजः प्रचरन्ति' इत्यत्र लोहितोष्णीषत्वमात्रं (४१)विधेयं; हवनस्यान्यतः(४२)सिद्धे, 'दध्ना जुहोति' इत्यादौ

---

न्तर्गतपदार्थेषूपस्थितेषु सिद्धरूपाणां प्राप्ततया विधानमनर्थकमिति साध्यरूपस्यैव विधेयत्वं, यस्य च विधेयत्वं तत्रैव तद्वाक्यस्य तात्पर्य्यं, यस्मिंश्च तात्पर्य्यं स एव वाक्यार्थः, तदर्थबोधनायैव तद्वाक्यं प्रयुक्तं, तदंशस्य प्रमाणान्तराप्राप्ततया तदंश एव तद्वाक्यस्यानधिगतार्थबोधकत्वेन प्रामाण्यनिर्व्वाहः। एतदेव, प्रथमतः, 'तथा हि, इत्यादिना 'उपात्तस्यैव शब्दस्यार्थे तात्पर्य्यम् न तु प्रतीतमात्रे' इत्यन्तेन दर्शयति ।

(३९) 'भूतं' सिद्धं कारकादि, 'भव्यं' साध्यं क्रियारूपं, 'समुच्चारणे' सहोच्चारणे, 'कारकपदार्थाः' गामानयेत्यादौ गामित्यादयः, 'क्रियापदार्थेन' आनयादिपदार्थेन, 'अन्वीयमानाः' सम्बद्धाः, 'प्रधानक्रियाया' आनयनादिरूपाया, 'निर्व्वर्त्तिका,' सम्पादयित्री, या 'स्वस्य' गोः 'क्रिया' चलनरूपा, तस्या 'अभिसम्बन्धात्' आश्रयत्वात् 'साध्यायमानतां' 'प्राप्नुवन्ति' साध्या इव भवन्ति । यथा पूर्व्वसत्त्वस्यापि घटस्य रक्ततादशायां 'रक्तो घटो जातः' इति व्यवहारः, तथा सिद्धरूपाणामपि कारकाणां साध्यक्रियासम्बन्धात् साध्यरूपत्वं भाक्तमिति भावः ।

(४०) 'ततश्च' उपदेशस्य भव्यार्थकत्वादेव । यथा तृणाग्नितभस्मराशौ अग्निरदग्धमेव तृणं दहति न भस्म, तथा साध्यान्वितसिद्धेषु साध्यमेव विधीयते न सिद्धमिति ।

(४१) 'प्रमाणान्तरात्' 'सोष्णीषा विनीतवसना ऋत्विजः प्रचरन्ति' इति वाक्यात् । 'लोहितोष्णीषत्वमात्रं' उष्णीषस्य लौहित्यमात्रम्।

(४२) 'अन्यतः' 'अग्निहोत्रं जुहोति' इति वाक्यात् ।

दुग्धादेः करणत्वमात्रं विधेयं। क्वचिदुभयविधिः, क्वचित्त्रिविधिरपि, यथा 'रक्तं पटं वय' इत्यादौ एकविधिर्द्विविधिस्त्रिविधिर्वा (४३)। ततश्च 'यदेव विधेयन्तत्रैव तात्पर्य्यम्,' इति उपात्तस्यैव शब्दस्यार्थे तात्पर्य्यं न तु प्रतीतमात्रे, एवं हि 'पूर्व्वो धावति' इत्यादौ अपराद्यर्थेऽपि क्वचित्तात्पर्य्यं स्यात् (४४)।

यत्तु(४५) 'विषं भक्षय मा चास्य गृहे भुङ्क्थाः'-इत्यत्र 'एतद्गृहे न भोक्तव्यम्'-इत्यत्र तात्पर्य्यमिति स एव वाक्यार्थः-इत्युच्यते, तत्र चकार एकवाक्यतासूचनार्थः, न चाख्यातवाक्ययोर्द्वयोः अङ्गाङ्गिभाव इति विषभक्षणवाक्यस्य सुहृद्वाक्य-

---

(४३) रक्तगुण-पटभाव-वयनानां मध्ये एकस्य द्वयोस्त्रयाणां वा अभिज्ञाविधि शेषः।

(४४) उपात्तस्य उच्चरितस्य, अर्थे शब्दोपस्थितेऽर्थे, प्रतीतमात्रे तत्कालं येन केनापि ज्ञायमाने, पूर्व्वत्वं हि नियतमेवापरसापेक्षमिति पूर्वत्वज्ञानकालज्ञायमानः पश्चिमार्थः कदाचित् तात्पर्य्यविषयः सन् पूर्वशब्दवाच्यतां भजेत।

(४५) यदि हि उपात्तशब्दार्थ एव तात्पर्य्यं स्यात्, तदा 'विषं भक्षय' इति 'मा चास्य गृहे भुङ्क्थाः' इति च आख्यातान्तक्रियाद्वयघटितत्वेन वाक्यद्वयस्य एकस्मिन् एतद्गृहे न भोक्तव्यमित्यर्थे तात्पर्य्यं न स्यात्! अस्य अर्थस्य 'विषं भक्षय' इति वाक्यार्थत्वाभावादिति पूर्वपक्षः। सिद्धान्तस्त्वयं, मा चास्येति चकारेणाभ्यप्रयोजनकेनानयोरेकवाक्यत्वमेव लभ्यते, एकवाक्यत्वञ्चाख्यातक्रियाद्वयान्वितयोर्यथाश्रुतार्थे निरपेक्षयोरनयोर्न सम्भवति, नापि च विषभक्षणं सुहृदुपदेशयोग्यमिति विषं भक्षयेति वाक्यं स्वार्थे सबाधं सत् विषभक्षणादपि दुष्टमेतद्गृहे भोजनमित्यर्थं लक्षयत् 'मा चास्ये'ति वाक्यस्य हेतुत्वेनाङ्गतामापन्नञ्च सत् परस्परमेकवाक्यत्वं भजते इति एकवाक्यान्तर्व्वर्त्तिपदार्थे एव तात्पर्य्यमिति नियमस्य न व्यभिचारः।

त्मेन चङ्गता कल्पनीयेति 'विषभक्षणादपि दुष्टमेतद्गृहे भोजनमिति सर्व्वथा माऽस्य गृहे भुङ्क्थाः' इति उपात्तशब्दार्थे एव तात्पर्य्यम् ।

यदि च शब्दश्रुतेरनन्तरं यावानर्थो लभ्यते, तावति शब्दस्याभिधैव व्यापारः, ततः कथं 'ब्राह्मण ! पुत्रस्ते जातः', 'ब्राह्मण ! कन्यका ते गर्भिणी' इत्यादौ हर्षशोकादीनामपि न वाच्यत्वम् ? कस्माच्च लक्षणा ? लक्षणीयेऽप्यर्थे दीर्घदीर्घतराभिधाव्यापारेणैव प्रतीतिसिद्धेः, किमिति च श्रुति-लिङ्ग-वाक्य-प्रकरण-स्थान-समाख्यानां पूर्व्वपूर्व्वबलीयस्त्वम् ? (४६)-इत्य-

(४६) भगवता जैमिनिना "श्रुतिलिङ्गवाक्यप्रकरणस्थानसमाख्यानां समवाये पारदौर्बल्यमर्थविप्रकर्षात्" (३।३।१४) इति सूत्रेण यथाक्रमपठितानां द्वयोर्बहूनां वा एकत्र उपनिपाते परपरस्य विलम्बेनार्थोपस्थापकतया दुर्बलत्वमभिदधता पूर्व्वपूर्व्वस्य श्रुत्यादेः प्राबल्यं निरणायि ; यदि शब्दश्रुतेरनन्तरोपस्थितान् सर्व्वानेव प्रत्ययान् प्रति अभिधैव व्यापारः स्यात्, तदा श्रुत्युपस्थितार्थस्येव लिङ्गाद्यनुसन्धीतार्थानामप्यभिधेयतया सर्व्वेषां समकालमर्थोपस्थापकत्वप्रसक्त्या अर्थविप्रकर्षाभिधानं मुनेरनुचितं स्यात् । सूत्रार्थस्तु मीमांसाभाष्यादौ प्रदीपे च विशेषतः सोदाहरणं प्रदर्शितोऽपि प्रकृतानुपयोगितयोपेक्षितः, श्रुत्यादयस्तु

"श्रुतिर्द्वितीया, क्षमता च लिङ्गं
वाक्यं पदान्येव तु संहतानि।
सा प्रक्रिया या कथमित्यपेक्षा
स्थानं क्रमो, योगबलं समाख्या" ॥

इति सामान्यतो ज्ञेयाः । अत्रैकमुदाहरामि, "कदाचन स्तरीरसि नेन्द्र सश्चसि" इत्यादिकाया ऋचः विनियोजनाय श्रुतिरियं प्रवर्त्तते,- "ऐन्द्र्या गार्हपत्यमुपतिष्ठते" इति, तत्र सन्देहः, किं ऐन्द्री इन्द्रसम्बन्धिनी

न्विताभिधानवादेऽपि विधेरपि (४७) सिद्धं व्यङ्ग्यत्वम् ।

किञ्च, 'कुरु रुचिम्' इति पदयोर्वैपरीत्ये काव्यान्तर्वर्तिनि कथं दुष्टत्वम् ? न ह्यत्रासभ्योऽर्थः पदार्थान्तरैरन्वितः,—इत्यनभिधेय एवेति एवमादि चापरित्याज्यं स्यात् (४८)।

यदि च वाच्यवाचकत्वव्यतिरेकेण व्यङ्ग्यव्यञ्जकभावो नाभ्युपेयते, तदाऽसाधुत्वादीनां नित्यदोषत्वं कष्टत्वादीनामनित्यदोषत्वमिति विभागकरणमनुपपन्नं स्यात् ! न चानुपपन्नं, सर्वस्यैव विभक्ततया प्रतिभासात्, वाच्यवाचकभावव्यतिरेकेण

---

इतीन्द्रप्रकाशनसामर्थ्यात् लिङ्गात् गार्हपत्यपदस्येन्द्रपरत्वं प्रकल्प्य इन्द्रोपस्थापन एव विनियोगः, किंवा गार्हपत्यमिति द्वितीयारूपया श्रुत्या ऐन्द्रीपदस्य गौणार्थत्वेन गार्हपत्याग्न्युपस्थापन एव विनियोगः ? इति सन्देहे श्रुत्या सामर्थ्यं बाध्यते इति सिद्धान्तः, तथाहि द्वितीया हि कारकविभक्तिः कामपि क्रियामपेक्षन्ती 'उपस्थापय' इतिक्रिययाऽन्विता सती प्रथमत एवाभिधया अग्न्युपस्थापने इमामृचं विनियोजयति, नैवं सामर्थ्यम्, 'कदाचन स्तरीरसि' इति मन्त्रः इन्द्रप्रकाशक इति प्रथमं ज्ञानं, ततः इन्द्रप्रकाशकमन्त्रस्य बाध्यत्व विनियोगः सम्भवतीत्यनुपपत्तिज्ञानं, ततश्च इन्द्रोपस्थापने एव विनियोग इति रीत्या सामर्थ्येन कल्पनीयमिति विलम्बः । तस्मात् श्रुतेः प्रबलतया तदानुगुण्येन सामर्थ्ये नीयमाने इन्द्रपदं ऐश्वर्यतत्परतया गार्हपत्यतात्पर्यकमिति कल्पनीयम् ।

(४७) विधेस्तदन्तिकगमनस्य ।

(४८) अयं निर्गलितार्थः, 'रुचिं कुरु' इत्युक्तौ स्त्रीगुह्याङ्गवाचक-चिकु-पदतुल्येन 'चिकु' इत्यनेन व्यञ्जनया स्त्रीगुह्याङ्गोपस्थित्याऽश्लीलत्वदोष इति नैवमुच्यते, तत्र 'अन्वित एवार्थोऽभिधेयः' इत्यन्विताभिधानमते व्यञ्जनाया अस्वीकारे न सम्भवति, तादृशार्थस्य केनाप्यनन्वितत्वेनानभिधेयत्वादिति ।

व्यङ्ग्यव्यञ्जकताश्रयेण तु व्यङ्ग्यस्य बहुविधत्वात् क्वचिदेव कस्यचिदेव औचित्येनोपपद्यत एव विभागव्यवस्था (४९)।

इयं,, गतं सम्प्रति शोचनीयतां

समागमप्रार्थनया कपालिनः।

-इत्यादौ पिनाक्यादिपदवैलक्षण्येन किमिति कपाल्यादिपदानां काव्यानुगुणत्वं (५०)?।

अपिच वाच्योऽर्थः सर्व्वान् प्रतिपत्तृन् प्रति एकरूप एवेति नियतोऽसौ, न हि 'गतोऽस्तमर्कः' इत्यादौ वाच्योऽर्थः क्वचिदन्यथा भवति, प्रतीयमानस्तु तत्तत्प्रकरणवक्तृप्रतिपत्त्रादिविशेषसहायतया नानात्वं भजते; तथा च, 'गतोऽस्तमर्कः' — इत्यतः सपत्नं प्रत्यवस्कन्दनावसर-इति, अभिसरणमुपक्रमयतामिति, प्राप्तप्रायस्ते प्रेयानिति, कर्म्मकरणान्निवर्त्तामहे इति, सान्ध्यो विधिरुपक्रम्यतामिति, दूरं मा गाः—इति, सुरभयो गृहं प्रवेश्यन्तामिति, सन्तापोऽधुना न भवतीति, विक्रेयवस्तूनि संक्रियन्तामिति, नागतोऽद्य प्रेयानित्यादिरनवधिर्व्यङ्ग्योऽर्थः तत्र तत्र प्रतिभाति।

---

(४९) असाधुत्वादयोहि सर्व्वदैव हेया इति नित्यदोषाः, कष्टत्वादयस्तु शृङ्गाराद्यभिव्यक्तिप्रतिकूलतया तत्रैव हेया अपि रौद्रादौ व्यङ्ग्यानुगुणतया-उपादेया एवेत्यनित्यदोषाः, इत्थञ्च व्यङ्ग्यव्यञ्जकभावे प्रातिकूल्यानुकूल्याभ्यामेव नित्यानित्यदोषविभागः, स च व्यञ्जनाया असत्त्वे नोपपन्नः, वाच्यवाचकभावे हि कष्टत्वादीनामौदासीन्येन सर्व्वत्रैव दुष्टत्वमदुष्टत्वं वा अन्यतरत् नियतमेव स्यात्।

(५०) व्यञ्जनाङ्गीकारे कपालिपदेन जुगुप्सा व्यज्यते इति तस्यैव उपयोगः।

वाच्यव्यङ्ग्ययोः (५१) (निःशेषेत्यादौ निषेधविध्यात्मना,

"मात्सर्य्यमुत्सार्य्य विचार्य्य कार्य्यम्
आर्य्याः समर्य्यादमुदाहरन्तु ।
सेव्या नितम्बाः किमु भूधराणाम्
उत स्मरस्मेरविलासिनीनाम् ॥"

-इत्यादौ संशय-शान्तशृङ्गार्य्यन्यतरगतनिश्चयरूपेण (५२),

"कथमवनिप, दर्पो यन्निशातासिधारा-
दलनगलितमूर्ध्ना विद्विषां स्वीकृता श्रीः ।
ननु तव निहतारेरप्यसौ किं न नीता
त्रिदिवमपगताङ्गैर्वल्लभा कीर्त्तिरेभिः ॥"

-इत्यादौ निन्दास्तुतिवपुषा) स्वरूपस्य, (पूर्व्वपश्चाद्भावेन प्रतीतेः) कालस्य, (शब्दाश्रयत्वेन, शब्द-तदेकदेश-तदर्थ-वर्ण-संघटनाश्रयत्वेन च) आश्रयस्य, (शब्दानुशासनज्ञानेन, प्रकरणादिसहाय-प्रतिभानैर्मल्यसहितेन तेन च अवगम इति) निमित्तस्य, (बोद्धृमात्र-विदग्धव्यपदेश्ययोः प्रतीतिमात्र-चमत्कृत्योश्च (५३) करणात्) कार्य्यस्य, ('गतोऽस्तमर्कः' इत्यादौ प्रदर्शितनयेन) संख्यायाः,

---

(५१) वाच्यव्यङ्ग्ययोः स्वरूपस्य 'भेदेऽपि' इत्याद्यग्रिमेणान्वयः, एवं कालस्येत्यादावपि ।

(५२) संशयो वाच्यः, शान्ते शृङ्गारिणि वा वक्तरि तदुचित एव भूधराणामिति स्मरस्मेरविलासिनीनामिति वा निश्चयो व्यङ्ग्यः ।

(५३) वाच्येन सर्व्वबोद्धृसाधारणी प्रतीतिरेव केवला, व्यङ्ग्येन सहृदयानामेव प्रतीतिश्चमत्कृतिश्चेति ।

("कस्स व ण होइ रोसो दट्ठूण पिआए सव्वणं अहरं ।
सभमर-पउमग्घाइणि, वारिअवामे, सहसु एण्हिं(५४)॥"
-इत्यादौ सखीतत्कान्तादिगतत्वेन) विषयस्य च भेदेऽपि यद्येकत्वं, तत्कुचिदपि (नीलानीलादौ) भेदो न स्यात्! उक्तं हि, 'अयमेव हि भेदो भेदहेतुर्वा यद्विरुद्धधर्माध्यासः कारण-भेदश्च' इति। वाचकानामर्थापेक्षा, व्यञ्जकानान्तु न तद-पेक्षत्वमिति न वाचकत्वमेव व्यञ्जकत्वम् ।

किञ्च 'वाणीरकुडङ्ग' इत्यादौ प्रतीयमानमर्थमभिव्यज्य वाच्यं स्वरूप एव यत्र विश्राम्यति (५५), तत्र गुणीभूतव्यङ्ग्ये अतात्पर्य्यभूतोऽप्यर्थः स्वशब्दानभिधेयः प्रतीतिपथमवतरन् कस्य व्यापारस्य विषयताम् अवलम्बताम् ? इति ।

ननु 'रामोऽस्मि सर्वं सहे' इति, 'रामेण प्रियजीवितेन तु कृतं प्रेम्णः प्रिये! नोचितम्' इति,'रामोऽसौ भुवनेषु विक्रमगुणैः प्राप्तः प्रसिद्धिं पराम्' इत्यादौ लक्षणीयोऽप्यर्थो नानात्वं भजते, विशेषव्यपदेशहेतुश्च भवति, तदवगमश्च शब्दायत्तः, प्रकरणादि-सव्यपेक्षश्चेति कोऽयं नूतनः प्रतीयमानो नाम? (५६)।

---

(५४) कस्य वा न भवति रोषो दृष्ट्वा प्रियायाः सव्रणमधरम् ।
सभ्रमरपद्माघ्रायिणि, वारितवामे, सहस्वेदानीमिति स० ।

(५५) विश्राम्यति चारुत्वेन तात्पर्य्यविषयीभवन् आस्वाद्यो भवति, अयमभिसन्धिः, यत्र गुणीभूतव्यङ्ग्ये वाच्यस्य प्राधान्येन तात्पर्य्यविषयत्वं, तत्र व्यङ्ग्यार्थेऽभिधातात्पर्य्ययोरुभयोरप्यभावेन कथमस्योपस्थितिरिति तदुपस्थापकं व्यञ्जना स्वीकार्य्या ।

(५६) अयं पूर्व्वपक्षः, व्यञ्जनस्य शब्दस्य अनियतत्वम् (असंलक्ष्यक्रम-त्वादिभेवार्थान्तरसंक्रमितवाच्यत्वादिना) काव्यस्य विशेषव्यवहारहेतुत्वं,

उच्यते, लक्षणीयस्यार्थस्य नानात्वेऽप्यनेकार्थशब्दाभिधेयवत् नियतत्वमेव, न खलु मुख्येनार्थेनानियतसम्बन्धो (५७) लक्षयितुं शक्यते, प्रतीयमानस्तु प्रकरणादिविशेषवशेन नियतसम्बन्धः, अनियतसम्बन्धः, सम्बद्धसम्बन्धश्च द्योत्यते। न च,

"अत्ता एत्थ णिमज्जइ एत्थ अहं दिअसअं पलोएहि।
मा पहिअ, रत्तिअंधअ सेज्जाए मह णुमज्जहिसि(५८)॥"

-इत्यादौ विवक्षितान्यपरवाच्ये ध्वनौ मुख्यार्थबाधः, तत्कथमत्र लक्षणा? लक्षणायामपि व्यञ्जनमवश्यमाश्रयितव्यम् इति [१७] प्रतिपादितम्। यथा च समयसव्यपेक्षा अभिधा, तथा मुख्यार्थबाधादित्रयसमयविशेषसव्यपेक्षा लक्षणा; अत एव अभिधापुच्छभूता सेत्याहुः (५९)।

नच लक्षणात्मकमेव ध्वननं, तदनुगमेन(६०)तस्य दर्शनात्;

---

प्रकरणाद्यधीनशब्दजन्यप्रतीतिविषयत्वञ्चास्तीति उभयत्रैव लक्षणैव व्यापारोऽस्तु। लक्ष्यार्थस्य अनियतत्वं उद्धृतोदाहरणत्रये स्पष्टं, तथा हि यथाक्रमं दुःखसहिष्णुत्वेन प्रसिद्धे, निष्करुणे, खरादिजन्तरि चार्थे एकस्यैव रामपदस्य लक्षणा।।

(५७) अनियतः सामीप्यसादृश्यादिप्रसिद्धसम्बन्धान्यः कादाचित्को वा सम्बन्धो यस्य सः, नहि यदाकदाचित् गङ्गामनुसरन्ती गौरनुसरणसम्बन्धेन गङ्गापदलक्ष्या भवति।

(५८) श्वश्रूरत्र निमज्जति अत्राहं दिवसकं प्रलोकय।
मा पथिक, रात्र्यन्ध, शय्यायामावयोर्निमङ्क्ष्यसीति सं०।

"णिमदो णुमज्ज" इति क्रमदीश्वरः।

•(५९) समयः सङ्केतः, समयविशेषः लक्ष्यार्थे संकेतः, यतः संकेतापेक्षा, अतः अभिधानुविधायिनीत्यर्थः।

(६०) तदनुगमेन लक्षणानन्तरमेव लक्षणापश्चाद्भावेन।

नच, तदनुगतमेव, अभिधावलक्षनेनापि तस्य भावात्, न चोभयानुसार्य्येव, अवाचकवर्णानुसारेणापि तस्य दृष्टेः, नच, शब्दानुसार्य्येव, अशब्दात्मक-नेत्रत्रिभागावलोकनादि-गतत्वेनापि तस्य प्रसिद्धेरिति अभिधातात्पर्य्यलक्षणात्मकव्यापार-त्रयातिवर्त्ती ध्वननादिपर्य्यायो व्यापारोऽनपह्नवनीय एव ।

तत्र 'अत्ता एत्थ' इत्यादौ नियतसम्बन्धः(६१), 'कस्स व ण होइ रोसो' इत्यादौ अनियतसम्बन्धः,

"विपरीअरए लच्छी बम्हं दट्ठूण णाहिकमलट्ठम् ।
हरिणो दाहिणणअणं रसाउला झत्ति ढक्केइ (६२) ॥"

-इत्यादौ सम्बद्धसम्बन्धः । अत्र हि हरिपदेन दक्षिण-नयनस्य सूर्य्यात्मकता व्यज्यते, तन्निमीलनेन सूर्य्यास्तमयः, तेन पद्मस्य संकोचः, ततो ब्रह्मणः स्थगनं, तत्र सति गोप्याङ्गस्य अदर्शनेन अनिर्यन्त्रणं (६३) निधुवनविलसितमिति ।

'अखण्डबुद्धिनिर्ग्राह्यो वाक्यार्थ एव वाच्यार्थः, वाक्यमेव च वाचकम्' इति येऽप्याहुः, तैरप्यविद्यापथपतितैः पदपदार्थ-

---

(६१) यथा निषिद्धकर्मे व्यङ्ग्ये तदनिषदनरूपस्य वाच्यस्य विरोधसम्बन्धोऽस्ति, स च प्रसिद्धतया क्लृप्त इति नियतत्वम् । उत्तरोदाहरणे तु नायकेन अवगते 'भ्रमरेणास्या अास्य' दष्ट' मतूपपतिना'इति व्यङ्ग्यार्थे वाच्यार्थस्य न कोऽपि प्रसिद्धसम्बन्धोऽस्तीति कोऽपि सम्बन्धः कल्पनीय इति अनियतत्वम् ।

(६२) विपरीतरते लक्ष्मीर्ब्रह्माणं दृष्ट्वा नाभिकमलस्थम् ।
हरेर्दक्षिणनयनं रसाकुला झटिति स्थगयतीति च० ॥

(६३) अनिर्यन्त्रणं अप्रतिबन्धम् । अत्र,
'चन्द्रसूर्य्यात्मके विष्णोः चक्षुषी वामदक्षिणे' ।
इति पौराणिकी गाथाऽनुसन्धेया ।

कोऽपना कर्त्तव्यैवेति तत्त्वतोऽप्यवयमनुक्तोदाहरणादौ विध्यादि-व्यङ्ग्य एव (६४) ।

ननु वाच्यादसम्बद्धं तावन्न प्रतीयते, यतः-कुतश्चित् यस्य-कस्यचिदर्थस्य प्रतीतेः प्रसङ्गात्, एवञ्च सम्बन्धात् व्यङ्ग्य-व्यञ्जकभावोऽप्रतिबन्धे अवश्यं न भवतीति व्याप्तत्वेन नियत-धर्म्मिनिष्ठत्वेन च त्रिरूपाल्लिङ्गाल्लिङ्गिज्ञानमनुमानं यत्, तद्रूपः पर्य्यवस्यति (६५), । तथाहि

"भम धम्मिअ ! वीसत्थो सो सुणओ अज्ज मारिओ देण ।
गोलाणईकच्छकुडङ्गवासिणा दरिअसीहेण (६६)॥"

---

(६४) क्रियाकारकभावमुररीकृत्य जायमाना धीः सखण्डा, तदन्या अखण्डा । 'अविद्यापथपतितैः' संसारदशायामाविद्यकव्यवहारावलम्बिभिः । अयं भावः, क्रियाकारकभावो हि धर्म्मधर्म्मिभावमपुरस्कृत्य न सम्भवति, धर्म्मधर्म्मिभावश्च संसारस्य मिथ्यात्वेन न सम्भवति, नापि ब्रह्मणः, निर्धर्म्मत्वात्, अतः पदपदार्थविभागमन्तरेणैव 'सत्यं ज्ञानम्' इत्यादिमहा-वाक्यमखण्डमेव अखण्डं ब्रह्म बोधयतीति वैदान्तिकमतानुसारेण व्यङ्ग्येऽपि वाक्यगम्ये वाक्यस्यैव शक्तिरिति पूर्व्वः पक्षः । सिद्धान्तस्तु, संसारदशायां वैदान्तिकैरपि क्रियाकारकभावस्वीकारेण नैवं सम्भवति ।

(६५) सम्बन्धादिति व्यङ्ग्यव्यञ्जकभावान्वयि, 'अप्रतिबन्धे' अनियतसम्बन्धे व्याप्तिसम्बन्धरहिते इति यावत्, 'व्याप्तत्वेन' (वाच्यार्थस्य) व्यङ्ग्यार्थव्याप्तिमत्तया, 'नियतधर्म्मिनिष्ठत्वेन' (व्याप्योऽपि वाक्यार्थो न स्वानाश्रये व्यङ्ग्यं प्रतिपादयतीति) व्यङ्ग्यार्थाश्रयाश्रितत्वेन च हेतुना । तृतीयान्तद्वयस्य पर्य्यवस्यतीत्यत्रैवान्वयः । 'त्रिरूपात्' पक्षसत्त्व-सपक्षसत्त्व-विपक्षासत्त्व-लक्षण-रूपत्रयवतः, 'तद्रूपः' (तेन अनुमानेन रूप्यते इति व्युत्पत्त्या) अनु-मेयानुमापकभावो विधेयः, अत्र 'व्यङ्ग्यव्यञ्जकभावः' इति उद्देश्यपदमूह्यम् ।

(६६) भ्रम धार्म्मिक, विश्वस्तः स श्वा अद्य मारितस्तेन ।
गोदानदीकच्छकुञ्जवासिना दृप्तसिंहेनेति सं० ॥

अत्र गृहे श्वनिवृत्त्या भ्रमणं विहितं गोदावरीतीरे सिंहोपलब्धेरभ्रमणमनुमापयति,—यत् यत् भीरुभ्रमणं तत्तत् भयकारणनिवृत्त्युपलब्धिपूर्वकम्, गोदावरीतीरे च सिंहोपलब्धिरिति व्यापकविरुद्धोपलब्धिः (६७)। अत्रोच्यते भीरुरपि गुरोः प्रभोर्वा निदेशेन, प्रियानुरागेण, अन्येन चैवंभूतेन हेतुना सत्यपि भयकारणे भ्रमतीत्यनैकान्तिको हेतुः, शुनो बिभ्यदपि वीरत्वेन सिंहान्न बिभेतीति विरुद्धोऽपि (६८)। गोदावरीतीरे सिंहसद्भावः प्रत्यक्षादनुमानाद्वा न निश्चितः, अपि तु वचनात्, न च वचनस्य प्रामाण्यमस्ति अर्थेनाप्रतिबन्धात्(६९) इत्यसिद्धश्च। तत् कथमेवंविधात् हेतोः साध्यसिद्धिः?। तथा, 'निःशेषच्युत'-इत्यादौ गमकतया यानि चन्दनच्यवनादीनि उपात्तानि, तानि कारणान्तरतोऽपि भवन्ति, अतश्चात्रैव स्नानकार्य्यत्वेनोक्तानीति नोपभोग एव प्रतिबद्धानि इति अनैकान्तिकानि।

व्यक्तिवादिना (७०)च अधमपदसहायानामेषां व्यञ्जकत्वम्

---

(६७) भीरुभ्रमणव्यापकस्य भयकारणनिवृत्त्युपलब्धिरूपस्य विरुद्धा सिंहोपलब्धिः, तथाच विरुद्धया सिंहोपलब्ध्या भयकारणनिवृत्त्युपलब्धौ निवृत्तायां तद्व्याप्यमपि भ्रमणं निवृत्तिमेतीति।

(६८) अयं सिद्धान्तः, भीरोरवीरस्य वीरस्य वा अभ्रमणमनुमितं? आद्येऽनैकान्तः, अन्त्ये विरोधः, स्वर्गादिशङ्कया अपौरुषेयत्वशङ्कया वा शुनो बिभ्यतोऽपि वीरस्य भगवादिकृतदृष्टतया वीररसोचितस्य सिंहवति देशे भ्रमणस्यैव सम्भवात्।

(६९) 'अप्रतिबन्धात्' (पुंश्चलीवाक्यत्वेन) अर्थेन सम्बन्धनियमाभावात्।

(७०) ननु अभिधागमनस्य व्यञ्जनरूपा व्यक्तिरेव कथमिति अत आह, व्यक्तीति, 'एषां' चन्दनच्यवनादीनाम्। अधमपदसहायानामेषां हेतुत्वमेवास्तु

उक्तं; नच, अस्याधमत्वं प्रमाणप्रतिपन्नमिति कथमनुमानम्?। एवंविधादर्थादेवंविधोऽर्थः, उपपत्त्यनपेक्षत्वेऽपि प्रकाशते इति-व्यक्तिवादिनः पुनस्तत् अदूषणम्॥

इति काव्यप्रकाशे ध्वनिगुणीभुतव्यङ्ग्यसङ्कीर्ण-
भेदनिर्णयो नाम पञ्चम उल्लासः।

---

## षष्ठ उल्लासः॥

शब्दार्थचित्रं यत्पूर्व्वं काव्यद्वयमुदाहृतम्।
गुणप्राधान्यतस्तत्र स्थितिः शब्दार्थचित्रयोः॥२॥

न तु शब्दचित्रेऽर्थस्याचित्रत्वम्; अर्थचित्रे वा शब्दस्य। तथा चोक्तम्,

"रूपकादिरलङ्कारस्तस्यान्यैर्बहुधोदितः।
न कान्तमपि निर्भूषं विभाति वनिताननम्॥
रूपकादिमलङ्कारं बाह्यमाचक्षते परे।
सुपां तिङाञ्च व्युत्पत्तिं वाचां वाञ्छन्त्यलङ्कृतिम्॥
तदेतदाहुः सौशब्द्यं नार्थव्युत्पत्तिरीदृशी।
शब्दाभिधेयालङ्कारभेदादिष्टं द्वयन्तु नः॥"(१) इति।

---

इति पूर्व्वपक्षं मनसि निधाय, नायकस्य अधमत्वानिश्चयेन सन्दिग्धासिद्धि-दोष इति परिहरति नचेति, व्यञ्जनरूपव्यक्तिपक्षे तु नैते दोषाः सम्भवन्ति, व्यञ्जनायां व्याप्त्यादेरनपेक्षणादित्याह एवंविधेति 'उपपत्तिः, व्याप्त्यादिः, तत् अनैकान्तादि।

---

(१) 'ध्वन्य' काव्यार्थप्रतीत्युत्तरवर्त्तिनं, शब्दश्रवणानन्तरं शब्दालङ्कारेण

शब्दचित्रं यथा,—

प्रथममरुणच्छायस्तावत्ततः कनकप्रभः,
तदनु विरहोत्ताम्यत्तन्वीकपोलतलद्युतिः ।
उदयति ततो ध्वान्तध्वंसक्षमः क्षणदामुखे
सरसबिसिनीकन्दच्छेदच्छविर्मृगलाञ्छनः ॥

अर्थचित्रं यथा,—

ते दृष्टिमात्रपतिता अपि कस्य नात्र
क्षोभाय पक्ष्मलदृशामलकाः खलाश्च ।
नीचाः सदैव सविलासमलीकलग्ना
ये कालतां कुटिलतामिव न त्यजन्ति (२) ॥

यद्यपि सर्व्वत्र काव्येऽन्ततो विभावादिरूपतया पर्य्यवसानम्, तथापि स्फुटस्य रसस्यानुपलम्भादव्यङ्ग्यमेतत्काव्यद्वयमुक्तं ।

अत्र च शब्दार्थालङ्कारभेदाद्बहवो भेदाः, ते च अलङ्कार-निर्णये निर्णेष्यन्ते ॥

इति काव्यप्रकाशे षष्ठ उल्लासः ॥

---

चित्ते आकृष्टेऽर्थप्रतीत्यनन्तरं हि रूपकाद्यनुसन्धानमिति । 'व्युत्पत्तिः' विशेषेण अनुप्रासादिरूपेण सन्निवेशः । 'सौगन्ध्यं' शोभनशब्दस्य काव्यस्य शोभनत्वम् । अभिधेयोऽर्थः । नः ध्वनिकाराणाम् ।

(२) 'अलीकं' ललाटं मिथ्या च । 'कालता' कृष्णरूपता भयानकत्वेन यमरूपता च । 'कुटिलता' वक्रता कापट्यं च । अत्र दीपकमलङ्कारः ।

# सप्तम उल्लासः ।



काव्यस्वरूपं निरूप्य दोषाणां सामान्यलक्षणमाह,—

**मुख्यार्थहतिर्दोषो रसश्च मुख्यस्तदाश्रयाद्वाच्यः ।**
**उभयोपयोगिनः स्युः शब्दाद्यास्तेन तेष्वपि(१)सः॥२॥**

हतिरपकर्षः (२)। 'शब्दाद्याः'-इत्याद्यग्रहणाद्वर्णरचने ।

---

(१) 'मुख्यार्थहतिः' मुख्यस्य प्राधान्येन उद्देश्यस्य, अर्थस्य प्रयोजनस्य हतिर्यस्मात्, सः । रसः (रसनीयः) रसभावादिः, तदाश्रयात् (आश्रय आश्रयणमपेक्षणं, रसेनोपकारकतयाऽपेक्षणात्) वाच्यः (शब्दबोध्योऽर्थः) मुख्य इत्यन्वयः । उभौ रसवाच्यौ । स दोषः ।

(२) अपकर्ष उद्देश्यप्रतीतिविघातः, उद्देश्या च प्रतीतिः रसवति अनपकृष्टरसविषया, नीरसे तु अर्थविषयाऽपि चमत्कारिण्युभयरूपा अविलम्बिता प्रतीतिः, दुष्टेषु हि क्वचित् रसस्यार्थस्य वा प्रतीतिरेव न, क्वचित् विलम्बेन प्रतीतिः, क्वचित् रसस्य नोत्कर्षः, क्वचिदर्थप्रतीतिर्जातापि न चमत्कारिणी; तत्कारणञ्च तत्तत्स्थले स स दोष एव, तत्र रसदोषाणां साक्षात् विघातकत्वम्, अर्थदोषाणां क्वचित् साक्षात्, क्वचिच्च परम्परया, शब्ददोषाणान्तु परम्परयैव। तत्रापि असमर्थत्वादौ अर्थोपस्थितिरेव न, निहतार्थत्वादौ उपस्थितिविलम्बः, च्युतसंस्कृत्यादौ वाक्यार्थबोधाभावः, क्लिष्टत्वादौ तद्विलम्बः, निरर्थकत्वादौ सहृदयवैमुख्यव्यपतापादनेन व्याघातः, विरुद्धमतिकृत्त्वादौ तु विपरीतार्थोपस्थापनेन व्याघातः । विघातकत्वञ्च कस्यचित् ज्ञातस्य यथा व्याहतत्वादेः, कस्यचित्स्वरूपसत एव, यथा निहतार्थत्वादेः । तेनेदं दोषसामान्यलक्षणं,-उद्देश्यप्रतीतिविघातको दोष इति । स चायं द्विविधः,-नित्यश्चानित्यश्च, सर्वदैव हेयो नित्यः, यथा

विशेषलक्षणमाह,—

दुष्टं पदं (३) श्रुतिकटु,
च्युतसंस्कृत्यप्रयुक्तमसमर्थम् ।
निहतार्थमनुचितार्थं,
निरर्थकमवाचकं त्रिधाऽश्लीलम् ॥ २ ॥
सन्दिग्धमप्रतीतम्,
ग्राम्यं नेयार्थमथ भवेत् क्लिष्टम् ।
अविमृष्टविधेयांशं
विरुद्धमतिकृत्समासगतमेव ॥ ३ ॥

श्रुतिकटु परुषवर्णरूपं दुष्टं । यथा,-

अनङ्गमङ्गलगृहापाङ्गभङ्गितरङ्गितैः ।
आलिङ्गितः स तन्वङ्ग्या कार्तार्थ्यं लभते कदा ॥

अत्र कार्तार्थ्यमिति (४) ।

च्युतसंस्कृति व्याकरणलक्षणहीनं । यथा,—

एतन्मन्दविपक्वतिन्दुकफलश्यामोदरापाण्डर-
प्रान्तं हन्त पुलिन्दसुन्दरकरस्पर्शक्षमं लक्ष्यते ।

---

च्युतसंस्कारादिः, तदन्यस्त्वनित्यः ; यथा शृङ्गारादौ हेयमपि श्रुतिकटु रौद्रादौ उपादेयमेवेति ।

(३) दुष्टं पदमिति विधेयं सर्व्वत्रान्वयि, श्रुतिकटुपदाद्यन्यतमत्वं पददोषसामान्यलक्षणमपि पददोषमात्रलक्षणत्वेन दोषविशेषलक्षणमेवेति न प्रतिज्ञाहानिः ।

(४) निरर्थं प्रयुक्तो दुःश्रवः शब्दः श्रोतुर्विरक्तिमापादयति । यमकाद्यर्थं प्रयुक्तस्तु न दुष्टइति बोध्यम् ।

तत्पल्लीपतिपुत्रि, कुञ्जरकुलं कुम्भाभयाभ्यर्थना-

दीनं त्वामनुनाथते कुचयुगं पत्रावृतं मा कृथाः (५)॥

अत्र 'अनुनाथते' इति, 'सर्पिषो नाथते' इत्यादौ आशिष्येव नाथतेरात्मनेपदं विहितम्, "आशिषि नाथः" (१।३।२१ सू० वा०) इति; अत्र तु याचनमर्थः। (तस्मात् अनुनाथति स्तनयुगमिति पठनीयम्)।

अप्रयुक्तं तथा आम्नातमपि कविभिर्नादृतं। यथा,-

यथाऽयन्दारुणाचारः सर्व्वदैव विभाव्यते।

तथा मन्ये दैवतोऽस्य पिशाचो राक्षसोऽथवा॥

अत्र दैवतशब्दो "दैवतानि पुंसि वा" (अ० को० १ व०) इति पुंसि आम्नातोऽपि न केनचित्प्रयुज्यते (६)।

असमर्थं यत्तदर्थं पठ्यते न च तत्राऽस्य शक्तिः (७)। यथा,-

तीर्थान्तरेषु स्नानेन समुपार्जितसत्कृतिः।

सुरस्रोतस्विनीमेष हन्ति सम्प्रति सादरम्॥

अत्र हन्तीति गमनार्थम्।

---

(५) स्तनयोरनावृतत्वे तदासक्तमनसः पुलिन्दस्य प्रहारपाटवं न भव-तीति, अनयोः कतरः कुम्भ इति संशयेन, तत्सादृश्येन कुम्भस्य प्रहारायोग्यत्व-बुद्ध्या वा न प्रहरिष्यतीति कुम्भाभयं स्यादिति भावः। याचनस्य च 'मा कृथाः' इत्यन्तो वाक्यार्थः कर्म्म।

(६) अत्र तादृशकविसमयलङ्घने प्रयोजनानुसन्धानव्यग्रतया प्रतीति-विघातः। यमकादिप्रयोजनकत्वे तु नायं दोषः।

(७) तदर्थेऽभिधारूपशक्तिविधुरस्यापि तदर्थतया पाठोऽन्यसहकारेण तदर्थबोधनाय, 'अतएव गतौ शक्तिशून्योऽपि हन्तेः पदादिपदसहकारेण' पद्भ्यां हन्तीत्यादौ निरूढलक्षणया गतिं शक्ति, (निरूढलक्षणासम्पादकस्य पदादि-

निहतार्थं यदुभयार्थम् अप्रसिद्धेऽर्थे प्रयुक्तं । यथा,-

यावकरसार्द्रपादप्रहारशोणितकचेन दयितेन ।
मुग्धा साध्वसतरला विलोक्य परिचुम्बिता सहसा ॥

अत्र शोणितशब्दस्य रुधिरलक्षणेनार्थेनोज्ज्वलीकृतत्वरूपोऽर्थो (८) व्यवधीयते । अनुचितार्थं यथा,-

तपस्विभिर्या सुचिरेण लभ्यते,
प्रयत्नतः सत्रिभिरिष्यते च या ।
प्रयान्ति तामाशु गतिं यशस्विनः ।
रणाश्वमेधे पशुतामुपागताः ॥

अत्र पशुपदं कातरतामभिव्यनक्तीत्यनुचितार्थम् (९) ।

निरर्थकं पादपूरणमात्रप्रयोजनं चादिपदं । यथा,-

उत्फुल्लकमलकेसरपरागगौरद्युते, मम हि गौरि ।
अभिवाञ्छितं प्रसिध्यतु भगवति, युष्मत्प्रसादेन ॥

अत्र हिशब्दः । अवाचकं यथा,-

अवन्ध्यकोपस्य विहन्तुरापदां
भवन्ति वश्याः स्वयमेव देहिनः ।
अमर्षशून्येन जनस्य जन्तुना,
न जातहार्देन न विद्विषादरः ॥

---

पदसंस्कार एव, तेन न केवलात् हन्तेर्गतिबोधः) अतएव च अवाचकात् अस्य भेदः, अवाचकं हि विवक्षितार्थं कुत्रापि न शक्तं । नित्यदोषोऽयमिति ।

(८) उज्ज्वलीकृतत्वरूपः ईषदारक्तीकृतत्वस्वरूपः ।

(९) विवक्षितार्थापकर्षव्यञ्जकत्वमनुचितार्थत्वमिति विरुद्धमतिकृतो भेदः ।

अत्र जन्तुपदमदातर्य्यर्थे (१०) विवक्षितं, तत्र च नाभिधायकं।

यथा वा,

हा धिक् सा किल तामसी! शशिमुखी दृष्टा मया यत्र सा!
तद्विच्छेदरुजाऽन्धकारितमिदं दग्धं दिनं कल्पितम्।
किं कुर्म्मः, कुशले सदैव विधुरो धाता, न चेत् तत्कथं
तादृग्यामवतीमयो भवति मे नो जीवलोकोऽधुना॥

अत्र दिनमिति प्रकाशमयमित्यर्थे (११) अवाचकं।

यच्च उपसर्गसंसर्गादर्थान्तरगतं, यथा,–

जङ्घाकाण्डोरुनालो नखकिरणलसत्केसरालीकरालः
प्रत्यग्रालक्तकाभाप्रसरकिशलयो मञ्जुमञ्जीरभृङ्गः।
भर्त्तुर्नृत्तानुकारे जयति निजतनुस्वच्छलावण्यवापी-
सम्भूताम्भोजशोभां विदधदभिनवो दण्डपादो भवान्याः (१२)॥

अत्र दधदित्यर्थे विदधदिति (१३)।

त्रिधेति व्रीडाजुगुप्सामङ्गलव्यञ्जकत्वात्। यथा,–

साधनं सुमहत् यस्य यन्नान्यस्य विलोक्यते।
तस्य धीशालिनः कोऽन्यः सहेतारालितां भ्रुवम्॥[१]

---

(१०) पूर्व्वार्द्धे आपद्विघातकतया दातृत्वमुक्तमिति द्वितीये तद्वैपरीत्य-प्रदर्शकं जन्तुपदमदातरि प्रयुक्तमिति प्रदीपः।

(११) 'तामसी'–इत्यनेन लब्धस्य तमोमयत्वस्य वैपरीत्येन, दिनपदेन प्रकाशमयत्वम् अवश्यमेव बोधनीयम्।

(१२) "नृत्यं पदार्थाभिनयो नृत्तं ताललयाश्रितम्।" इति, "प्रसृष्टोर्द्ध्वीकृतः पादो दण्डपादोऽभिधीयते" इति च चन्द्रिकाधृतम्।

(१३) दधातिधारणे शक्तिरूपसामर्थ्यसत्त्वेऽपि उपसर्गेण करणएव शक्ते-र्नियमितत्वेन विदधातिर्धारणेऽर्थेऽवाचकः न त्वसमर्थ इति।

लीलातामरसाहतोऽन्यवनितानिःशङ्कदष्टाधरः
कश्चित्केसरदूषितेक्षण इव व्यामील्य नेत्रे स्थितः ।
मुग्धा कुड्मलिताननेन दधती वायुं स्थिता तत्र सा
भ्रान्त्या धूर्त्ततयाऽथ वा नतिमृते तेनानिशं चुम्बिता ॥ [२]

मृदुपवनविभिन्नो मत्प्रियाया विनाशात्
घनरुचिरकलापो निःसपत्नोऽद्य जातः ।
रतिविगलितबन्धे केशपाशे सुकेश्याः
सति कुसुमसनाथे कं हरेदेष बर्हः ॥ [३]

एषु साधन-वायु-विनाशशब्दा व्रीडादिव्यञ्जकाः (१४) ।
सन्दिग्धं यथा,-

आलिङ्गितस्तत्रभवान् संपराये जयश्रिया ।
आशीःपरम्परां वन्द्यां कर्णे कृत्वा कृपां कुरु ॥

अत्र 'वन्द्यां' किं हठहृतमहिलायां, किं वा नमस्यामिति सन्देहः। अप्रतीतं यत्केवले शास्त्रे प्रसिद्धं । यथा,-

सम्यक्ज्ञानमहाज्योतिर्दलिताशयताजुषः ।
विधीयमानमप्येतन्न भवेत्कर्म्मबन्धनम् ॥

अत्राशयशब्दो वासनापर्यायो योगशास्त्रादावेव प्रयुक्तः (१५) ।
ग्राम्यं यत्केवले लोके स्थितं । यथा,-

राकाविभावरीकान्त-संक्रान्तद्युति ते मुखम् ।
तपनीयशिलाशोभा कटिश्च हरते मनः ॥

---

(१४) अश्लीलार्थोपस्थित्या श्रोतृवैमुख्यं दूषणबीजं । येषां पुनः शिवलिङ्गभगिनीब्रह्माण्डादिशब्दानां विवक्षितार्थस्य प्रसिद्धतयाऽश्लीलार्थो नोपतिष्ठते, न तेषु दुष्टत्वम् ।

(१५) वासना चात्र संसारनिदानभूतो मिथ्याज्ञानजन्यः संस्कारविशेषः ।

अत्र कटिरिति (१६)।
नेयार्थं ("निरूढा लक्षणाः काश्चित्सामर्थ्यादभिधानवत्। क्रियन्ते साम्प्रतं (१७) काश्चित्काश्चिन्नैव त्वशक्तितः॥"-इति) यन्निषिद्धं लाक्षणिकं, । यथा,-

शरत्कालसमुल्लासिपूर्णिमाशर्वरीप्रियम् ।
करोति ते मुखं तन्वि, चपेटापातनातिथिम् ॥

अत्र चपेटापातनेन निर्जितत्वं लक्ष्यते ।
'अथ' (१८) 'समासगतमेव' 'दुष्टम्' इति सम्बन्धः । अन्यत् केवलं, समासगतञ्च। क्लिष्टं यत्रार्थप्रतिपत्तिर्व्यवहिता । यथा,-

अत्रिलोचनसंभूतज्योतिरुद्गमभासिभिः ।
सदृशं शोभतेऽत्यर्थं भूपाल, तव चेष्टितम् ॥

अत्र अत्रिलोचनसंभूतस्य चन्द्रस्य ज्योतिरुद्गमेन भासिभिः कुमुदैरित्यर्थः ।

---

(१६) सामाजिकैर्नितम्बादिकमेव प्रयुज्यते न तु कटिरिति ग्राम्यत्वं। ग्राम्यशब्दश्रवणाद्धक्तुर्वैदग्ध्याभावनात् श्रोतुर्वैमुख्यं दूषणबीजम् ।

(१७) प्रयोजनेनेति शेषः । रूढिप्रयोजनविशेषयोरभावेऽपि अपरविधरचनाया असामर्थ्यनिबन्धनं लक्षणाश्रयणमिति समुदायार्थः, तथाहि अस्योदाहरणे न रूढिः, नापि च कविसमयसिद्धनिर्जितत्वलक्षकपदसमुदायपरित्यागेन चपेटापातनपदोक्तौ प्रयोजनविशेषः ।

(१८) 'अथ भवेत् क्लिष्टम्' इति कारिकांशं व्याचष्टे,-अथेति । क्लिष्टादित्रयाणां विवक्षितविशिष्टार्थप्रतिपत्तिव्याघातो दूषकताबीजम्, केवलपदस्य विशिष्टार्थ एव न सम्भवतीति नासमासे एतेषां सम्भवः ।

अविमृष्टः प्राधान्येन अनिर्दिष्टो(१९)विधेयांशो यत्र तत्। यथा,

मूर्ध्नामुद्वृत्तकृत्ताविरलगलगलद्रक्तसंसक्तधारा-
धौतेशाङ्घ्रिप्रसादोपनतजयजगज्जातमिथ्यामहिम्नाम् ।
कैलासोल्लासनेच्छाव्यतिकरपिशुनोत्सर्पिदर्पोद्धुराणाम्
दोष्णां चैषां किमेतत् फलमिह नगरीरक्षणे यत्प्रयासः ?॥

अत्र मिथ्यामहिमत्वं ( २० ) नानुवाद्यं, अपि तु विधेयम् ।

यथा वा,—

स्रस्तां नितम्बादवरोपयन्ती पुनःपुनः केशरपुष्पकाञ्चीम् ।
न्यासीकृतां स्थानविदा स्मरेण द्वितीयमौर्वीमिव कार्मुकस्य ॥

अत्र द्वितीयत्वमात्रमुत्प्रेक्षितं । ( मौर्वीं द्वितीयामिति युक्तः पाठः) । यथा वा,-

वपुर्विरूपाक्षमलक्ष्यजन्मता
दिगम्बरत्वेन निवेदितं वसु ।

---

(१९) प्राधान्यञ्च विधिप्रतीतियोग्यता, सा च कुत्रास्ति कुत्र वा नेत्यस्य विद्वदनुभव एव प्रमाणं, केवलमुदाहरणैरेतत्प्रदर्शितं,-विधेयस्य, समासान्तर्गतत्वेन, इतरविशेषणतयोपस्थितौ, ( एकस्मिन् वाक्ये ) 'अनुवाद्यमनुक्त्वैव न विधेयमुदीरयेत्' इति नियमविपरीतनिर्देशे, उद्देश्यगत-विशेषणान्तरमहिम्ना विधानात् पूर्व्वमेव सिद्धौ, यच्छब्दसान्निध्येन प्रसिद्धार्थ एव नियमितशक्तिकेन तदादिपदेन निर्देशे च विधेयतानवगम इति । एतच्च वाक्यदोषोदाहरणेषु सुस्पष्टम् ।

(२०) मिथ्यामहिमत्वं 'महिमा मिथ्या' इतिरीत्या महिम्नो मिथ्यात्वम्, अनुवाद्यम् उद्देश्यं, प्राप्तस्य धर्म्मान्तरप्राप्तये कथनमुद्देशः ; विधेयं साध्यम्, अप्राप्तस्य प्राप्तये कथनं विधानम् । उद्देश्यविधेययोः पृथङ्निर्देश एवोद्देश्यविधेयभावप्रतीतिः ।

वरेषु यद्बालमृगाक्षि, मृग्यते
तदस्ति किं व्यस्तमपि त्रिलोचने ?॥

अत्राखण्डिता अनिरिति वाच्यम्। यथा वा,

आनन्दसिन्धुरतिचापलशालिचित्त-
संदाननैकसदनं क्षणमप्यमुक्ता।
या सर्व्वदैव भवता, तदुदन्तचिन्ता
तान्तिं तनोति तव सम्प्रति, धिग्धिगस्मान्॥

अत्र न मुक्तेति निषेधो विधेयः; (यथा,

नवजलधरः सन्नद्धोऽयं, न दृप्तनिशाचरः;
सुरधनुरिदं दूराकृष्टं, न तस्य शरासनम्।
अयमपि पटुर्धारासारः, न बाणपरम्परा;
कनकनिकषस्निग्धा विद्युत्, प्रिया न ममोर्व्वशी॥

इत्यत्र) नत्वमुक्ततानुवादेनान्यत् अत्र किञ्चिद्विहितं। (यथा,

जुगोपात्मानमत्रस्तो भेजे धर्म्ममनातुरः।
अगृध्नुराददे सोऽर्थानसक्तः सुखमन्वभूत्॥

इत्यत्र अत्रस्तत्वाद्यनुवादेनात्मनो गोपनादि)।

विरुद्धमतिकृत् यथा,—

सुधाकरकराकारविशारदविचेष्टितः।
अकार्य्यमित्रमेकोऽसौ तस्य किं वर्णयामहे॥

अत्र कार्य्यं विना मित्रमिति विवक्षितम्, अकार्य्येषु मित्रमिति प्रतीतिः। यथा वा,

चिरकालपरिप्राप्तिलोचनानन्ददायिनः।
कान्ता कान्तस्य सहसा विदधाति गलग्रहम्॥

अत्र कण्ठग्रहमिति वाच्यम् (२१)। यथा वा,

न त्रस्तं यदि नाम भूतकरुणासन्तानशान्तात्मन-
स्तेन व्यारुजता धनुर्भगवतो देवाद्भवानीपतेः ।
तत्पुत्रस्तु मदान्धतारकवधाद्विश्वस्य दत्तोत्सवः
स्कन्दः, स्कन्द इव प्रियोऽहमथवा शिष्यः कथं विस्मृतः ? ॥

अत्र भवानीपतिशब्दो भवान्याः पत्यन्तरे प्रतीतिं करोति। यथा वा,-

गौरपि यद्वाहनतां प्राप्तवतः सोऽपि गिरिसुतासिंहः ।
सविधे निरहङ्कारः पायाद्वः सोऽम्बिकारमणः ॥

अत्राम्बिकारमण इति विरुद्धां धियमुत्पादयति (२२)।

श्रुतिकटु समासगतं (२३) यथा,

सा दूरे च सुधासान्द्रतरङ्गितविलोचना ।
वह्निनिर्ह्रादनार्होऽयं कालश्च समुपागतः ॥

एवमन्यदपि ज्ञेयम् ॥

**अपास्य च्युतसंस्कारमसमर्थं निरर्थकम् ।**
**वाक्येऽपि दोषाः(२४)सन्त्येते, पदस्यांशेऽपि केचन॥४॥**

---

(२१) रोगविशेषोऽर्द्धचन्द्रदानं वा प्रतीयते ।

(२२) अम्बिकापदस्य गौरीव मातार्ऽप्यर्थः, एवं रमणपदस्य प्रीतिकर इवासभ्योऽप्यर्थोऽस्तीति ।

(२३) श्लिष्टत्वादीनां समासगतत्वनियमनादन्येषामनियम उक्तप्राय इति सूचयन् असमासगतमुक्त्वा समासगतमाह श्रुतीति ।

(२४) विशिष्टैकार्थतात्पर्य्यकपदसमूहो वाक्यम्, तदपेक्षदोषत्वमेव वाक्यदोषत्वं, तदपेक्षत्वञ्च केषाञ्चित् स्वात्मलाभाय केषाञ्चिच्च स्वोत्कर्षाय,

केचन, न पुनः सर्व्वे। क्रमेणोदाहरणम्,—

सोऽध्यैष्ट वेदांस्त्रिदशानयष्ट पितॄनताप्सीत्सममंस्त बन्धून्।
व्यजेष्ट षड्वर्गमरंस्त नीतौ समूलघातं न्यवधीदरींश्च॥ (श्रुति०)

स रातु वो दुश्चवनो भावुकानां परम्पराम्।
अनेड़मूकताद्यैश्च द्यतु दोषैरसंमतान्॥ (अप्र०)

अत्र दुश्चवन इन्द्रः, अनेड़मूको मूकबधिरः (२५)।

सायकसहायबाहो, मकरध्वजनियमितक्षमाधिपते।
अब्जरुचिभास्वरस्ते भातितरामवनिप, श्लोकः॥ (निह०)

अत्र सायकादयः शब्दाः खड्गाब्धि-भू-चन्द्र-यशः-पर्य्यायाः शरादर्थतया प्रसिद्धाः।

कुविन्दस्त्वं तावत्पटयसि गुणग्राममभितः
यशो गायन्त्येते दिशि-दिशि च नग्नास्तव विभो।
शरज्ज्योत्स्नागौरस्फुटविकटसर्व्वाङ्गसुभगा
तथापि त्वत्कीर्त्तिर्भ्रमति विगताच्छादनमिह॥

---

तथाहि ये केवला वाक्यदोषाः येऽपि च विधेयाविमर्षादयो वाक्यगतास्ते वाक्य एव सम्भवन्तीत्यात्मलाभार्थं वाक्यमपेक्षन्ते; ये पुनः श्रुतिकट्वादयः पददोषा अपि वाक्यघटकपदद्वयत्रयादिगतत्वेन अतिशयदोषतामापद्यन्ते, ते स्वोत्कर्षलाभायैव वाक्यसापेक्षा इति। च्युतसंस्कारासमर्थत्वयोः स्वत एवातिशयदोषयोर्न वाक्यघटकपदद्वयादिगतत्वेन कोऽपि विशेषः, निरर्थक-पदत्वस्य वाक्यघटकत्वमेव नास्तीति नैषां वाक्यदोषत्वम्। एकस्य विवक्षिता-र्थावाचकपदस्य प्रसिद्धार्थमादायापि कथञ्चित् वाक्यार्थबोधोपपत्तिः सम्भवतीति नावाचकत्वदोषस्य स्वतएवातिशय इति पदद्वयादिगतत्वेनाति-शयितो वाक्यदोषोऽयम् इति यथाकथञ्चित् विभजनीयम्।

(२५) "अनेड़मूक उद्दिष्टः शठे वाक्श्रुतिवर्ज्जिते" इति मेदिनी।

अत्र कुविन्दादिशब्दोऽर्थान्तरं प्रतिपादयन् उपश्लोक्यमानस्य तिरस्कारं व्यनक्तीत्यनुचितार्थः (२६) ।

प्राभ्रभ्राड्विष्णुधामाप्य विषमाश्वः करोत्ययम् ।
निद्रां सहस्रपर्णानां पलायनपरायणाम् ॥

अत्र प्राभ्रभ्राड्विष्णुधामविषमाश्वनिद्रापर्णशब्दाः प्रकटजलद-गगन-सप्ताश्व-सङ्कोच-दलानामवाचकाः (२७) ।

हृपतेरुपसर्पन्ती कम्पना वामलोचना ।
तत्तत्प्रहरणोत्साहवती मोहनमादधौ ॥

अत्रोपसर्पणप्रहरणमोहनशब्दा व्रीडादायित्वादश्लीलाः ।

तेऽन्यैर्वान्तं समश्नन्ति परोत्सर्गञ्च भुञ्जते ।
इतरार्थग्रहे येषां कवीनां स्यात्प्रवर्त्तनम् ॥

अत्र वान्तोत्सर्गप्रवर्त्तनशब्दा जुगुप्सादायिनः ।

पितृवसतिमहं व्रजामि तां, सह परिवारजनेन, यत्र मे ।
भवति सपदि पावकान्वये (२८) हृदयमशेषितशोकशल्यकम् ॥

अत्र पितृगृहमित्यादौ विवक्षिते श्मशानादिप्रतीतौ अमङ्गलार्थत्वम् ।

---

(२६) अत्र कुविन्दः तन्तुवायः, पटयसि पटूकरोषि (प्रख्यापयसि)। मग्नाः स्तुतिपाठकाः इति विवक्षितार्थः । अन्यार्थस्तु कुविन्दः तन्तुवायः । पटयसि पटं (वस्त्रं) करोषि, गुणग्रामं तन्तुसमूहम् । अभितः सव्यापसव्य-तुरीचालनेन ।

(२७) अभ्रभ्राज्शब्दस्य संज्ञाशब्दत्वेन तेन सह प्रशब्दस्यान्वयायोगः, विष्णुपदपदस्यैव गगनवाचकत्वं न तु हरिपदविष्णुधामादीनाम्, एकत्रि-पञ्चाश्वानामपि विषमाश्वतया न सप्ताश्व एव विषमाश्वपदवाच्य इति ।

(२८) पावकान्वये पवित्रवंशे, अत्र वह्निसम्बन्धे इति व्यज्यते ।

सुरालयोल्लासपरः प्राप्तपर्य्याप्तकम्पनः ।
मार्गणप्रवणो भास्वद्भूतिरेष विलोक्यते ॥

अत्र किं सुरादिशब्दा देव-सेना-शर-विभूत्यर्थाः, किं वा मदिराद्यर्थाः ? इति सन्देहः ।

तस्याधिमात्रोपायस्य तीव्रसंवेगताजुषः ।
दृढ़भूमिः प्रियप्राप्तौ यत्नः स फलितः प्रभो । (२९) ॥

अत्राधिमात्रोपायादयः शब्दाः योगशास्त्रमात्रप्रयुक्तत्वात् अप्रतीताः ।

ताम्बूलभृतगल्लोऽयं भल्लं जल्पति मानुषः ।
करोति खादनं पानं सदैव तु यथा तथा ॥

अत्र गल्लादयः शब्दा ग्राम्याः ।

वस्त्रवैदूर्य्यचरणैः क्षतसत्वरजःपरा ।
निष्कम्पा रचिता, नेत्रयुद्धं वेदय साम्प्रतम् ॥

अत्राम्बररत्नपादैः क्षततमाः अचला (भूः) कृता, नेत्रद्वन्द्वं बोधयेति नेयार्थता (३०) ।

---

(२९) अधिमात्रस्तन्नामकः (उत्कटः) उपायः श्रद्धादिर्यस्य, तथाभूतस्य ; दृढ़ा व्युत्थानसंस्काराद्यैरनभिभूता भूमिः चित्तैकाग्रतारूपविषयो यस्य सः । अत्र "उपायाः श्रद्धादयः मृदुमध्याधिमात्राः, संवेगो वैराग्यं, तस्य मृदुमध्यतीव्रता" इति पातञ्जलभाष्यव्याख्यायां वाचस्पत्युक्तं "तीव्रसंवेगानामासन्नः" इति सूत्रस्यानुसन्धेयम् ।

(३०) अत्र वस्त्र-वैदूर्य्य-चरण-सत्वरजःपर-निष्कम्पा-युद्ध-वेदयेति-पदैः स्वस्वान्यवस्त्रादिवाचकत्वसम्बन्धेन यथाक्रमं अम्बर-रत्न-पाद-तमोऽचला-द्वन्द्व-बोधयेति पदानि लक्ष्यन्ते । तैश्च क्रमेण आकाश-मणि-(सूर्य्य)-किरण-अन्धकार-पृथिवी-युगल-उन्मीलयेत्यर्था उपस्थाप्यन्ते इति केचित् । अपरे तु

धम्मिल्लस्य न कस्य प्रेक्ष्य निकामं कुरङ्गशावाक्ष्याः ।
रज्यत्यपूर्व्वबन्धव्युत्पत्तेर्मानसं शोभाम् ॥

अत्र धम्मिल्लस्य शोभां प्रेक्ष्य कस्य मानसं न रज्यतीति सम्बन्धे क्लिष्टत्वम् ।

न्यक्कारो ह्ययमेव मे, यदरयस्तत्राप्यसौ तापसः,
सोऽप्यत्रैव निहन्ति राक्षसकुलं ! जीवत्यहो रावणः ।
धिक् धिक् शक्रजितं, प्रबोधितवता किं कुम्भकर्णेन वा,
स्वर्गग्रामटिकाविलुण्ठनवृथोच्छूनैः किमेभिर्भुजैः ॥

अत्रायमेव न्यक्कार इति वाच्यम्, उच्छूनत्वमात्रञ्च अनुवाद्यं, न वृथात्वविशेषितम् ( ३१ )। अत्र च शब्दरचना विपरीता कृतेति वाक्यस्यैव दोषो न वाक्यार्थस्य । यथा वा,

अपाङ्गसंसर्गि तरङ्गितं दृशो-
र्भ्रुवोररालान्तविलासि वेल्लनम् ।
विसारि रोमाञ्चितकञ्चुकं तनो-
स्तनोति योऽसौ सुभगे, तवागतः ॥

---

वक्त्रादिपदैरेव स्ववाच्यवक्त्रादिवाचकाम्बरादिपदवाच्यत्वसम्बन्धेन आकाशा-दय एव लक्ष्यन्त इति वदन्ति । उभयमतेऽपि ईदृशलक्षणाङ्गीकारे रूढि-प्रयोजनविशेषयोरभावान्नेयार्थता ।

(३१) अयं भावः, 'किमेभिः' इत्यनेन वृथात्वविधाने नीलपटस्य नीलत्वविधिवत् वृथोच्छूनस्य वृथात्वविधानमसङ्गतं स्यात् ; वैफल्यविधाने च वृथोच्छूनस्य वैफल्यम् औचित्येन सिद्धमेवेति तद्विधानमनर्थकमिति वृथात्वविशेषणसत्त्वे विधेयत्वप्रतीतिव्याघात इतीत्थमपि विधेयाविमर्षदोषः ।

अत्र योऽसाविति पदद्वयमनुवादमात्रप्रतीतिकृत् ।

[तथा हि, (३२) प्रक्रान्तप्रसिद्धानुभूतार्थविषयस्तच्छब्दो यच्छब्दोपादानं नापेक्षते ; क्रमेणोदाहरणम्,—

कातर्य्यं केवला नीतिः, शौर्य्यं श्वापदचेष्टितम् ।
अतः सिद्धिं समेताभ्यामुभाभ्यामन्वियेष सः ॥ (प्रक्रा०)

द्वयं गतं सम्प्रति शोचनीयताम्
समागमप्रार्थनया कपालिनः ।
कला च सा कान्तिमती कलावत-
स्त्वमस्य लोकस्य च नेत्रकौमुदी ॥ (प्रसि०)

उत्कम्पिनी भयपरिस्खलितांशुकान्ता
ते लोचने प्रतिदिशं विधुरे क्षिपन्ती ।
क्रूरेण दारुणतया सहसैव दग्धा
धूमान्धितेन दहनेन, न वीक्षिताऽसि ! ॥ (अनु०)

यच्छब्दस्तु उत्तरवाक्यानुगतत्वेनोपात्तः सामर्थ्यात् पूर्ववाक्यानुगतस्य यच्छब्दस्योपादानं नापेक्षते, यथा,

साधु चन्द्रमसि पुष्करैः कृतं मीलितं यदभिरामताधिके ।
उद्यता जयिनि कामिनीमुखे तेन साहसमनुष्ठितं पुनः ॥

(३२) 'यत्तदर्थयोर्नित्योऽभिसम्बन्धः' इति नियमेन पूर्व्वनिर्द्दिष्टोद्देश्यवाक्यगतो यच्छब्दो नियतमेव विधेयवाक्यगतं तच्छब्दं तच्छब्दसमानार्थं वा अदःशब्दादिकमपेक्षते । अत्र च विधेयवाक्ये तच्छब्दो नोपात्तः, यश्च 'असौ' इति उक्तः, सोऽपि यच्छब्दसान्निध्यात् यदर्थविशेषणतया प्रसिद्धार्थमभिदधत् उद्देश्यवाक्यएवान्तर्भवति न तु विधेयवाक्ये,–इति विधेयवाक्यस्यासंपूर्णतया उद्देश्यविधेयभावानवगम इति । इममेवार्थं यत्तदर्थयोः साकाङ्क्षत्वप्रतिपादनपूर्व्वकं प्रदर्शयति तथाहीत्यादिना । 'तथाभूतमेव तच्छब्देन परामृश्यते' इत्यन्तेन ।

प्रागुपात्तस्तु यच्छब्दस्तच्छब्दोपादानं विना साकाङ्क्षः, यथा, अत्रैव श्लोके आद्यपादयोर्व्यत्यासे । द्वयोरुपादाने तु निराकाङ्क्षत्वं प्रसिद्धम् । अनुपादानेऽपि सामर्थ्यात्क्वचित् द्वयमपि गम्यते । यथा,-

ये नाम केचिदिह नः प्रथयन्त्यवज्ञां,
जानन्ति ते किमपि, तान् प्रति नैष यत्नः ।
उत्पत्स्यतेऽस्ति मम कोऽपि समानधर्म्मा
कालो ह्ययं निरवधिर्विपुला च पृथ्वी ॥

अत्र य उत्पत्स्यते तं प्रतीति । एवञ्च] तच्छब्दानुपादानेऽत्र (३३) साकाङ्क्षत्वम् । नच,असाविति तच्छब्दार्थमाह,

असौ मरुच्चुम्बितचारुकेसरः प्रसन्नताराधिपमण्डलाग्रणीः ।
वियुक्तरामातुरदृष्टिवीक्षितो वसन्तकालो हनुमानिवागतः ॥

अत्र हि न तच्छब्दार्थप्रतीतिः, प्रतीतौ वा,

करवालकरालदोःसहायो युधि योऽसौ विजयार्जुनैकमल्लः ।
यदि भूपतिना स तत्र कार्ये विनियुज्येत ततः कृतं कृतं स्यात् ॥

अत्र स इत्यस्यानर्थक्यं स्यात् । अथ,

योऽविकल्पमिदमर्थमण्डलं पश्यतीश, निखिलं भवद्वपुः ।
आत्मपक्षपरिपूरिते जगत्यस्य नित्यसुखिनः कुतो भयम् ॥

-इतीदंशब्दवददःशब्दस्तच्छब्दार्थमभिधत्त इति । उच्यते, तच्छब्दत्रैव वाक्यान्तरे उपादानमर्हति न तत्रैव, यच्छब्दस्य हि निकटे स्थितः प्रसिद्धिं परामृशति ।

---

(३३) अत्र अपाङ्गसंसर्गीति श्लोके ।

यथा,-

यत्तदूर्जितमत्युग्रं क्षात्रं तेजोऽस्य भूपतेः ।
दीव्यताऽक्षैस्तदानेन नूनं तदपि हारितम् ॥

इत्यत्र तच्छब्दः । ननु कथं,

कल्याणानां त्वमसि महसां भाजनं विश्वमूर्त्ते,
धुर्य्यां लक्ष्मीमथ मयि भृशं धेहि, देव, प्रसीद ।
यद्यद्पापं प्रतिजहि जगन्नाथ, नम्रस्य तन्मे
भद्रं भद्रं वितर भगवन्, भूयसे मङ्गलाय ॥

अत्र 'यद्यद्'इत्युक्त्वा 'तन्मे' इत्युक्तम् (३४)। उच्यते,-'यद्यद्'-इति येनकेनचिद्रूपेण स्थितं सर्व्वात्मकं वस्तु आक्षिप्तं, तथाभूतमेव तच्छब्देन परामृश्यते (३५) । यथा वा,-

किं लोभेन विलङ्घितः स भरतो येनैतदेवं कृतं
माता ? स्त्रीलघुतां गता किमथवा मातैव मे मध्यमा ।
मिथ्यैतन्मम चिन्तितं द्वितयमप्यार्य्यानुजोऽसौ, गुरु-
र्माता तातकलत्रमित्यनुचितं मन्ये विधात्रा कृतम् ॥

---

(३४) यदि यच्छब्दस्य नियतमेव तच्छब्दसाकाङ्क्षता, तदा कथमत्र श्लोके निराकाङ्क्षतानिर्व्वाहः, अत्र हि एकेन तत्पदेन एकस्य यत्पदस्य निराकाङ्क्षत्वेऽपि द्वितीयस्य साकाङ्क्षत्वमस्त्येवेति पूर्व्वपक्षः ।

(३५) पूर्व्वोपस्थितार्थपरामर्शकेन तत्पदेन पूर्व्वोक्तानां सर्व्वेषामेवाविशेषेण परामर्शसम्भवादत्रत्येन तत्पदेन एकेनापि यत्पदद्वयोक्तं ज्ञाताज्ञातरूपं सर्व्व-प्रकारमेव पापरूपं वस्तु परामृशता यद्यत्पदद्वयमेव निराकाङ्क्षीक्रियते-इति भावः । प्रदीपकृतस्तु यद्यदिति न पदद्वयं किन्तु "नित्यवीप्सयोः"(८।१।४) इति सूत्रेण वीप्सयां यदो द्वित्वापन्नोऽयमादेशः, तथाचादेशिना यत्पदेन तत्पदेन च द्वाभ्यामप्येकेनैव रूपेण पापपरामर्शः, आदेशस्तु साकल्येन सम्बन्धपरतामात्रकः, एकत्वेन तेन तदुपपत्तौ न तच्छब्देऽपि तदपेक्षा-इत्याहुः ।

अत्रार्य्यस्येति तातस्येति च वाच्यं, तत्वनयोः समासे गुणीभावः कार्य्यः । एवं समासान्तरेष्वप्युदाहार्य्यम् ।

विरुद्धमतिकृद् यथा,-

श्रितक्षमा रक्तभुवः शिवालिङ्गितमूर्त्तयः ।
विग्रहक्षपणेनाद्य शेरते ते गतासुखाः (३६) ॥

अत्र क्षमादिगुणयुक्ताः सुखमासते इति विवक्षिते हता इति विरुद्धा प्रतीतिः (३७) ।

पदैकदेशे यथासम्भवं क्रमेणोदाहरणम्,-

अलमतिचपलत्वात् स्वप्नमायोपमत्वात्
परिणतिविरसत्वात्सङ्गमेनाङ्गनायाः ।
इति यदि शतकृत्वस्तत्त्वमालोचयाम-
स्तदपि न हरिणाक्षीं विस्मरत्यन्तरात्मा ॥

अत्र 'त्वात्' इति । यथा वा,-

तद्गच्छ सिद्ध्यै कुरु देवकार्य्यमर्थोऽयमर्थान्तरलभ्य एव ।
अपेक्षते प्रत्ययमङ्ग लब्ध्यै बीजाङ्कुरः प्रागुदयादिवाम्भः ॥

अत्र, 'द्ध्यै' 'ब्ध्यै' इति कटु (३८) ।

यश्चाप्सरोविभ्रममण्डनानां
सम्पादयित्रीं शिखरैर्बिभर्त्ति ।
बलाहकच्छेदविभक्तरागाम्
अकालसन्ध्यामिव धातुमत्ताम् ॥

---

(३६) विरुद्धपक्षे गता असवः प्राणाः खानि इन्द्रियाणि च येषां ते ।

(३७) अमतपरार्थत्वे विरुद्धोऽप्यर्थो विवक्षितः, प्रकाशितविरुद्धत्वेऽर्थस्य व्यञ्जकत्वम्, अत्र तु पदस्येति आभ्यामस्य भेद इति प्रदीपः ।

(३८) एकत्र पदे बहूनां वर्णानां कटुत्वे पददोषत्वं, तेन हि पदस्यैव कटुत्वप्रतीतेः, एकस्य वर्णस्य तथात्वे च पदैकदेशदोषत्वम् ।

अत्र मन्ताशब्दः क्लीवार्थे निहतार्थः।

आदावञ्जनपुञ्जलिप्तवपुषां श्वासानिलोल्लासित-
प्रोत्सर्पद्विरहानलेन च ततः सन्तापितानां दृशाम्।
सम्प्रत्येव निषेकमश्रुपयसा देवस्य चेतोभुवो
भल्लीनामिव पानकर्म (३९) कुरुते कामं कुरङ्गेक्षणा॥

अत्र 'दृशाम्' इति बहुवचनं निरर्थकं, कुरङ्गेक्षणाया एकस्या एवोपादानात्। नच, 'अलसवलित'-इत्यादिवत् (४०) व्यापारभेदाद्बहुत्वं; व्यापाराणामनुपात्तत्वात्, न च, व्यापारेऽत्र दृक्शब्दो वर्त्तते। अत्रैव, 'कुरुते'-इत्यात्मनेपदमप्यनर्थकम्, प्रधानक्रियाफलस्य कर्त्रसम्बन्धे कर्त्रभिप्रायक्रियाफलाभावात् (४१)।

---

(३९) धारायाः तैक्ष्ण्यार्थं शस्त्रं पङ्केन लिप्त्वाऽग्नौ सन्ताप्य पयसि निक्षिप्यते इति, एतदेव पानकर्मेत्युच्यते इति नागेशभट्टाः।

(४०) "अलसवलितैः प्रेमार्द्रार्द्रैर्मुहुर्मुकुलीकृतैः
क्षणमभिमुखैर्लज्जालोलैर्निमेषपराङ्मुखैः।
हृदयनिहितं भावाकूतं वमद्भिरिवेक्षणैः
कथय सुकृती कोऽयं मुग्धे, त्वयाद्य विलोक्यते" इत्यत्रेवेत्यर्थः।

(४१) 'प्रधानस्य' मुख्यस्य 'क्रियाफलस्य' (प्रकृते) सकलविलासिजनविजयरूपस्य, 'कर्त्तरि' कुरङ्गेक्षणालक्षणे 'असम्बन्धे' अविद्यमानत्वे। ननु 'दीनं त्वामनुनाथते' इत्यत्रेव च्युतसंस्कृतिरेवात्र दोष आस्तामिति चेत्। न, वैषम्यात्, तथाहि, "आशिषि नाथः" (२।१।५५) इति सूत्रेण आशिषि आत्मनेपदं नियमयता तद्भिन्ने याचनाद्यर्थे विवक्षिते आत्मनेपदं व्यवच्छिद्यते इति याचनार्थे प्रयुक्तं आत्मनेपदं च्युतसंस्कृतमस्तु, प्रकृते तु एकत्वादिसंख्याविशेषाविवक्षायां क्रियाफलस्य पराभिप्रेतत्वाद्यविवक्षायाञ्च प्रयुक्तं बहुवचनं

चापाचार्य्यस्त्रिपुरविजयी, कार्त्तिकेयो विजेयः,
शस्त्रव्यस्तः सदनमुदधिर्भूरियं हन्तकारः ।
अस्त्येवैतत्, किमु कृतवता रेणुकाकण्ठबाधाम्
बद्धस्पर्द्धस्तव परशुना लज्जते चन्द्रहासः (४२) ॥

अत्र 'विजेयः'-इति कृत्यप्रत्ययः क्तप्रत्ययार्थेऽवाचकः (४३) ॥

अतिपेलवमतिपरिमितवर्णं लघुतरमुदाहरति शठः ।
परमार्थतः स हृदयं वहति पुनः कालकूटघटितमिव ॥ (व्रीडा०)

अत्र पेलवशब्दः ।

य: पूयते सुरसरिन्मुखतीर्थसार्थ-
स्नानेन शास्त्रपरिशीलनकीलनेन ।

---

आत्मनेपदं च न च्युतसंस्कृतं, "बहुषु बहुवचनम्" (१।४।२१) इत्यनेन "स्वरितञितः कर्त्रभिप्राये क्रियाफले" (१।३।७२) इत्यनेन च सूत्रेण यथाक्रमं बहुषु बहुवचनं कर्त्रभिप्रेतक्रियाफले विवक्षिते आत्मनेपदस्य नियमयता एकत्वादिविवक्षायां बहुवचनं, पराभिप्रेतक्रियाफलविवक्षायामात्मनेपदस्य व्यवच्छिद्यते, न तु तत्तदविवक्षास्थलेऽपि तस्य तस्य व्यवच्छेदः, परन्तु तत्तदर्थाविवक्षायां तेषां प्रयोगो निरर्थक इति यथोक्तमेव सम्यक् । एवमेव प्रदीपः ।

(४२) हन्तकारः षोडशग्रासात्मिका भिक्षा,-
'ग्रासप्रमाणा भिक्षा स्यादग्रन्त्वा, तच्चतुष्टयम् ।
अग्रं, चतुर्गुणं प्राहुर्हन्तकारं द्विजोत्तमाः' ॥ इति मार्कण्डेयात् ।
पुरा किल परशुरामः कार्त्तिकं विजितवान्, कश्यपाय पृथिवीं दत्त्वा शस्त्रेण समुद्रमुत्सार्य तदाभोगे उवास, परशुना रेणुकानाम्नीं स्वमातरं जघान चेति पौराणिकी गाथा ।

(४३) अर्हार्थे विहितेन यत्प्रत्ययेनातीतकालोपस्थापनासम्भवः । यत्प्रत्ययमात्रगतत्वेनात्र पदैकदेशदोषोऽयम् । 'विदधदभिनवः' इत्यादौ तु धातूपसर्गयोः सम्बन्धात् सम्भवोऽयं दोषस्तदुभयगतत्वात् पददोषः ।

सौजन्यमान्यजनिरूर्जितमूर्जितानां
सोऽयं हृयोः पतति कस्यचिदेव पुंसः ॥ (जुगु०)

अत्र पूयशब्दः ।

विनयप्रणयैककेतनं सततं योऽभवदङ्ग तादृशः ।
कथमद्य स तद्वदीक्ष्यतां तदभिप्रेतपदं समागतः ॥ (अम०)

अत्र प्रेतशब्दः ।

कस्मिन् कर्म्मणि सामर्थ्यमस्य नोत्पतेतराम् ।
अयं साधुचरस्तस्मादञ्जलिर्बध्यतामिह ॥

अत्र किं पूर्व्वं साधुः उत साधुषु चरतीति सन्देहः (४४)।

किमुच्यतेऽस्य भूपालमौलिमालामहामणेः ।
सुदुर्लभं वचोवाणैस्तेजो यस्य विभाव्यते ॥ (नेया०)

अत्र वचःशब्देन गीःशब्दो लक्ष्यते। अत्र खलु न केवलं पूर्व्वपदं, यावदुत्तरपदमपि पर्य्यायपरिवर्त्तनं न क्षमते। जल-ध्यादावुत्तरपदमेव, वड़वानलादौ पूर्वपदमेव।

यद्यप्यसमर्थत्वस्यैवाप्रयुक्तत्वादयः केचन भेदाः, तथाप्यन्यैः अलङ्कारकारैर्विभागेन दर्शिता इति, भेदप्रदर्शनेनोदाहृत्त व्या इति च विभज्योक्ताः (४५) ॥

---

(४४) अत्र चरभागो "भूतपूर्व्वे चरट्"(५।३।५३) इति चरट्प्रत्ययः किंवा "चरेष्टः" (३।२।१६) इति टान्तचरधातुः ? इति सन्देहात् उक्तार्थसन्देहः ।

(४५) सामान्यतो विवक्षितार्थप्रतीतिसामर्थ्यविरह एवासामर्थ्यपदेनोच्यतां, स च अप्रयुक्तत्वावाचकत्वनिहतार्थत्वसाधारण इति किमुक्तस्य प्रभेदकरणेनेति पूर्व्वपक्षयित्वा, प्राचीनप्रणाल्यनुसरणेन, शिष्याणां प्रभेदप्रदर्शनद्वारा उदाहरणसौपनाहुरोधेन च एवं कृतमिति सिद्धान्तयति यद्यपीति ।

प्रतिकूलवर्णमुपहत-
लुप्तविसर्गं विसन्धि हतवृत्तम् ।
न्यूनाधिककथितपदम्
पतत्प्रकर्षं समाप्तपुनरात्तम् ॥ ५ ॥
अर्द्धान्तरैकवाचकम्
अभवन्मतयोगमनभिहितवाच्यम् ।
अपदस्थपदसमासं
सङ्कीर्णं गर्भितं प्रसिद्धिहतम् ॥ ६ ॥
भग्नप्रक्रममक्रमम्
अमतपरार्थं च वाक्यमेव तथा (४६) ।

रसानुगुणत्वं वर्णानां वक्ष्यते (८ प०), तद्विपरीतं प्रतिकूलवर्णं ।
यथा शृङ्गारे,-

अकुण्ठोत्कण्ठया पूर्णमाकण्ठं कलकण्ठि, माम् ।
कम्बुकण्ठ्याः क्षणं कण्ठे कुरु कण्ठार्त्तिमुद्धर ॥

रौद्रे यथा,-

देशः सोऽयमरातिशोणितजलैर्यस्मिन् ह्रदाः पूरिताः,
क्षत्रादेव तथाविधः परिभवस्तातस्य केशग्रहः ।
तान्येवाहितशस्त्रघस्मरगुरूण्यस्त्राणि भास्वन्ति मे,
यद्रामेण कृतं, तदेव कुरुते द्रोणात्मजः क्रोधनः ॥

---

(४६) इदमत्रावधेयम्, क्लिष्टत्वमिव प्रतिकूलवर्णत्वादीनामपि केषाञ्चित् समासगतत्वेन पददोषत्वं सम्भवतीति प्रदीपः ।

अत्र हि विकटवर्णत्वं दीर्घसमासत्वञ्च उचितम्। (यथा,-

प्रागप्राप्तनिशुम्भशाम्भवधनुर्द्वेधाविधाविर्भवत्-
क्रोधप्रेरितभीमभार्गवभुजस्तम्भापविद्धः क्षणात्।
उज्ज्वालः परशुर्भवत्वशिथिलस्त्वत्कण्ठपीठातिथि-
र्येनानेन जगत्सु खण्डपरशुर्देवो हरः ख्याप्यते (४७)॥

यत्र तु न क्रोधस्तत्र चतुर्थपादाभिधाने तथैव शब्दप्रयोगः।)

उपहत ओत्वं प्राप्तो लुप्तो वा विसर्गो(४८)यत्र तत्। यथा,-

धीरो विनीतो निपुणो वराकारो नृपोऽत्र सः।
यस्य भृत्या बलोत्सिक्ता भक्ता बुद्धिप्रभाविताः (४९)॥

विसन्धिः सन्धेर्वैरूप्यं,-विश्लेषः(५०)[१] अश्लीलत्वं [२]

---

(४७) निशुम्भो नमनं। हरेण स्वपरशोरेकः खण्डः परशुरामाय दत्त इति चन्द्रिका।

(४८) "अतो रोरप्लुतादप्लुते" (६।१।११२ पा०) इति सूत्रेण उत्वप्राप्तिः।

(४९) बुद्धिप्रभावयुक्ताः, (इतच्प्रत्ययः)। पूर्व्वार्द्धे उपहतविसर्गत्वं, उत्तरार्द्धे तु लुप्तविसर्गत्वमिति। उपहतविसर्गाणां लुप्तविसर्गाणाञ्च बहूनां मिलने एव दोषः।

(५०) विश्लेषः अभावः। सन्ध्यभावः पुनर्द्विविधः, 'वाक्ये तु सा विवक्षामपेक्षते' इत्यनुसारेण ऐच्छिकः, आनुशासनिकश्चेति, तत्रान्त्योऽपि प्रगृह्यहेतुको ऽसिद्धिहेतुकश्चेति द्विविधः, तत्रोदाहृतपूर्व्वश्लोकस्य पूर्व्वार्द्धे 'तामि इन्दोः' इत्यत्रैच्छिको सन्ध्यभावः। उत्तरार्द्धे तु "ईदूदेद् द्विवचनं प्रगृह्यम्"(१।१।११ पा०) इत्यनेन द्विवचनस्य प्रगृह्यसंज्ञकस्य "प्लुतः प्रगृह्या अचि" (६।१।१२५ पा०) इति सूत्रेण प्रकृतिवद्भावविधानात् प्रगृह्यहेतुकः आनुशासनिकः सन्ध्यभावः। उत्तरश्लोके तु "लोपः शाकल्यस्य" (८।२।१९) इति सूत्रेण विहितस्यापि लोपस्य "आद्गुणः" (६।१।

कष्टत्वञ्च [३]। आद्यं यथा,-

राजन् विभान्ति भवतश्चरितानि तानि,
इन्दोर्द्युतिं दधति यानि रसातलेऽन्तः ।
धीदोर्बले अतितते उचितानुवृत्ती
आतन्वती विजयसम्पदमेत्य भातः ॥

यथा वा,-

तत उदित उदारहारहारि-द्युतिरुच्चैरुदयाचलादिवेन्दुः ।
निजवंश उदात्तकान्तकान्तिर्बत मुक्तामणिवच्चकास्त्यनर्घः ॥ [१]

संहितां न करोमीति स्वेच्छया सकृदपि दोषः । प्रगृह्यादिहेतुकत्वे तु असकृत् ।

वेगादुड्डीय गगने चलण्डामरचेष्टितः ।
अयमुत्पतते पत्री ततोऽत्रैव रुचिङ्कुरु (५१) ॥ [२]

अत्र सन्धावश्लीलता ।

उर्व्यसावत्र तर्वाली मर्वन्ते चार्ववस्थितिः ।
नात्रर्जु युज्यते गन्तुं शिरो नमय तन्मनाक् ॥ [३]

हतं लक्षणानुसरणेऽप्यश्रव्यं(५२)[१],अप्राप्तगुरुभावान्तलघु[२], रसाननुगुणञ्च[३] वृत्तं यत्र, तत् हतवृत्तं। क्रमेणोदाहरणम्,-

---

८७ पा०) इत्यनेन विहितं गुणं प्रति "पूर्व्वत्रासिद्धम्" (८ । २ । १)इत्यनेनासिद्धिविधानादसिद्धिहेतुकः सन्धेरभावः ।

(५१) नायकाधिष्ठितं सङ्केतस्थानं बोधयन्त्या दूत्या इयमुक्तिः । 'चलण्डा-'इति जुगुप्साव्यञ्जकः । 'चिङ्कु'-इति व्रीडाव्यञ्जकः ।

(५२) 'लक्षणं' गुर्व्वादिनियामकम्, अपिशब्दात् तदननुसरणं समुच्चीयते। वृत्तस्य अश्रव्यत्वञ्च छन्दोभङ्गात् यतिभङ्गात् स्थानविशेषे गणविशेषयोगाच्च। तत्राद्यं प्रसिद्धत्वादुपेक्ष्यान्त्ये उदाहृते ।

अमृतममृतं कः सन्देहो, मधुन्यपि, नान्यथा,
मधुरमधिकं, चूतस्यापि प्रसन्नरसम्फलम् ।
सकृदपि पुनर्मध्यस्थः सन् रसान्तरविज्जनो
वदतु, यदिहान्यत् स्वादु स्यात्प्रियारदनच्छदात् ॥

अत्र 'यदिहान्यत् स्वादु स्यात्'-इत्यश्रव्यम् (५३)। यथा वा,

जो परिहरिउं तीरइ मणम्मि ण सुन्दरत्तणगुणेण ।
अह णवर जस्स दोसो पडिवक्खेहिं पि पडिवण्णो (५४) ॥ [१]

अत्र द्वितीयतृतीयगणौ सकारभकारौ ।

विकसितसहकारभारहारि-
परिमलपुञ्जितगुञ्जितद्विरेफः ।
नवकिसलयचारुचामरश्री-
र्हरति मुनेरपि मानसं वसन्तः ॥

अत्र हारिशब्दः । (हारि-प्रमुदितसौरभेति पाठो युक्तः ।)
यथा वा,-

धन्यास्ता गुणरत्नरोहणभुवो धन्या मृदन्यैव सा,
सम्भाराः खलु तेऽन्य एव, विधिना यैरेष सृष्टो युवा ।

---

(५३) अत्र हि हरिणीच्छन्दसि 'वदतु यदिहा' इति षष्ठाक्षर-स्थाने उचिताऽपि यतिर्भग्ना, षष्ठाक्षरस्य 'हा'-इत्यस्य परपदसम्बन्धसापेक्षत्वात् । "न स म र स ला गः षड्वेदैर्हयैर्हरिणी मता", इति हरिणी-लक्षणम् ।

(५४) यः परिहर्त्तुं तीर्य्यते मनागपि न सुन्दरत्वगुणेन ।
अथ केवलं यस्य दोषः प्रतिपक्षैरपि प्रतिपन्न इति सं० ॥

णवरशब्दो केवलवाची, अपिरेवार्थः । अत्र आर्य्यायां द्वितीयस्य 'हरिउं' इत्यन्तगुरोः सगणस्य, तृतीयस्य च 'तीरइ' इत्यादिगुरोर्भगणस्य अव्यवधानादश्रव्यत्वमानुभविकम् ।

श्रीमत्कान्तिजुषां द्विषां करतलात्, स्त्रीणां नितम्बस्थलात्
दृष्टे यत्र पतन्ति मूढमनसामस्त्राणि वस्त्राणि च ॥

अत्र वस्त्राण्यपीति पाठे लघुरपि गुरुतां भजते (५५)। [२]

हा नृप ! हा बुध ! हा कविबन्धो ! विप्रसहस्रसमाश्रय, देव ।
मुग्धविदग्धसभान्तररत्न, क्वासि गतः, क्व वयञ्च तवैते ॥ [३]

हास्यरसव्यञ्जकमेतद्वृत्तम् (५६)। न्यूनपदं यथा,-

तथाभूतां दृष्ट्वा नृपसदसि पाञ्चालतनयां,
वने व्याधैः सार्द्धं सुचिरमुषितं वल्कलधरैः ।
विराटस्यावासे स्थितमनुचितारम्भनिभृतम्,
गुरुः खेदं खिन्ने मयि भजति नाद्यापि कुरुषु ! ॥

अत्र, अस्माभिरिति, 'खिन्ने'-इत्यस्मात् पूर्व्वम् 'इत्थम्' इति (५७) च।

---

(५५) प्रथमे पुष्पिताग्रावृत्तं, "अयुजि नयुग-रेफतो यकारो युजि तु नजौ जरगाश्च पुष्पिताग्रा" इति तल्लक्षणम्। उत्तरे तु शार्दूलविक्रीडितं वृत्तं, "सूर्य्याश्वैर्यदि मः सजौ सततगाः शार्दूलविक्रीडितम्" इति तल्लक्षणम्। अत्र "तथा पादान्तगोऽपि वा" इति गुरुत्वनियामक-लक्षणानुसरणेऽपि बन्धशैथिल्यात् गुरुकार्य्यकरणाक्षमत्वेन दोषः, 'वस्त्राण्यपि' इति पाठे तु बन्धदार्ढ्येन गुरुभावप्राप्तिरिति न दोषः। तथाच पादान्त-लघोर्गुरुत्वे बन्धदार्ढ्यमेव हेतुः।

(५६) करुणे पुष्पिताग्रादीनां, शृङ्गारादौ स्रग्धरादीनां, वीरे शिखरिणीमन्दाक्रान्तादीनां, हास्ये च दोधकादेः आनुगुण्यमिति नागेशः।

(५७) येन विना वाक्यत्वहानिः क्रियाकारकाद्यन्यतमरूपस्य तस्य पदस्य, तत् पदस्य यत्पदमाकाङ्क्षति, तस्य च अकथने एव न्यूनपदत्वं, यथोदाहरणे,-'अस्माभिः'-इति कारकपदस्य, 'खिन्ने'-इति कारकपदेन आकाङ्क्षितस्य 'इत्थम्' इति पदस्य च अनभिधानम्। एतदतिरिक्तपदान-भिधानं वाच्यानभिधानस्य विषयः। उभयत्रैव प्रकरणादितो विवक्षितार्थप्रतीति-र्भवति। साकाङ्क्षत्वे तु नैयमितिभेदः।

अधिकपदं यथा,-

स्फटिकाकृतिनिर्मलः प्रकामं
प्रतिसंक्रान्तनिशातशास्त्रतत्त्वः।
अविरुद्धसमन्वितोक्तियुक्तः
प्रतिमल्लास्तमयोदयः स कोऽपि (५८)॥

अत्र, आकृतिशब्दः। यथा वा,-

इदमनुचितमक्रमश्च पुंसां,
यदिह जरास्वपि मान्मथा विकाराः।
यदपि च न कृतं नितम्बिनीनां
स्तनपतनावधि जीवितं रतं वा॥

अत्र कृतमिति कृतं (५९), प्रत्युत प्रक्रमभङ्गमावहति। (तथाच, यदपि च न कुरङ्गलोचनानामिति पाठे निराकाङ्क्षैव प्रतीतिः।) कथितपदं यथा,-

अधि-करतलतल्पं कल्पितस्वापलीला-
परिमिलननिमीलत्पाण्डिमा गण्डपाली।

---

(५८) प्रतिमल्लानामस्तमयस्य ( पराभवस्य ) उदयः प्रारम्भो यस्मात्, सः। पूर्वं केनाप्यपराभूतानामपि ततः पराभवारम्भ इत्यर्थः, स च उदयपदादेव लभ्यत इति नोदयपदव्यर्थता।

(५९) 'कृतं' अधिकं कृतं व्यर्थं वा, पूर्व्वार्द्धे पुंसां धर्म्मिणां विकाररूपधर्म्मस्यानौचित्यकथनम्; उत्तरार्द्धे तु जीवितरतयोर्धर्म्मिणोः स्तनपतनावधित्वाकरणस्येति प्रक्रमभङ्गः। एवं 'यदपि च' इति समुच्चयार्थकेन चकारेण समुच्चितमन्यत् किमपि, 'न कृतम्' इत्यनेनान्वेतुमाकाङ्क्षितमस्तीति।

सुतनु, कथय कस्य व्यञ्जयत्यञ्जसैव
स्मरनरपतिलीलायौवराज्याभिषेकम् (६०) ॥

अत्र लीलेति । पतत्प्रकर्षं यथा,-

कस्त्वः कुत्र न घुर्घुरायितघुरी घोरो घुरेत्सूकरः,
कस्त्वः कं कमलाकरं विकमलं कर्त्तुं करी नोद्यतः ।
के के कानि वनान्यरण्यमहिषा नोन्मूलयेयुर्यतः
सिंहीस्नेहविलासबद्धवसतिः पञ्चाननो वर्त्तते ॥

समाप्तपुनरात्तं (६१) यथा,-

क्रेङ्कारः स्मरकार्मुकस्य, सुरतक्रीडापिकीनां रवः,
झङ्कारो रतिमञ्जरीमधुलिहां, लीलाचकोरीध्वनिः ।
तन्व्याः कञ्चुलिकापसारणभुजाक्षेपस्खलत्कङ्कण-
क्वाणः प्रेम तनोतु वो नववयोलास्याय वेणुस्वनः ॥

द्वितीयार्द्धगतैकवाचकशेषप्रथमार्द्धं ( ६२ ) यथा,-

---

(६०) हद्रः स्मरः स्वेनाप्यवशीकृतां त्वां वशीकुर्व्वन्तं तं जनमवलोक्य अवश्यमेव रमणीजयलक्षणे स्वराज्येऽभिषेक्ष्यतीति भावः ।

(६१) क्रियाकारकान्वयेन समाप्तेऽपि वाक्ये विशेषाभिधित्सां विना पुनस्तद्वाक्यान्वयिपदाभिधानं यत्र, तत् । तथाहि अत्रोदाहरणे 'एतादृशः क्वाणः प्रेम तनोतु वः'-इत्यनेन वाक्यसमाप्तावपि श्लोकपूरणाय पुनः क्वाणस्य कर्त्तुः नवेत्यादिविशेषणाभिधानं, न च तत्र विशेषणदानस्यान्यत् प्रयोजनमस्ति ।

(६२) द्वितीयार्द्धगतम् 'एकं' वाचकं 'शेषम्' (अवशिष्टम्) यस्य, तादृशं प्रथमार्द्धं यत्र, तत्, यत्र प्रथमार्द्धगतं वाक्यं, द्वितीयार्द्धगतेन एकेन पदेन परिपूर्य्यते ; तत् अर्द्धान्तरैकवाचकमिति फलितम् । यथोदाहरणे भूः सद्मा ; तत् (तस्मात्) मस्तकचरणपातं गम्यतामिति प्रथमार्द्धगतं वाक्यं, द्वितीयार्द्धगतेन तदित्यनेन परिपूर्य्यते इति ।

मसृणचरणपातं गम्यतां, भूः सदर्भा,
विरचय सिचयान्तं मूर्ध्नि, घर्मः कठोरः।
तदिति जनकपुत्री लोचनैरश्रुपूर्णैः
पथि पथिकवधूभिः शिक्षिता वीक्षिता च ॥

अभवन् मतः (इष्टः) योगः (सम्बन्धः) यत्र, तत् (६३)। यथा,-

येषान्तास्त्रिदशेभदानसरितः पीताः प्रतापोष्मभि-
र्लीलापानभुवश्च नन्दनतरुच्छायासु यैः कल्पिताः।
येषां हुङ्कृतयः कृतामरपतिक्षोभाः क्षपाचारिणां,
किन्तैस्त्वत्परितोषकारि विहितं किञ्चित्प्रवादोचितम् ॥

अत्र "गुणानाञ्च परार्थत्वादसम्बन्धः समत्वात्स्यात्"(३।१।२२ जै०सू०) इत्युक्तनयेन यच्छब्दनिर्द्दिष्टानामर्थानां परस्परम् असमन्वयेन 'यैः'-इत्यत्र विशेष्यस्याप्रतीतिरिति। (क्षपाचारिभिरिति पाठे युज्यते समन्वयः (६४)। यथा वा,-

---

(६३) अत्र पदार्थयोरन्वयस्यैवासम्भवः; विधेयाविमर्शस्थले तु अन्वयसम्भवेऽपि उद्देश्यविधेयभावानवगम इति भेदः।

(६४) 'गुणानाम्' अप्रधानानां, 'परार्थत्वात्' प्रधानान्वयापेक्षित्वात्, 'असम्बन्धः' परस्परमनन्वयः, 'समत्वात्' प्रधानापेक्षित्वतौल्यात्। गुणानां परस्परमनाकाङ्क्षतया न परस्परमन्वयः, किन्तु प्रधानेनैव गुणानामिति सिद्धान्तः। प्रकृते तु 'यैः' इति यदर्थस्य विशेष्यतया क्षपाचारिसम्बन्धो विवक्षितः, स च न घटते, विभिन्नविभक्तिकत्वात्। यद्यपि 'यो गुणवान् तस्य यशः' इत्यादौ यत्तदर्थयोरिव यदर्थयोरपि भिन्नविभक्तिकतया उपस्थितयोरभेदान्वयः स्वीक्रियताम् इति,—येषां प्रतापोष्मभिः पीताः, यैः पानभुवः कल्पिताः, येषां हुङ्कृतय इति रीत्या सर्व्वेषामेव यदर्थानामभेदान्वये सति एकत्र क्षपाचारिपदार्थस्य विशेष्यत्वे सर्व्वत्रैव तस्य विशेष्यताप्रतीतिर्भवतीति। तदपि न, यदर्थानाम् उद्देश्यतयाऽप्रधानानां परस्परमन्वयासम्भवादिति। क्षपाचारिभि-

त्वमेवं सौन्दर्य्या, स च रुचिरतायाः परिचितः,
कलानां सीमानं परमिह युवामेव भजथः ।
अपि द्वन्द्वं दिष्ट्या तदिति सुभगे, संवदति वाम्,
अतः शेषं यत् स्याज्जितमिह तदानीं गुणितया (६५) ॥

अत्र, 'यत्'-इत्यत्र तत्-इति, 'तदानीम्'-इत्यत्र यदा-इति वचनं नास्ति । (चेत्स्यादिति युक्तः पाठः) । यथा वा,-

संग्रामाङ्गणमागतेन भवता चापे समारोपिते
देवाकर्णय येन येन सहसा यद्यत् समासादितम् ।
कोदण्डेन शराः, शरैररिशिरस्तेनापि भूमण्डलं,
तेन त्वं, भवता च कीर्त्तिरतुला, कीर्त्त्या च लोकत्रयम् ॥

अत्र, आकर्णनक्रियाकर्म्मत्वे कोदण्डं शरानित्यादि ( ६६ ),

---

रिति पाठे तु चापाचारिपदार्थस्य तैरिति तत्पदार्थविशेष्यतया प्रतीतौ तत्पदोपस्थितानां सर्व्वेषामेव यदर्थानां विशेष्यतया चापाचारिपदार्थस्य प्रतीतिः सम्भवति ।

(६५) 'तदिति' तस्मात्, 'वां' युवयोः,'द्वन्द्वं' मिथुनं,'दिष्ट्या' भाग्येन,'संवदति''अपि' योग्यमेव भवति, 'अतः" पूर्व्वोक्तात् 'शेषं' अवशिष्टं समागमरूपं, 'यत्' यदि 'स्यात्,' 'तदानीम्' 'इह' जन्मे 'गुणितया' सौन्दर्य्यादिना, 'जितम्' उत्कृष्टतया सफलत्वेन वा जन्म, अन्यथा योग्य-समागमाभावे विफलमेव तदित्यर्थः । अत्र यत् शेषं, तत् यदा स्यादित्यर्थो न भवति, तत्पदयदापदयोरभावादतो यत्पदस्य तदानीं-पदेनैवान्वयो-ऽभिधित्सितः, स च न सम्भवति यत्पदेन तदानींपदस्यान्वये आकाङ्क्षाया अभावादिति ।

(६६) अस्य प्राप्तमित्यनेनान्वयः । अत्र हि प्रथमार्द्धवाक्यार्थे उत्तरार्द्धस्य सम्बन्धो विवक्षितः, स च न सम्पद्यते, तथाहि आकर्णनक्रियायां कोदण्डादिप्रातिपदिकार्थानां प्रत्येकं कर्म्मतयाऽन्वये कोदण्डं शरानिति

वाक्यार्थस्य कर्म्मत्वे,कोदण्डः शराः-इति प्राप्तम् । न च,यच्छब्दार्थः तद्विशेषणं वा कोदण्डादि । न च, केन केन ?-इत्यादिप्रश्नः ।

यथा वा,-"चापाचार्य्यस्त्रिपुरविजयी"(१२४पृ०)-इत्यादौ भार्गवस्य निन्दायां तात्पर्य्यं, क्षतवतेति परशौ सा प्रतीयते (६७) । (क्षतवत इति तु पाठे मतयोगो भवति । )

---

द्वितीया स्यात् । अथ कोदण्डादीनां सर्वेषाम् परस्परमनन्वितानामपि एकदैव वाक्यार्थविधया कर्म्मत्वमिति न द्वितीयाप्रसङ्गः, प्रातिपदिकादेव द्वितीयाविधानेन वाक्यात्तदसम्भवादिति चेत् । न,-

"यो यो वीरः समायातस्तांस्तान् शृणु महीपते ।

भीष्मो द्रोणो कृपः कर्णः सोमदत्तिर्धनञ्जयः ॥"-इत्यादिवत् परस्पर-मनन्वितार्थकत्वात्, कोदण्डादिशब्देभ्यः, कोदण्डः शराः इति प्रथमा स्यात् । यदपि यच्छब्दस्य बुद्धिस्थवाचकतया कोदण्डादिपदार्थ एव यच्छब्दार्थ इति यच्छब्दार्थस्य क्रियान्वये कोदण्डादीनामप्यन्वयो लभ्यते एवेति । तन्न, एवं सति कोदण्डादीनां पुनरुपादानं व्यर्थं स्यात्, यच्छब्दस्य साकाङ्क्षत्वप्रसङ्गश्च । अथ यदर्थयोः कर्तृकर्म्मणोर्विशेषणानि कोदण्डादीनीति चेत् । न, तथा सति येन कोदण्डेन यत् शराः समासादितं तदाकर्णयेति वाक्यार्थपर्य्यवसानेन पुनर्विशेषाकाङ्क्षाया अनिवृत्तेः, भिन्न-विभक्तिकतया यत् शराः समासादितमित्यन्वयासम्भवाच्च । ननु येन यदिति सामान्यतोऽवगमेन, केन केन किं किं ?-इति विशेषप्रश्ने सति तदुत्तरतया कोदण्डेन शरा इत्यादि उक्तमिति चेत् । न, प्रश्नवाचकपदाभावात्, येन येन यद्-यद् आसादितं तदाकर्ण्येतिप्रतिपत्त्यैव कोदण्डादीनामुक्तत्वादिति ।

(६७) अत्र परशुनिन्दामुखेन भार्गवनिन्दायां वैदग्ध्यातिशय इति तदेवाभिप्रेतमिति न वाच्यं, यथा स्पर्द्धायोग्यत्वोपपत्तये परशुस्वामिनः शिवशिष्यत्वादीनि विशेषणानि, तथा तदयोग्यत्वप्रतिपादनाय तस्यैव कश्चिद् धर्म्मो वक्तुमुचितः, अन्यथा प्रक्रमभङ्गः स्यादिति, यथोक्तमेव सम्यक् ।

यथा वा,-

चत्वारो वयमृत्विजः, स भगवान् कर्मोपदेष्टा हरिः,
संग्रामाध्वरदीक्षितो नरपतिः, पत्नी गृहीतव्रता ।
कौरव्याः पशवः, प्रियापरिभवक्लेशोपशान्तिः फलं,
राजन्योपनिमन्त्रणाय रसति स्फीतं यशोदुन्दुभिः ॥

अत्र,अध्वरशब्दः समासे गुणीभूत इति न तदर्थः सर्वैः संयुज्यते ।

यथा वा,-

जङ्घाकाण्डोरुनालो नखकिरणलसत्केसरालीकरालः
प्रत्यग्रालक्तकाभाप्रसरकिसलयो मञ्जुमञ्जीरभृङ्गः ।
भर्त्तुर्नृत्तानुकारे जयति निजतनुस्वच्छलावण्यवापी-
सम्भूताम्भोजशोभां विदधदभिनवो दण्डपादो भवान्याः ॥

अत्र, दण्डपादगता निजतनुः प्रतीयते, भवान्याः सम्बन्धिनी तु विवक्षिता (६८) ।

अवश्यंवक्तव्यमनुक्तं यत्र । यथा,-

अप्राकृतस्य चरितातिशयैश्च दृष्टै-
रत्यद्भुतैरपहृतस्य तथापि नास्था ।
कोऽप्येष वीरशिशुकाकृतिरप्रमेय-
माहात्म्यसारसमुदायमयः पदार्थः ॥

अत्र, अपहृतोऽस्मीत्यपहृतत्वस्य विधिर्वाच्यः । 'तथापि'इत्यस्य द्वितीयवाक्यगतत्वेनैवोपपत्तेः ( ६९ ) ।

---

(६८) 'ससम्बन्धिकानां निजादिपदार्थानां क्रियान्वयिकारकपदार्थ एवान्वयः' इतिनियमेन निजपदार्थस्य दण्डपादे एवान्वयः स्यादिति ।

(६९) तथापीति तच्छब्दार्थः पूर्ववाक्योक्तं किमप्यर्थमपेक्षते इति पृथक्वाक्यसम्पादयित्री प्रथमा विभक्तिरत्रावश्यंवाच्या । अत्र विधेया-विमर्षाभवन्मतयोगावपि स्तः ।

यथा वा,-

एषोऽहमद्रितनयामुखपद्मजन्मा,
प्राप्तः सुरासुरमनोरथदूरवर्त्ती ।
स्वप्नेऽनिरुद्धघटनाधिगताभिरूप-
लक्ष्मीफलामसुरराजसुतां विधाय ॥

अत, मनोरथानामपि दूरवर्त्तीत्यप्यर्थो वाच्यः । यथा वा,
त्वयि निबद्धरतेः प्रियवादिनः प्रणयभङ्गपराङ्मुखचेतसः ।
कमपराधलवं मम पश्यसि? त्यजसि मानिनि, दासजनं यतः॥
अत, अपराधस्य लवमपीति वाच्यम् । अस्थानस्थपदं यथा,-

प्रियेण संग्रथ्य विपक्षसन्निधौ
उपाहितां वक्षसि पीवरस्तने ।
स्रजं न काचिद्विजहौ जलाविलां,
वसन्ति हि प्रेम्णि गुणा न वस्तुनि ॥

अत, काचिन्न विजहाविति वाच्यम् (७०) । यथा वा,-

लग्नः केलिकचग्रहश्लथजटालम्बेन निद्रान्तरे
मुद्राङ्कः शितिकन्धरेन्दुशकलेनान्तःकपोलस्थलम् ।
पार्व्वत्या नखलक्ष्मशङ्कितसखीनर्म्मस्मितव्रीड़या
प्रोन्मृष्टः करपल्लवेन कुटिलाताम्रच्छविः पातु वः ॥

अत, नखलक्ष्मेत्यतः पूर्व्वं कुटिलाताम्रेति वाच्यम् ।

अस्थानस्थसमासं यथा,-

---

(७०) यथाश्रुते,-न काचित् विजहौ, अपि तु सर्व्वा एव विजहुरिति प्रतीयेत ।

अद्यापि स्तनशैलदुर्गविषमे सीमन्तिनीनां हृदि
स्थातुं वाञ्छति मान एष धिगिति क्रोधादिवालोहितः ।
प्रोद्यद्दूरतरप्रसारितकरः कर्षत्यसौ तत्क्षणात्
फुल्लत्कैरवकोशनिःसरदलिश्रेणीकृपाणं शशी ॥

अत्र, क्रुद्धस्योक्तौ समासो न कृतः ; कर्षत्युक्तौ तु कृतः ।

संकीर्णं यत्र वाक्यान्तरस्य पदानि वाक्यान्तरमनुप्रविशन्ति । यथा,-

किमिति न पश्यसि कोपं पादगतं बहुगुणं गृहाणेमम् ।
ननु मुञ्च हृदयनाथं कण्ठे मनसस्तमोरूपम् ॥

अत्र, पादगतं बहुगुणं हृदयनाथं किमिति न पश्यसि, इमं कण्ठे गृहाण, मनसस्तमोरूपं कोपं मुञ्चेति । (एकवाक्यतायान्तु क्लिष्टमिति भेदः ।)

गर्भितं, यत्र वाक्यस्य (७१) मध्ये वाक्यान्तरमनुप्रविशति । यथा,-

परापकारनिरतैर्दुर्जनैः सह सङ्गतिः ।
'वदामि भवतस्तत्त्वं' न विधेया कदाचन ॥

अत्र तृतीयपादो वाक्यान्तरमध्ये प्रविष्टः । यथा वा,-

लग्नं रागावृताङ्ग्या सुदृढमिह ययैवासियष्ट्यारिकण्ठे,
मातङ्गानामपीहोपरि परपुरुषैर्या च दृष्टा पतन्ती ।
तत्सक्तोऽयं न किञ्चिद्गणयति, विदितं तेऽस्तु, तेनास्मि दत्ता
भृत्येभ्यः, श्रीनियोगाद्गदितुमिव गतेत्यम्बुधिं यस्य कीर्त्तिः ॥

---

(७१) 'वाक्यस्य' इत्यत्र एकवाक्यस्य, वाक्यैकवाक्यतापन्नस्य एकवाक्यतापन्नस्य वा वाक्यसमुदायस्य । द्विविधस्य अस्य यथाक्रममुदाहरणद्वयम् ।

अत्र, 'विदितं तेऽस्तु' इत्येतत्कृतं (७२), प्रत्युत लक्ष्मीस्ततोऽपसरतीति विरुद्धमतिकृत् ।

"मञ्जीरादिषु रणितप्रायं, पक्षिषु च कूजितप्रभृति ।
स्तनितमणितादि सुरते, मेघादिषु गर्जितप्रमुखम् ॥"-इति प्रसिद्धिमतिक्रान्तं, यथा,-

महाप्रलयमारुतक्षुभितपुष्करावर्त्तक-
प्रचण्डघनगर्जितप्रतिरुतानुकारी मुहुः ।
रवः श्रवणभैरवः स्थगितरोदसीकन्दरः
कुतोऽद्य समरोदधेरयमभूतपूर्व्वः पुरः ॥

अत्र, रवो मण्डूकादिषु प्रसिद्धो नतु उक्तविशेषणके सिंहनादे ।

भग्नः प्रक्रमः प्रस्तावः (७३) यत्र । यथा,-

नाथे निशाया: नियतेर्नियोगात्
अस्तं गते हन्त निशाऽपि याता ।
कुलाङ्गनानां हि दशानुरूपं
नातः-परं भद्रतरं समस्ति ॥

अत्र 'गता-'इति प्रक्रान्ते 'याता'-इति प्रक्रान्तेः (७४)। (गता

---

(७२) 'कृतं' प्रयोजनं विनैव गर्भितं कृतं, निष्प्रयोजनं वा । 'विदितं तेऽस्तु'-इत्यनेन अर्थशक्तिमहिम्ना, 'उत्तरकालं पतिपरित्यागोत्थमपराधं त्वं माऽभिदध्याः-इति पूर्व्वमेव मया पलायनवृत्तान्तं ज्ञापितस्त्वम्' इत्यर्थाभिव्यक्तिद्वारा लक्ष्मीः ततोऽपसरतीति व्यज्यते इति भावः ।

(७३) प्रस्तावः उपक्रमः, येन रूपेणोपक्रमः तेनैवोपसंहार इति नियमस्य भङ्ग इत्यर्थः, ।

(७४) अत्र हि विभिन्नशब्दाभ्यां गम-या-प्रकृतिभ्यामुपस्थित एकोऽप्यर्थो भिन्नवदापाततो भातीति । अत्र 'न सोऽस्ति प्रत्ययो लोके यत्र शब्दो

निद्राऽपीति तु युक्तम् ।) ननु "नैकं पदं द्विःप्रयोज्यं प्रायेण"-इत्यन्यत्र (७५), कथितपदं दुष्टमिति चेच्चैवोक्तं, तत्कथमेकस्य पदस्य द्विःप्रयोगः'। उच्यते, उद्देश्यप्रतिनिर्देश्यव्यतिरिक्तो विषय एकपदप्रयोगनिषेधस्य (७६), तद्वति विषये प्रत्युत तस्यैव पदस्य सर्व्वनाम्नो वा प्रयोगं विना दोषः। तथाहि,

उदेति सविता ताम्रस्ताम्र एवास्तमेति च ।
सम्पत्तौ च विपत्तौ च महतामेकरूपता ॥

अत्र, रक्त एवास्तमेतीति यदि क्रियेत, तदा पदान्तर-प्रतिपादितः स एवार्थोऽर्थान्तरतयेव प्रतिभासमानः प्रतीतिं स्थगयति । यथा वा,-

---

न भासते' इति हरिवाक्यानुसारेण, स्थाने शब्दस्यापि भानमङ्गीकुर्व्वन्तः केचन यथाश्रुतमेव पन्थं सङ्गमयन्ति ।

(७५) अन्यत्र वामनसूत्रे ।

(७६) प्रतिनिर्द्देश्येति आवश्यके ण्यत्प्रत्ययः । 'उद्देश्यः' वक्तव्योऽर्थः, 'प्रतिनिर्द्देश्यः' पुनरप्यवश्यं वक्तव्यो यत्र, तस्माद्व्यतिरिक्तः ; पूर्व्वापरयोरैकरूप्यरक्षार्थं यत्र पूर्व्वनिर्द्दिष्टस्यार्थस्य तेनैव शब्देन तेनैव च रूपेण पुनर्निर्द्देश्यावश्यकत्वं तदन्यत्र दोष इति फलितोऽर्थः । तस्यावश्यकत्वस्य कुत्र भवति कुत्र वा नेत्यत्र विद्वदनुभव एव प्रमाणम् । तथापि किञ्चित् संक्षिप्योच्यते, वाक्यद्वये यदि एकस्य उद्देश्यत्वं विधेयत्वं वा स्यात्, यदि वा पूर्व्वस्मिन् विधेयस्य उद्देश्यस्य वा परस्मिन् उद्देश्यत्वं विधेयत्वं वा भवेत्, तदा पुनर्निर्द्देश आवश्यकः। यथा 'उदेति सविता'-इत्यादौ उभयत्रैव सवितुरुद्देश्यत्वं ताम्रत्वस्य विधेयत्वं। 'कोदण्डेन शराः' इत्यादौ पूर्व्वत्र विधेयस्य शरादेः परस्मिन् वाक्ये उद्देश्यत्वम् । एवं 'चन्द्रायते शुक्लरुचापि हंसः, हंसायते चारुगतेन कान्ता ।' इत्यादौ पूर्व्ववाक्ये उद्देश्यस्य हंसस्य परस्मिन् विधेयतेति । उद्देश्यविधेयात्मकतानामपि उद्देश्याविधेयत्वम् वाच्यम् ।

यशोऽधिगन्तुं, सुखलिप्सया वा,
मनुष्यसंख्यामतिवर्त्तितुं वा।
निरुत्सुकानामभियोगभाजां
समुत्सुकेवाङ्कमुपैति सिद्धिः॥

अत्र प्रत्ययस्य। (सुखमीहितुं वेति युक्तः पाठः।)

ते हिमालयमामन्त्र्य पुनः प्रेक्ष्य च शूलिनम्।
सिद्धं चास्मै निवेद्यार्थं तद्विसृष्टाः खमुद्ययुः॥

अत्र सर्व्वनाम्नः। (अनेन विसृष्टा इति तु वाच्यम्।)

महीभृतः पुत्त्रवतोऽपि दृष्टिस्तस्मिन्नपत्ये न जगाम तृप्तिम्।
अनन्तपुष्पस्य मधोर्हि चूते द्विरेफमाला सविशेषसङ्गा (७७)॥

अत्र पर्य्यायस्य। (महीभृतोऽपत्यवतोऽपीति युक्तम्।) अत्र सत्यपि पुत्त्रे कन्यारूपेऽप्यपत्ये स्नेहोऽभूदिति केचित् समर्थयन्ते (७८)।

विपदोऽभिभवन्त्यविक्रमं रहयत्यापदुपेतमायतिः।
नियता लघुता निरायतेरगरीयान्न पदं नृपश्रियः॥

अत्रोपसर्गस्य पर्य्यायस्य च। (तदभिभवः कुरुते निरायतिं। लघुतां भजते निरायतिः, लघुतावान्न पदं नृपश्रियः इति युक्तम् (७९)।)

---

(७७) अत्र पुत्त्रापत्यशब्दौ पुत्त्रकन्योभयसाधारणौ। पुत्त्रा अस्य सन्तीति बहुत्वविवक्षायां मतुप्।

(७८) केचिदित्यस्वरसः, दृष्टान्ते प्रदर्शितस्य सामान्यविशेषभावस्य दार्ष्टान्तिकेऽपि प्रदर्शयितुमुचितत्वादिति।

(७९) प्रकृतदोषजिहीर्षयैव कल्पितेऽस्मिन् पाठे छन्दोभङ्गो न दोषाय, निर्दोषवाक्यमात्रसमर्थनपरत्वादस्य। वस्तुतः अत्र, 'अभिभूतिः कुरुते निरायतिम्।' इत्येव पाठः कल्पयितुं योग्यः।

काश्चित्कीर्णा रजोभिर्दिवमनुविदधौ मन्दवक्त्रेन्दुलक्ष्मी-
रश्रीकाः काश्चिदन्तर्दिश इव दधिरे दाहमुद्भ्रान्तसत्त्वाः ।
भ्रेमुर्वात्या इवान्याः, प्रतिपदमपरा भूमिवत्कम्पमानाः
प्रस्थाने पार्थिवानामशिवमिति पुरो भावि नार्यः शशंसुः ॥

अत्र वचनस्य । ( काश्चित्कीर्णा रजोभिर्दिवमनुविदधुर्मन्दवक्त्रेन्दुशोभा निःश्रीका इति, 'कम्पमाना' इत्यत्र कम्पमापुरिति च (८०) पठनीयम् । )

गाहन्तां महिषा निपानसलिलं शृङ्गैर्मुहुस्ताडितम्,
छायाबद्धकदम्बकं मृगकुलं रोमन्थमभ्यस्यतु ।
विस्रब्धैः क्रियतां वराहपतिभिर्मुस्ताक्षतिः पल्वले,
विश्रान्तिं लभतामिदञ्च शिथिलज्याबन्धमस्मद्धनुः ॥

अत्र कारकस्य । ( विस्रब्धा रचयन्तु शूकरवरा मुस्ताक्षतिमित्यदुष्टम् । )

अकलिततपस्तेजोवीर्यप्रथिम्नि यशोनिधा-
ववितथमदाध्माते रोषान्मुनावभिधावति ।
अभिनवधनुर्विद्यादर्पक्षमाय च कर्मणे
स्फुरति रभसात्पाणिः पादोपसंग्रहणाय च (८१) ॥

अत्र क्रमस्य ; 'पादोपसंग्रहणाय' इति पूर्वं वाच्यम् । एवमन्यत्राप्यनुसर्त्तव्यम् । अविद्यमानः क्रमो यत्र (८२) । यथा,-

---

(८०) अन्यथा आख्यातप्रक्रमभङ्गः स्यादिति प्रसङ्गादुक्तम् ।

(८१) अकलितः अपरिमितः । प्रथमद्वितीयपादार्थौ यथाक्रमं पादग्रहणधनुराकर्षणयोर्हेतू-इति तन्निर्देशक्रमेणैव निर्देशो युक्तः ।

(८२) पदार्थविशेषरूपरचनायाः प्रस्तुतार्थस्याप्रत्यायकत्वे अक्रमत्वं,

इयं गतं सम्प्रति शोचनीयतां
समागमप्रार्थनया कपालिनः ।
कला च सा कान्तिमती कलावतः,
त्वमस्य लोकस्य च नेत्रकौमुदी ॥

अत्र 'त्वं'-शब्दानन्तरं चकारो युक्तः । यथा वा,-

शक्तिर्निस्त्रिंशजेयं तव भुजयुगले, नाथ, दोषाकरश्री-
र्वक्त्रे, पार्श्वे तथैषा प्रतिवसति महाकुट्टिनी खड्गयष्टिः ।
आज्ञेयं सर्व्वगा ते विलसति च पुनः, किं मया वृद्धया ते,
प्रोच्येवेत्थं, प्रकोपाच्छशिकरसितया यस्य कीर्त्त्या प्रयातम्(८३)॥

अत्र, 'इत्थं प्रोच्येवेति न्याय्यम् । तथा, 'लग्नं रागावृताङ्ग्या' (१३८ पृ०) इत्यादौ इति श्रीनियोगादिति वाच्यम् ।

'अमतः' प्रकृतविरुद्धः (८४) परार्थो यत्र । यथा,—

राममन्मथशरेण ताड़िता दुःसहेन हृदये निशाचरी ।
गन्धवद्रुधिरचन्दनोक्षिता जीवितेशवसतिं जगाम सा ॥

अत्र, प्रकृते रसे विरुद्धस्य शृङ्गारस्य व्यञ्जकोऽपरोऽर्थः ।

---

प्रत्यावृत्तत्वेऽप्यनौचित्येऽस्थानस्थपदता, अर्थक्रमस्यानौचित्ये तु दुष्क्रमत्वम्, उपक्रमोक्तक्रमस्योपसंहारे भङ्गे प्रक्रमभङ्ग इत्येतेषां भेदः ।

(८३) निस्त्रिंश-दोषाकर-कुट्टिनी-सर्व्वगा-वृद्धा-प्रयातपदाः यथाक्रमं खड्ग-चन्द्र-छेदिका-सर्व्वविख्याता-महती-प्रकृष्टगमनार्थका अपि यत्र-शक्तिमहिम्ना निंशाधिक-दोषविधान-जारयोजयित्री-कुलटा-जरती-पलायनरूपानर्थान्तुपस्थापयन्ति ।

(८४) 'प्रकृतविरुद्धः' प्राकरणिकरसादिप्रतिकूलः, 'परार्थः' रसादिरूपो व्यङ्ग्यार्थो यत्र तदिति । (परार्थः नतु वाच्यार्थ इति प्रतिकूलविभावादि-पदाद्भेदः । ) 'द्वेषो शृङ्गारबीभत्सौ, तथा वीरभयानकौ ।
रौद्राद्भुतौ, तथा हास्यकरुणौ वैरिणौ मिथः' इति ॥

अर्थदोषानाह,-

**अर्थोऽपुष्टः कष्टो**
**व्याहतपुनरुक्तदुष्क्रमग्राम्याः॥ ७॥**
**सन्दिग्धो निर्हेतुः**
**प्रसिद्धिविद्याविरुद्धश्च।**
**अनवीकृतः सनियमा-**
**नियमविशेषाविशेषपरिवृत्ताः॥ ८॥**
**साकाङ्क्षोऽपदयुक्तः**
**सहचरभिन्नः प्रकाशितविरुद्धः।**
**विध्यनुवादायुक्त-**
**स्त्यक्तपुनःस्वीकृतोऽश्लीलः॥ ९॥**

'दुष्टः' इति सम्बध्यते। क्रमेणोदाहरणम्,-

अतिविततगगनसरणि-प्रसरणपरिमुक्तविश्रमानन्दः।
मरुदुल्लासितसौरभ-कमलाकरहासकृद्रविर्जयति॥

अत्र अतिविततत्वादयोऽनुपादानेऽपि प्रतिपाद्यमानमर्थं न बाधन्ते इत्यपुष्टाः, न त्वसङ्गताः पुनरुक्ता वा (८५)।

---

(८५) अत्र अतिविततत्वमतिविस्तीर्णत्वं बृहदाकारत्वमिति यावत्, (महद् दीर्घत्वम्)। गगनसञ्चार एव श्रमहेतुर्न तत्रातिविततत्वं सरणित्वञ्च उपयुज्यते। एवं मरुदुल्लासितेत्यादावपि। नन्वेवं चेत्, अतिविततत्वादिहेतुगर्भविशेषणतया स्वरूपविशेषणतया वात्राभिप्रेतम्? आद्ये अप्रसिद्धिः, द्वितीये गगनस्यातिविततत्वम् अग्नेरौष्ण्यमिव अतिप्रसिद्धत्वात् प्राप्तमेवेति तत्कथने पुनरुक्तिदोषः इति। न, पूर्वोक्तस्य पुनरुक्तिरेव पुनरुक्तिर्न तु पूर्वप्राप्तस्यार्थस्यापीति भावः। प्रयोजनान्तराभावात्तदर्थाविवक्षायामपि तत्पदाभिधानेऽधिकपदत्वं, स्वरूपकथनार्थं प्रस्तुतानुपयोगिनोऽप्यर्थस्य विवक्षायामपुष्टार्थत्वमित्यनयोर्भेदः।

यदा मध्ये यासामियममृतनिष्यन्दसरसा
सरस्वत्युद्दामा वहति बहुमार्गा परिमलम् ।
प्रसादं ता एता घनपरिचिताः केन महतां
महाकाव्यव्योम्नि स्फुरितमधुरा यान्तु रुचयः (८६) ॥

अत्र यासां कविरुचीनां मध्ये सुकुमार-विचित्र-मध्यमात्मक-त्रिमार्गा (८७) भारती चमत्कारं वहति, ताः गम्भीरकाव्य-परिचिताः कथमितरकाव्यवत्प्रसन्ना भवन्तु ; यासामादित्य-प्रभाणां मध्ये त्रिपथगा वहति, ता मेघपरिचिताः कथं प्रसन्ना भवन्तीति सङ्क्षेपार्थः ( ८८ ) ।

जगति जयिनस्ते ते भावा नवेन्दुकलादयः,
प्रकृतिमधुराः सन्त्येवान्ये मनो मदयन्ति ये ।
मम तु यदियं याता लोके विलोचनचन्द्रिका
नयनविषयं, जन्मन्येकः स एव महोत्सवः ॥

---

(८६) महाकाव्यस्य गम्भीरार्थकतयाऽस्फुटार्थत्वमप्यदूष्यमिति समर्थयितुं कस्यचिदुक्तिरियम् । प्रस्तुतपक्षे 'रुचयः' अभिप्रायाः, 'प्रसादं' स्फुटतां 'यान्तु'-इत्यन्वयः । अप्रस्तुतपक्षे 'सरस्वती' नदी, 'परिमलः' सम्बन्धः, (परिगतो मलो यस्यां क्रियायामिति व्युत्पत्त्या परिमलं स्वच्छत्वं वा क्रियाविशेषणं) 'प्रसादः' स्वच्छकान्तिता ।

(८७) वैदर्भी-गौडी-पाञ्चाल्याख्यरीतित्रयवती ।

(८८) आदित्यप्रभारूपो द्वितीयोऽर्थः उपमानं, तेन सह वाच्यार्थस्य उपमा अङ्गम् । अत्र हि विवक्षितार्थः शब्दान्तरेणोपनिबध्यमानोऽपि क्लेशेनैव प्रतीयते ; श्लिष्टत्वादौ शब्दान्तरेण अन्यथान्तरेण वा विवक्षितार्थः सुखेनैव प्रतीयते इति भेदः ।

अत्र, इन्दुकलादयो यं प्रति पल्लवप्राया: स एव चन्द्रिकात्वम् उत्कर्षार्थमारोपयतीति ग्राम्यत्वम् (८९)।

"हतमनुमतम्"(५३९०)-इत्यादि, अत्र, 'अर्जुन अर्जुन-' इति (९०)'भवद्भिः'-इति चोक्ते 'सभीमकिरीटिनाम्'-इति किरीटिपदार्थः पुनरुक्तः। यथा वा,—

अस्त्रज्वालावलीढप्रतिबलजलधेरन्तरौर्वायमाणे
सेनानाथे स्थितेऽस्मिन्मम पितरि, गुरौ सर्वधन्वीश्वराणाम्।
कर्णालं सम्भ्रमेण, व्रज कृप, समरं, मुञ्च हार्दिक्य, शङ्काम्,
ताते चापद्वितीये वहति रणधुरं को भयस्यावकाशः॥

अत्र, चतुर्थपादवाक्यार्थः पुनरुक्तः।

भूपालरत्न, निर्दैन्यप्रदानप्रथितोत्सव।
विश्राणय तुरङ्गं मे, मातङ्गं वा मदालसम्॥ (कुव०)

अत्र, मातङ्गस्य प्राङ्निर्देशो युक्तः।

स्वपिति यावदयं निकटे जनः,
स्वपिमि तावदहं, किमपैति ते।
तदयि साम्प्रतमाहर कूर्परं
त्वरितमूरुमुदञ्चय कुञ्चितम्॥ (प्रा०)

एषोऽविदग्धः।

---

(८९) पल्लवप्रायाः तुच्छप्रायाः।
'उत्कर्षो वाऽपकर्षो वा प्राम्यस्यैव निगद्यते।
तत्रैवाच तदन्यत्वेत् ग्राम्यतोऽर्थस्तदा भवेत्' इति॥

(९०) अर्जुनं सम्बोध्य यैर्भवद्भिः तेषामिव्यनेन किरीटिना अर्जुनस्योक्तेः।

“मात्सर्य्यमुत्सार्य्य”-(८७पृ०)-इत्यादि । अत्र, प्रकरणाद्यभावे सन्देहः । (शान्तशृङ्गार्य्यन्यतराभिधाने तु निश्चयः । )

गृहीतं येनासीः परिभवभयान्नोचितमपि,
प्रभावाद्यस्याभून्न खलु तव कश्चिन्न विषयः ।
परित्यक्तं तेन त्वमसि सुतशोकान्न तु भयात्,
विमोक्ष्ये शस्त्र, त्वामहमपि, यतः स्वस्ति भवते ॥

अत्र शस्त्रमोचने हेतुर्नोपात्तः ।

इदन्ते केनोक्तं कथय कमलातङ्कवदने,
यदेतस्मिन् हेम्नः कटकमिति धत्से खलु धियम् ।
इदं तद्दुःसाधाक्रमणपरमास्त्रं स्मृतिभुवा
तव प्रीत्या चक्रं करकमलमूले विनिहितम् ॥

अत्र, कामस्य चक्रं लोकेऽप्रसिद्धम् । यथा वा,-

उपपरिसरं गोदावर्य्याः परित्यजताध्वगाः,
सरणिमपरो मार्गस्तावद्भवद्भिरिहेक्ष्यताम् ।
इह हि विहितो रक्ताशोकः कयापि हताशया
चरणनलिनन्यासोदञ्चन्नवाङ्कुरकञ्चुकः ॥

पादाघातेनाशोकस्य पुष्पोद्गमः कविषु प्रसिद्धो न पुनः अङ्कुरोद्गमः ।

सुसितवसनालङ्कारायां कदाचन कौमुदी-
महसि सुदृशि स्वैरं यान्त्यां गतोऽस्तमभूद्विधुः ।
तदनु भवतः कीर्त्तिः केनाप्यगीयत येन सा
प्रियगृहमगान्मुक्ताशङ्का, क्व नासि शुभप्रदः ॥

अत्रामूर्त्तोऽपि कीर्त्तिः ज्योत्स्नावत्प्रकाशरूपा कथितेति लोकविरुद्धमपि कविप्रसिद्धेर्न दुष्टम् (९१)।

सदा स्नात्वा निशीथिन्यां सकलं वासरं बुधः।
नानाविधानि शास्त्राणि व्याचष्टे च शृणोति च॥ (वि०वि०)

ग्रहोपरागादिकं विना रात्रौ स्नानं धर्मशास्त्रेण विरुद्धम्।

अनन्यसदृशं यस्य बलं बाह्वोः समीक्ष्यते।
षाड्गुण्यानुसृतिस्तस्य (९२) सत्यं सा निष्प्रयोजना॥

एतत् अर्थशास्त्रेण।

विधाय दूरे केयूरमनङ्गाङ्गनमङ्गना।
बभार कान्तेन कृतां करजोल्लेखमालिकाम्॥

अत्र, केयूरपदे नखक्षतं न विहितमिति, एतत् कामशास्त्रेण।

अष्टाङ्गयोगपरिशीलनकीलनेन
दुःसाधसिद्धिसविधं विदधद्विदूरे।
आसादयन्नभिमतामधुना विवेक-
ख्यातिं समाधिधनमौलिमणिर्विमुक्तः (९३)॥

अत्र, विवेकख्यातिस्ततः सम्प्रज्ञातसमाधिः पश्चादसंप्रज्ञातस्ततो मुक्तिर्न तु विवेकख्यातौ, एतत् योगशास्त्रेण।

एवं विद्यान्तरैरपि विरुद्धमुदाहार्य्यम्।

---

(९१) एतच्च लोकविरुद्धस्यापि कविसमयप्रसिद्धिविरोध एव दोषः।

(९२) सन्धिविग्रहयानासनद्वैधसंश्रयाः षट् षाड्गुण्यम्; स्वार्थे ष्यञ्।

(९३) यमनियमासनप्राणायामप्रत्याहारधारणाध्यानसमाधयोऽष्टौ अङ्गानि। 'दुःसाधाया' दुष्प्राप्यायाः 'सिद्धेः' मन्त्रसिद्धेर्वा 'सविधं' निकटस्थितं पुरुषमात्मविश्रान्तमनोवृत्तिविशेषरूपसंप्रज्ञातसमाधिम्। 'विवेकख्यातिं' प्रकृतिपुरुषयोर्भेदज्ञानम्।

प्राप्ताः श्रियः सकलकामदुघास्ततः किम्,
दत्तं पदं शिरसि विद्विषतां ततः किम् ।
सन्तर्पिताः प्रणयिनो विभवैस्ततः किम्,
कल्पं स्थितं तनुभृतां तनुभिस्ततः किम् ॥

अत्र 'ततः किम्'-इति न नवीकृतम् (९४) । (तत्तु यथा,-
यदि दहत्यनलोऽत्र किमद्भुतं, यदि च गौरवमद्रिषु किं ततः ।
लवणमम्बु सदैव महोदधेः, प्रकृतिरेव सतामविषादिता ॥)

यत्रानुल्लिखिताख्यमेव निखिलं निर्म्माणमेतद्विधेः,
उत्कर्षप्रतियोगिकल्पनमपि न्यक्कारकोटिः परा ।
याताः प्राणभृतां मनोरथगतीरुल्लङ्घ्य यत्सम्पदः,
तस्याभासमणीकृताश्मसु मणेरश्मत्वमेवोचितम्(९५) ॥

अत्र, छायामात्रमणीकृताश्मसु मणेस्तस्याश्मतैवोचितेति सनियमत्वं वाच्यम् (९६) ।

---

(९४) भङ्ग्यन्तरेण निर्देश्यत्वं नवीकृतत्वम् । 'किं ततः' इत्यस्य, किं तस्मात्-इत्यादिरूपेण शब्दपरिवर्त्तनेऽपि उत्कर्षान्तराभावात् अनवीकृतत्वमिति कथितपदत्वात् भेदः ।

(९५) चिन्तामणेराभासेनैव मणीकृतैः पाषाणैः सह चिन्तामणेर्गणने चिन्तामणेरेव परं पाषाणत्वमस्तु, तेषान्तु मणित्वमिति सोपहासोक्तिः ।

(९६) सनियमोक्तौ हि कारणान्तरव्यवच्छेदेन पाषाणानां निन्दातिशयः प्रतीयते । अर्थविशेषस्य विवक्षितत्वेऽपि तत्प्रतिपादकपदानभिधाने न्यूनपदत्वानभिहितवाच्यते दोषौ, अतएव तौ शब्दगतौ, अर्थविशेषाविवक्षायान्तु अयमिति भेदः ।

वक्त्राम्भोजं सरस्वत्यधिवसति सदा, शोण एवाधरस्ते,
बाहुः काकुत्स्थवीर्यस्मृतिकरणपटुर्दक्षिणस्ते समुद्रः।
वाहिन्यः पार्श्वमेताः क्षणमपि भवतो नैव मुञ्चन्त्यभीक्ष्णं,
स्वच्छेऽन्तर्मानसेऽस्मिन् कथमवनिपते, तेऽम्बुपानाभिलाषः ?॥
अत्र शोण एवेति नियमो न वाच्यः (९७)।

श्यामां श्यामलिमानमानयत भोः, सान्द्रैर्मषीकूर्चकैः,
मन्त्रं तन्त्रमथ प्रयुज्य हरत श्वेतोत्पलानां श्रियम्।
चन्द्रं चूर्णयत क्षणाच्च कणशः कृत्वा शिलापट्टके,
येन द्रष्टुमहं क्षमे दश दिशस्तद्वक्त्रमुद्राङ्किताः (९८)॥

अत्र ज्योत्स्नीमिति श्यामाविशेषणं वाच्यम्।

कल्लोलवेल्लितदृषत्परुषप्रहारैः
रत्नान्यमूनि मकरालय, माऽवमंस्थाः।
किं कौस्तुभेन विहितो भवतो न नाम
याच्ञाप्रसारितकरः पुरुषोत्तमोऽपि॥

---

(९७) अर्थविशेषाविवक्षायां अधिकपदत्वं विवक्षायां तु अवाच्यमिति भेदः। प्रस्तुतोत्कर्षापकर्षयोरनुपयोगिनि वाच्यकथने एवापुष्टत्वं, अवाच्यं प्रस्तुतापकर्षे अवाच्यकथनाभावेऽपि च भवतीति भेदः। यथात्र शोण एवेति नियमनेऽन्यजलाशयानामुत्कृष्टत्वप्रतीतौ पिपासायामौचित्यातिशयाप्रतीत्याऽपकर्षः, भेदश्च अवाच्यकथनम्।

(९८) विरहाभिभञ्जिकायां विद्याधरमहादेवस्योक्तिः। श्यामा रात्रिः। कूर्चकैः तूलिकाभिः। तन्त्रम् औषधम्। मुद्राङ्कः (अनन्यसम्बन्धी-रूपरम स्वरूपं चिह्नं) जातो यासु, ताः। चित्तोपकारिणीं तां दिक्षु पश्यतो मम उद्दीपका एते प्रतिबन्धकाश्चन्द्रादयस्तस्मादपहरत इति भावः।

अत्र, एकेन किं न विहितो भवतः स नामेति सामान्यं वाच्यम् (९९) ।

अर्थित्वे प्रकटीकृतेऽपि न फलप्राप्तिः प्रभोः, प्रत्युत
द्रुह्यन्दाशरथिर्विरुद्धचरितो युक्तस्तया कन्यया ।
उत्कर्षं च परस्य, मानयशसोर्विस्रंसनं चात्मनः,
स्त्रीरत्नं च जगत्पतिर्दशमुखो देवः कथं मृष्यते ? ॥

अत्र, 'स्त्रीरत्नम्' उपेक्षितुम्-इत्याकाङ्क्षति । नहि 'परस्य'-इत्यनेन सम्बन्धो योग्यः (१००) ।

अस्त्रा शक्रशिखामणिप्रणयिनी, शास्त्राणि चक्षुर्नवं,
भक्तिर्भूतपतौ पिनाकिनि, पदं लङ्केति दिव्या पुरी ।
उत्पत्तिर्द्रुहिणान्वये च, तदहो ! नेदृग्वरो लभ्यते,
स्याच्चेदेष न रावणः, क्व नु पुनः सर्वत्र सर्वे गुणाः ॥(अप०)

अत्र, 'स्याच्चेदेष न रावणः' इत्यत एव समाप्यम् (१०१) ।

---

(९९) यथाश्रुते कौस्तुभमात्रस्योपकारकत्वेनान्यावमाननविशेषहेत्ववगमः । एकेनेति पाठे तु भेदानवगमाद्दोषः ।

(१००) नहि उपादेये स्त्रीरत्नेऽमर्षसम्भवः, किन्तु तदुपेक्षायामिति । यदप्युच्यते,-परस्येत्यनेनान्वयात् 'परस्योत्कर्षममर्षो युज्यत एवेति । तन्न, 'परस्य'-इत्यस्य जनितान्वयतया, 'आत्मनः'-इत्यनेन व्यवहिततया च पुनरन्वयायोगात् । अत्र 'परस्य'-इति पदं वा 'उपेक्षितुम्'-इति वा अन्यद्वा किमपि पदं कल्प्यमिति नियमाभावात् विवक्षितप्रतीतिविरहो दूषकताबीजम् ।

(१०१) यत्र यदभिधानं विवक्षितप्रतीतिविघटकं तादृशेऽनुपयुक्ते स्थाने तदभिधानम् अपदयुक्तता, यथोदाहरणे, 'स्याच्चेदेष न रावणः' इत्यनन्तरं 'क्व नु पुनः'-इत्याद्यभिधानं समाधाने पर्यवसत् रावणस्य श्लाघ्यत्वप्रतीतिं स्थगयति । समाप्तपुनरात्तेऽर्थस्य नाभिधानं यथा विवक्षितप्रतीतिप्रतिरोधः,-इत्यनयोर्भेदः । केचित्तु अपदयुक्ततामात्रं दोष इति वदन्ति ।

श्रुतेन बुद्धिर्व्यसनेन मूर्खता,
मदेन नारी, सलिलेन निम्नगा।
निशा शशाङ्केन, धृतिः समाधिना,
नयेन चालङ्क्रियते नरेन्द्रता॥

अत्र, श्रुतादिभिरुत्कृष्टैः सहचरितैर्व्यसनमूर्खतयोर्निकृष्टयोर्भिन्नत्वम् (१०२)।

"लग्नं रागावृताङ्ग्या" (१३८)-इत्यत्र 'विदितं तेऽस्तु' इत्यनेन श्रीस्तस्मादपसरतीति विरुद्धं प्रकाश्यते(१०३)।

प्रयत्नपरिबोधितः स्तुतिभिरद्य शेषे निशा-
मकेशवमपाण्डवं भुवनमद्य निःसोमकम्।
इयं परिसमाप्यते रणकथाऽद्य दोःशालिनाम्,
अपैतु रिपुकाननातिगुरुरद्य भारो भुवः (१०४)॥

अत्र शयितः प्रयत्नेन बोध्यसे इति विधेयम्। यथा वा,-

वाताहारतया जगद्विषधरैराश्वास्य निःशेषितं,
ते ग्रस्ताः पुनरभ्रतोयकणिकातीव्रव्रतैर्बर्हिभिः।

---

(१०२) सहचरितानां हि प्रायश ऐकरूप्येण सर्व्वेषाम् उपादेयत्वं हेयत्वं वा प्रतीयेत, एतदेव दूषकताबीजम्।

(१०३) यथा च विरुद्धं प्रकाश्यते, तथोक्तं प्राक् (११८४०)।

(१०४) 'शेषे' इति क्रियापदम्। शयितोऽपि बोध्यते, न तु बोधितः शेते। विधेयाविमर्शे विधेयतया विवक्षितस्य विधेयत्वेनानवगमः, अत्र तु विधातुमनुचितस्य विधानमित्यनयोर्भेदः।

तेऽपि क्रूरचमूरुचर्म्मवसनैर्नीताः स्वयं शुष्ककैः,

दम्भस्य स्फुरितं विदन्नपि जनो जाल्मो गुणानीहते (१०५) ॥

अत्र, वाताहारादित्रयं व्युत्क्रमेण वाच्यम्।

अरे रामाहस्ताभरण, भसलश्रेणिशरण,

स्मरक्रीड़ाव्रीड़ाशमन, विरहिप्राणदमन।

सरोहंसोत्तंस, प्रचलदल, नीलोत्पल, सखे,

सखेदोऽहं, मोहं श्लथय, कथय, क्वेन्दुवदना? ॥

अत्र, 'विरहिप्राणदमन'-इति नानुवाद्यम्)।

"लग्नं रागावृताङ्ग्या" (१३८पृ०) इत्यादि। अत्र, 'विदितं तेऽस्तु'-इत्युपसंहृतोऽपि 'तेन'-इत्यादिना पुनरुपात्तः(१०६)।

---

(१०५) 'दम्भस्य' प्रकृते कापट्यस्य परापकाराद्यसत्फलाभिसन्धान-पूर्व्वकधर्म्माचरणरूपस्य 'स्फुरितं' दीप्तिं प्रबलरूपतां। 'गुणान्' धार्म्मिकत्वादीन् 'ईहते' प्रार्थयते, सम्भावयति वा, अर्थात् जनेषु। सर्व्व एव दुरभिसन्धिपूर्व्वकमेव धर्म्यं कर्म्म अनुतिष्ठन्ति, न तु धर्म्मबुद्ध्या, इत्थं धार्म्मिका एव सर्व्वे इति चतुर्थपादतात्पर्य्यार्थः, एष एवार्थः पादत्रयेण समर्थितः। एतच्च जगत् निःशेषयितुं वाताहारः स्वीकृतः, तान् पवितुम् अम्बुकणिकाव्रत-मङ्गीकृतं, तान् स्वयं नेतुं चर्म्मवसनं गृहीतमितिरीत्या असदभिसन्धिपूर्व्वक-धर्म्माचरणमेव विधातुमुचितं, न तु तस्य, 'वाताहारतया' इतिरीत्या अनुवादो युक्तः। यथाश्रुतक्रमानुसारिणस्तु मृगचर्म्मवसनं मेघतोयकणिकापानं वायुभक्षणञ्च यथोत्तरं तीव्रमिति तत्क्रमेण विधिर्युक्तः न तु अन्यथेति, एतदेव व्युत्क्रमविधानमित्याहुः।

(१०६) क्रियाकारकान्वयेन निराकाङ्क्षतया समाप्तेऽपि वाक्ये पुनः कारकान्तराभिधानं समाप्तपुनःस्वीकृतत्वं, यथोदाहरणे, न किञ्चित्तृणवतीत्यन्तेन कर्म्मकारकेण विदिक्रियाया अन्वये समाप्तेऽपि पुनः 'भवद्भ्यः' इत्यादिना कर्म्मकारकाभिधानम्। समाप्तपुनरात्तत्वे तु पूर्व्वोक्तस्यैव कारकस्य विशेषणदानमिति भेदः।

हन्तुमेव प्रवृत्तस्य स्तब्धस्य विवरैषिणः।
यथाऽस्य जायते पातो न तथा पुनरुन्नतिः॥

अत्र, पुंव्यञ्जनस्यापि प्रतीतिः।

यत्रैको दोषः प्रदर्शितः, तत्र दोषान्तराण्यपि सन्ति, तथापि तेषां तत्राप्रकृतत्वात्प्रकाशनं न कृतम्॥

कर्णावतंसादिपदे कर्णादिध्वनिनिर्म्मितिः (१०७)।
सन्निधानादिबोधार्थम्;

अवतंसादीनि कर्णाद्याभरणान्येवोच्यन्ते, तत्र कर्णादिशब्दाः कर्णादिस्थितिप्रतिपत्तये, यथा,-

अस्याः कर्णावतंसेन जितं सर्व्वं विभूषणम्।
तथैव शोभतेऽत्यर्थमस्याः श्रवणकुण्डलम्॥
अपूर्व्वमधुरामोदप्रमोदितदिशस्ततः।
आययुर्भृङ्गमुखराः शिरःशेखरशालिनः॥

अत्र, कर्ण-श्रवण-शिरः-शब्दाः सन्निधानप्रतीत्यर्थाः (१०८)।

विदीर्णाभिमुखारातिकराले सङ्गरान्तरे।
धनुर्ज्याकिणचिह्नेन दोष्णा विस्फुरितं तव॥

अत्र, धनुःशब्द आरूढत्वावगतये। (अन्यत्र तु,

ज्याबन्धनिष्पन्दभुजेन यस्य विनिश्वसद्वक्त्रपरम्परेण।
कारागृहे निर्जितवासवेन लङ्केश्वरेणोषितमा प्रसादात्॥

---

(१०७) ध्वनिः शब्दः। निर्म्मितिः प्रयोगः।

(१०८) तया च प्रतीत्या अवतंसादेः स्वरूपतो न जेहता, किन्तु अस्याः कर्णादिस्थिता इति अवगम्यते, तदवगमे च वर्णनीयाया उत्कर्षः।

-इत्यत्र, केवलो जगाशब्दः।)

प्राणेश्वरपरिष्वङ्गविभ्रमप्रतिपत्तिभिः।
मुक्ताहारेण लसता हसतीव स्तनद्वयम् (१०९)॥

अत्र, मुक्तानाम् अन्यरत्नामिश्रितत्वबोधनाय मुक्ताशब्दः।

सौन्दर्य्यसम्पत्, तारुण्यं यस्यास्ते, ते च विभ्रमाः।
षट्पदान् पुष्पमालेव, कान् नाकर्षति सा सखे॥

अत्र, उत्कृष्टपुष्पविषये पुष्पशब्दः, निरुपपदो (११०) हि मालाशब्दः पुष्पस्रजमेवाभिधत्ते।

स्थितेष्वेतत्समर्थनम्॥ १०॥

न खलु, कर्णावतंसादिवत् जघनकाञ्चीत्यादि क्रियते।

जगाद मधुरां वाचं विशदाक्षरशालिनीम्।

-इत्यादौ क्रियाविशेषणत्वेऽपि विवक्षितार्थप्रतीतिसिद्धौ, "गतार्थस्यापि विशेष्यस्य विशेषणदानार्थं क्वचित्प्रयोगः कार्य्यः"-इति न युक्तम् (१११)। युक्तत्वे वा,

चरणत्र-परित्राणरहिताभ्यामपि द्रुतम्।
पादाभ्यां दूरमध्वानं व्रजन्नेष न खिद्यते (११२)॥

-इत्युदाहार्य्यम्।

---

(१०९) हारो मुक्तावलीति विश्वः। हार एव हासः।

(११०) निरुपपदः विशेषणरहितः।

(१११) सिद्धाविति हेतौ सप्तमी, अस्य 'न युक्तम्'-इत्यनेनान्वयः। 'गतार्थस्य'पदान्तरेणोक्तार्थस्य। अयं निष्कर्षः,-जगादेतिक्रियया उक्तार्थस्यापि 'वाचम्' इत्यस्य नानर्थक्यं, 'मधुराम्' इत्यादिविशेषणदानार्थं तदुपादाना-दिति वामनमतम्। मधुरं विशदाक्षरं जगादेतिरीत्या क्रियाविशेषणतया विवक्षितार्थप्रतीतिसम्भवात् 'वाचम्'-इत्यनर्थकमेवेतिप्रकाशकृन्मतम्।

(११२) अत्र चरणत्रादीति विशेषणं न क्रियाविशेषणार्हमिति उत्तरदेशसंयोगानुकूलपादविहरणार्थकेन व्रजधातुना उक्तार्थस्यापि

**ख्यातेऽर्थे निर्हेतोरदुष्टता-**

यथा,-

चन्द्रं गता पद्मगुणान्न भुङ्क्ते, पद्माश्रिता चान्द्रमसीमभिख्याम्।
उमामुखन्तु प्रतिपद्य लोला द्विसंश्रयां प्रीतिमवाप लक्ष्मीः ॥

अत, रात्रौ पद्मस्य सङ्कोचः, दिवा चन्द्रमसश्च निष्प्रभत्वं लोकप्रसिद्धमिति 'न भुङ्क्ते'-इति हेतुं नापेक्षते ।

**ऽनुकरणे तु सर्व्वेषाम् ।**

सर्व्वेषां श्रुतिकटुप्रभृतीनां दोषाणाम् । यथा,-

मृगचक्षुषमद्राक्षमित्यादि कथयत्ययम् ।
पश्यैष च गवित्याह सुत्रामानं यजेति च (११३) ॥

**वक्त्राद्यौचित्यवशाद्**

**दोषोऽपि गुणः क्वचित् क्वचिन्नोभौ ॥११॥**

वक्तृ-प्रतिपाद्य-व्यङ्ग्य-वाच्य-प्रकरणादीनां महिम्ना दोषोऽपि क्वचिद्गुणः (११४), क्वचिन्न दोषो न गुणः। तत्र वैयाकरणादौ वक्तरि प्रतिपाद्ये च, रौद्रादौ च रसे व्यङ्ग्ये कष्टत्वं गुणः। क्रमेणोदाहरणम्,-

---

'पादाब्जीम्'-इत्यत्र नानर्थक्यम्, उक्तविशेषणदानर्थक्यपातत्वादिति । तथाचायं सिद्धान्तः, यत्र यदुपादानं विना (विशेषणदानावश्यकेन) विवक्षितप्रतीतिविघातस्तत्रैव गतार्थस्यापि तस्योपादानं युक्तं, नान्यत्रेति ।

(११३) अद्राक्षमिति श्रुतिकटु, (गौरिति वक्तव्ये) गवित्ति च्युत-संस्कृति, सुत्रामाणमिति अप्रयुक्तम् ।

(११४) गुणः प्रकर्षोत्कर्षकः ।

दीधीवेवीट्समः कश्चिद्गुणवृत्त्योरभाजनम्।
क्विप्प्रत्ययनिभः कश्चिद्यत्र सन्निहिते न ते (११५)॥
यदा त्वामहमद्राक्षं पदविद्याविशारदम्।
उपाध्यायं तदास्मार्षं समस्प्राक्षञ्च सम्मदम्॥
अन्त्रप्रोतबृहत्कपालनलकक्रूरक्वणत्कङ्कण-
प्रायप्रेङ्खितभूरिभूषण-रवैराघोषयन्त्यम्बरम्।
पीतच्छर्दितरक्तकर्दमघनप्राग्भारघोरोल्लसद्-
व्यालोलस्तनभारभैरववपुर्दर्पोद्धतं धावति (११६)॥

वाच्यस्यावचनाद्यथा,-

मातङ्गाः, किमु वल्गितैः, किमफलैराडम्बरैर्जम्बुकाः,
सारङ्गाः, महिषाः, मदं व्रजत किं, शून्येषु शूरा न के।
कोपाटोप---समुद्भटोत्कट---सटा—कोटेरिभारेः पुनः
सिन्धुध्वानिनि हुङ्कृते स्फुरति यत् तद्गर्जितं गर्जितम्॥

---

(११५) "दीधीवेवीटाम्" (१।१।६) इति, "क्ङिति च" (१।१।५) इति सूत्रेण च तन्निषेधः।

(११६) 'अन्त्रैः' आँतुड़ि Entrail इति नाम्ना प्रसिद्धैः, 'प्रोतानि' ग्रथितानि बृहन्ति 'कपालानि' शिरसः खर्पराः (खुली Skull इति भाषा), 'नलकानि' देहान्तर्वर्त्तीनि नली Tube नाम्ना प्रसिद्धानि च यानि, तान्येव क्रूरं क्वणन्ति, शब्दयन्ति कङ्कणानि, 'तत्प्रायाणि' तत्तुल्यानि 'प्रेङ्खितानि' चलितानि यानि भूरीणि भूषणानि तेषां रवैः। पूर्व्वं 'पीतं' पश्चात् 'छर्दितं' वान्तं रक्तमेव कर्द्दमस्तेन 'घनः' व्याप्तः, किंवा तस्य 'घनः' काठिन्यं (जमाट् Congeal इति भाषा०) यत्र, एवंभूतः 'प्राग्भारः' अग्रभागो ययोः, तौ। अतएव घोरं विकटम् 'उल्लसन्तौ' प्रकाशमानौ 'व्यालोलौ' चञ्चलौ च यौ स्तनौ तावेव भारः गुरुत्वञ्च, तेन 'भैरवं' 'भीषणं' वपुर्यस्याः सा। अत्र बीभत्सो रसः।

अत्र, सिंहे वाच्ये परुषाः शब्दाः। प्रकरणवशाद् यथा,-

रक्ताशोक, कृशोदरी क्व नु गता त्यक्त्वाऽनुरक्तं जनम्?
नो दृष्टेति मुधैव चालयसि किं वातावधूतं शिरः।
उत्कण्ठा-घटमान-षट्पद-घटा-संघट्ट-दष्ट-च्छद-
स्तत्पादाहतिमन्तरेण भवतः पुष्पोद्गमोऽयं कुतः?॥

अत्र, शिरोधूननेन कुपितस्य वचसि।

क्वचिन्नीरसे न गुणो न दोषः। यथा,-

शीर्णघ्राणाङ्घ्रिपाणीन् व्रणिभिरपघनैर्घर्घराव्यक्तघोषान्
दीर्घाघ्रातानघौघैः, पुनरपि घटयत्येक उल्लाघयन् यः।
घर्मांशोस्तस्य वोऽन्तर्द्विगुण-घन-घृणा-निघ्न-निर्विघ्न-वृत्ते-
र्दत्तार्घाः सिद्धसङ्घैर्विदधतु घृणयः शीघ्रमंहोविघातम्(११७)॥

अप्रयुक्तनिहतार्थौ श्लेषादावदुष्टौ। यथा,-

येन ध्वस्तमनोभवेन बलिजित्कायः पुरास्त्रीकृतो
यश्चोद्वृत्त भुजङ्गहारवलयो गङ्गां च योऽधारयत्।
यस्याहुः शशिमच्छिरोहर इति स्तुत्यं च नामामराः,
पायात् स स्वयमन्धकक्षयकरस्त्वां सर्वदोमाधवः (११८)॥

---

(११७) 'व्रणिभिः' जुगुप्सास्पदैः। 'अपघनैः' स्वार्थैः अर्थादवयवैरुपलक्षितानि, 'घटयति' नूतनावयवैः संबध्नाति, 'उल्लाघयन्' नीरोगीकुर्व्वन्, 'अन्तः' हृदये द्विगुणा 'घना' निविड़ा अभीष्टदा या 'घृणा' कृपा, तया 'निघ्ना' तदायत्ता, 'निर्व्विघ्ना' विघ्नविनाशिनी 'वृत्तिः' व्यवसायो यस्य। 'घृणयः' किरणाः, 'अंहो' दुरितम्। यद्यपिष्मेऽस्मिन् काव्ये सतोऽपि भक्तिभावस्य न प्राधान्यमिति नीरसत्वव्यपदेशः।

(११८) माधवपक्षे, 'अभवेन' अजन्मना। 'अनः' शकटं। स्वस्य 'बलिजित्कायः' 'स्त्रीकृतः' मोहिनीरूपतां प्रापितः। 'उद्वृत्तभुजङ्गस्य'

अत्र, माधवपक्षे शशिमदन्धकक्षयशब्दौ अप्रयुक्तनिहतार्थौ ।

अश्लीलं त्रिविधम् । यथा, सुरतारम्भगोष्ठ्याम्,

("द्व्यर्थैः पदैः पिशुनयेच्च रहस्यवस्तु"-इतिकामशास्त्रस्थितौ

करिहस्तेन संबाधे प्रविश्यान्तर्विलोडिते ।

उपसर्पन् ध्वजः पुंसः साधनान्तर्विराजते (११९) ॥ (व्री०)

शमकथासु,-

उत्तानोच्छूनमण्डूकपाटितोदरसन्निभे (१२०) ।

क्लेदिनि स्त्रीव्रणे सक्तिरकृमेः कस्य जायते ॥ (जु०)

निर्वाणवैरदहनाः प्रशमादरीणाम्,

नन्दन्तु पाण्डुतनयाः सह माधवेन ।

रक्तप्रसाधितभुवः क्षतविग्रहाश्च

स्वस्था भवन्तु कुरुराजसुताः सभृत्याः (१२१) ॥

---

कालियसर्पस्य हन्ता । 'रथानां' शब्दानां (नाम्नां) लयो यत्र सः, नामरूपात्मकजगतो ब्रह्मणि लय इति वेदान्तविदनुमतम् । 'अगं' गोवर्द्धनं, 'गां' पृथिवीं । शशिनं मथ्नातीति व्युत्पत्त्या शशिमथो राहोः शिरोहर इति 'अन्धकानां' यादवानां क्षयस्य निवासस्य कर्त्तेत्यर्थः । शिवपक्षे 'बलिजित्-कायः' विष्णुशरीरं, 'पुरा' त्रिपुरासुरवधकाले, 'अस्त्रीकृतः' वाणरूपतां प्रापितः । 'अन्धकक्षयः' अन्धकासुरस्य नाश इत्यर्थः । सर्व्वदा उमाधवः इति पदविभागः ।

(११९) प्रस्तुतपक्षे पुंसो ध्वजः केतुः । साधनं सेना ।

(१२०) उत्तानः वैपरीत्येन स्थितः । उच्छूनः शोथवान् ।

(१२१) प्रकृतपक्षे, 'प्रशमात्' शान्त्यवलम्बनात् । 'रक्ता' अनुरक्ता प्रकर्षेण साधिता वशीकृता च भूर्यैः । 'क्षतविग्रहाः' 'क्षतो' निवृत्तो 'विग्रहः' युद्धकलहो येषाम् । 'स्वस्थाः' निश्चिन्ता इत्यर्थः । अत्र च

अत्र, भाव्यमङ्गलसूचकम् । सन्दिग्धमपि वाच्यमहिम्ना क्वचिन्नियतार्थप्रतीतिकृत्त्वेन व्याजस्तुतिपर्य्यवसायित्वे गुणः ।

यथा,-

पृथुकार्त्तस्वरपात्रं भूषितनिःशेषपरिजनं देव ।
विलसत्करेणुगहनं संप्रति सममावयोः सदनम् (१२२) ॥

प्रतिपाद्यप्रतिपादकयोर्ज्ञत्वे सति अप्रतीतं गुणः । यथा,-

आत्मारामा विहितरतयो निर्व्विकल्पे समाधौ,
ज्ञानोद्रेकाद्विघटितमनोग्रन्थयः सत्त्वनिष्ठाः ।
यं वीक्षन्ते कमपि तमसां ज्योतिषां वा परस्तात्,
तं मोहान्धः कथमयममुं वेत्ति देवं पुराणम् ॥

स्वयं वा परामर्शे । यथा,-

षड़धिकदशनाड़ीचक्रमध्यस्थितात्मा (१२३)
हृदि विनिहितरूपः सिद्धिदस्तद्विदां यः ।
अविचलितमनोभिः साधकैर्मृग्यमाणः
स जयति परिणद्धः शक्तिभिः शक्तिनाथः ॥

---

'प्रशमात्' नाशात्, रुधिरेण मण्डितमुखः क्षतशरीरोऽयं स्वर्गस्था भवन्तु इत्यर्थो व्यज्यते ।

(१२२) कविपक्षे पृथुकानां बालानामार्त्तस्वरस्य पात्रं, भुवि उषिताः शयिता भूषिताः, विलसत्कानां रेणुभिरित्यर्थः । राजपक्षे पृथूनि कार्त्त-स्वरस्य सुवर्णस्य पात्राणि यत्र, करेणुः हस्ती हस्तिशावको वा अर्थः ।

(१२३) षड़धिका दश षोड़श वा नाड्यः इड़ा-पिङ्गलादयस्तासां चक्रं मणिपूराख्यं (हृदयस्थितं) तन्मध्ये स्थित आत्मा स्वरूपं यस्य ।

अधमप्रकृत्युक्तिषु ग्राम्यो गुणः । यथा,-

फुल्लुक्करं कलमकूरणिहं वहन्ति
जे सिन्धुवारविडपा मह वल्लहा दे ।
जे गालिदस्स महिसीदहिणो सरिच्छा,
दे किंच मुद्धविअइल्लपसूणपुञ्जाः (१२४) ॥

अत्र, कलम-कूर-महिसी-दहि-शब्दा ग्राम्या अपि विदूषकोक्तौ ।

न्यूनपदं क्वचिद्गुणः । यथा,-

गाढालिङ्गन-वामनीकृत-कुच-प्रोद्भूत-रोमोद्गमा
सान्द्र-स्नेह-रसातिरेक-विगलच्छ्रीमन्नितम्बाम्बरा ।
मा मा मानद, माति मामलमिति क्षामाक्षरोल्लापिनी,
सुप्ता किं नु ! मृता नु किं ! मनसि किं लीना ! विलीना नु किम् ! ॥

क्वचित् न गुणो न दोषः । यथा,-

तिष्ठेत् कोपवशात् प्रभावपिहिता ! दीर्घं न सा कुप्यति,
स्वर्गायोत्पतिता भवेत् मयि पुनर्भावार्द्रमस्या मनः ।
तां हर्तुं विबुधद्विषोऽपि न च मे शक्ताः पुरोवर्त्तिनीं,
सा चात्यन्तमगोचरं नयनयोर्यातेति कोऽयं विधिः ॥

अत्र,'पिहिता'-इत्यतोऽनन्तरं, नैतद्यतः-इति, एतैर्न्यूनैः पदैः विशेषविधेरकरणान्न गुणः, उत्तरा प्रतिपत्तिः पूर्वां प्रतिपत्तिं बाधते इति न दोषः (१२५) ।

---

(१२४) पुष्पोत्करं कलमभक्तनिभं वहन्ति ये सिन्धुवारविटपा मम वल्लभास्ते ।
ये गालितस्य महिषीदध्नः सदृक्षाः, ते किन्नु मुग्धविचकिलप्रसूनपुञ्जाः ॥
-इति सं० । कलमः शालिधान्यं, कूरं भक्तमिति देशी । विचकिलं मल्लिका ।

(१२५) 'उत्तरा' 'दीर्घं न सा कुप्यति' इत्यादिरूपा परा, 'प्रतिपत्तिः' ज्ञानं,

अधिकपदं क्वचिद्गुणः । यथा,-

यद् वञ्चनाहितमतिर्बहुचाटुगर्भं
कार्योन्मुखः खलजनः कृतकं ब्रवीति ।
तत्साधवो न, न विदन्ति, विदन्ति किन्तु,
कर्तुं वृथा प्रणयमस्य न पारयन्ति ॥

अत्र, 'विदन्ति'-इति द्वितीयम् अन्ययोगव्यवच्छेदपरम् (१२६)।

यथा वा,

वद वद ! जितः स शत्रुः ? न हतो जल्पंश्च तव तवास्मीति ।
चित्रं चित्रम् ! अरोदीद् हा हेति परं मृते पुत्रे ॥

-इत्येवमादौ हर्षभयादियुक्ते वक्तरि (१२७) ।

कथितपदं क्वचिद्गुणः(लाटानुप्रासे,अर्थान्तरसंक्रमितवाच्ये, विहितस्यानुवाद्यत्वे च ) । क्रमेणोदाहरणम्,-

सितकरकररुचिरविभा
विभाकराकार, धरणिधर, कीर्त्तिः ।
पौरुषकमला, कमला (१२८)
सापि तवैवास्ति नान्यस्य ॥ (ला०)

---

'पूर्वो' 'तिष्ठेत् कोपवशात् !' इत्यादिरूपां प्रथमां । अयं भावः, नेत्यादेरनुपादानेऽपि निषेधरैतभूतस्य 'दीर्घं न सा कुप्यति'इत्यादेरर्थस्य निषेधो वाच्यवत् प्रतीयते, अतस्तदनुपादानं न दोषाय ।

(१२६) साधव एव विदन्ति नान्ये इत्यर्थपरम् ।

(१२७) "विषादे च विवादे च तथा दैन्येऽवधारणे ।
प्रसादने तथा हर्षे वाक्यमेकं द्विरुच्यते ॥" इति ।

(१२८) पराक्रमलक्ष्मीः लक्ष्मीश्चेत्यर्थः ।

ताला जाअन्ति गुणा,
जाला दे सहिअएहिं घेप्पन्ति ।
रइकिरणाणुग्गहिआइं होन्ति
कमलाइं कमलाइं (१२९) ॥ (ध्व०)

जितेन्द्रियत्वं विनयस्य कारणं,
गुणप्रकर्षो विनयादवाप्यते ।
गुणप्रकर्षेण जनोऽनुरज्यते,
जनानुरागप्रभवा हि सम्पदः ॥ (वि०)

पतत्प्रकर्षमपि क्वचिद्गुणः। यथा,उदाहृते[१२७पृ०]"प्राग-प्राप्त"-इत्यादौ (१३०)। समाप्तपुनरात्तं क्वचिन्न गुणो न दोषः, यत्र न विशेषणमात्रदानार्थं पुनर्ग्रहणम्, अपि तु वाक्यान्तरमेव क्रियते । यथाऽत्रैव "प्रागप्राप्त"-इत्यादौ (१३१) । अपदस्थसमासः क्वचिद्गुणः । यथा,-उदाहृते [१५८] "रक्ताशोक"-इत्यादौ (१३२) ।

---

(१२९) तदा जायन्ते गुणाः, यदा ते सहृदयैर्गृह्यन्ते । रविकिरणानुगृहीतानि भवन्ति कमलानि कमलानीति सं० ॥ द्वितीयकमलपदं विकाससौरभसौन्दर्यादिमत्कमलपरम् ।

(१३०) अत्र हि चतुर्थे पादे क्रोधाभावात् मसृणमेव पदं युक्तम् ।

(१३१) अत्र दुष्कताबीजं हि जनितान्वयस्य पुनरन्वये निराकाङ्क्षता, सा च वाक्यान्तरकरणे न भवति, तत्र जनितान्वयेन केनाप्यनन्वयात् ; विशेष्यप्रदाने तु तेन विशेषणेन पुनरन्वये, जनितान्वयस्य विशेष्यस्य नाकाङ्क्षेति ।

(१३२) अत्र हि शृङ्गारे दीर्घसमासस्यानौचित्यमित्यपदस्थोऽपि समासः उद्दीपकं प्रति कोपमुत्कर्षयन् विप्रलम्भमेव पुष्णातीति गुणः ।

गर्भितं तथैव । यथा,-

होमि अवहत्थिअरेहो

णिरङ्कुसो अह विवेअरहिओ वि ।

सिविणे वि तुमम्मि पुणो

पत्तिहि भत्तिं ण पसुमरामि (१३३) ॥

अत्र, 'पत्तिहि'-इति मध्ये, दृढप्रत्ययोत्पादनाय । एवमन्यदपि लक्ष्याल्लक्ष्यम् (१३४) ॥

व्यभिचारिरसस्थायिभावानां(१३५)शब्दवाच्यता ।

कष्टकल्पनया व्यक्तिरनुभावविभावयोः ॥१२॥

प्रतिकूलविभावादिग्रहो दीप्तिः पुनः-पुनः ।

अकाण्डे प्रथनच्छेदौ(१३६),अङ्गस्याप्यतिविस्तृतिः॥१३॥

अङ्गिनोऽननुसन्धानं, प्रकृतीनां विपर्य्ययः ।

अनङ्गस्याभिधानञ्च रसे(१३७)दोषाः स्युरीदृशाः॥१४॥

---

(१३३) भवाम्यपहस्तितरेखो निरङ्कुशोऽथ विवेकरहितोऽपि ।
स्वप्नेऽपि त्वयि पुनः प्रतीहि भक्तिं न प्रस्मरामीति सं० ॥ अपहस्तिता अतिक्रान्ता रेखा मर्यादा येन सः । 'निरङ्कुशः' यथेच्छाचारी ।

(१३४) 'अन्यत्' अदोषत्वादि, 'लक्ष्यात्' उदाहरणात्, 'लक्ष्यम्' निरूप्यम् ।

(१३५) सिद्धान्ते रसस्य आस्वादात्मकस्य सामाजिकनिष्ठतया अवाच्यतया च रसशब्देनात्र आस्वाद्यमानो विभावादिसम्बलितः स्थायिभाव उच्यते, रसादिशब्दस्य तत्रैव शक्तेः, केवलस्य स्थायिभावस्य स्वशब्दवाच्यतायां तृतीयो दोषः, रत्यादिपदानां केवलरत्यादावेव शक्तेः इति नाभेदः ।

(१३६) प्रथनच्छेदौ रसस्यैव ।

(१३७) 'रसे' रस्यते-इति व्युत्पत्त्या आस्वाद्यमाने रसभावादौ ।

स्वशब्दोपादानं व्यभिचारिणो (१३८) यथा,

सव्रीडा दयितानने, सकरुणा मातङ्गचर्माम्बरे,
सत्रासा भुजगे, सविस्मयरसा चन्द्रेऽमृतस्यन्दिनि।
सेर्ष्या जह्नुसुतावलोकनविधौ, दीना कपालोदरे,
पार्वत्या नवसङ्गमप्रणयिनी दृष्टिः शिवायास्तु वः॥

अत्र व्रीडादीनाम्।

(व्यानम्रा दयितानने, मुकुलिता मातङ्गचर्माम्बरे,
सोत्कम्पा भुजगे, निमेषरहिता चन्द्रेऽमृतस्यन्दिनि।
मीलद्भ्रूः सुरसिन्धुदर्शनविधौ, म्लाना कपालोदरे
-इत्यादि तु युक्तम्)।

रसस्य स्वशब्देन शृङ्गारादिशब्देन वा वाच्यत्वम्। क्रमेणोदाहरणम्,-

तामनङ्गजयमङ्गलश्रियं किञ्चिदुच्चभुजमूललोकिताम्।
नेत्रयोः कृतवतोऽस्य गोचरे कोऽप्यजायत रसो निरन्तरः॥

आलोक्य कोमलकपोलतलाभिषिक्त-
व्यक्तानुरागसुभगामभिरामरूपाम्।
पश्यैष बाल्यमतिवृत्य विवर्त्तमानः
शृङ्गारसीमनि तरङ्गितमातनोति॥

---

(१३८) अत्रेदं दूषणबीजम्-सति सम्भवे, विभावादिनाऽभिव्यक्तावेव चमत्कारास्वादयोरुत्कर्षः, वाच्यत्वे तु अगूढत्वापत्तेस्तयोरपकर्ष इति। एवञ्च यत्र यस्य विभावादिना स्फुटतरं नाभिव्यक्तिसम्भवः, तत्र तस्य वाच्यत्वेऽपि न तयोरपकर्ष इति स्वपदोक्तिर्न दोष इति [१७१] वक्ष्यति। एवं रसादीनामास्वाद्यत्व एव दोषो नत्वितराङ्गतयाऽनास्वाद्यत्वेऽपीति। एवं परत्रापि आस्वादाभावो दूषणबीजम् बोध्यम्।

स्थायिनो यथा,

संप्रहारे प्रहरणैः प्रहाराणां परस्परम्।
ठणत्कारैः श्रुतिगतैरुत्साहस्तस्य कोऽप्यभूत्॥

अत्रोत्साहस्य।

कर्पूरधूलिधवलद्युतिपूरधौत-
दिङ्मण्डले शिशिररोचिषि तस्य यूनः।
लीलाशिरोंऽशुकनिवेशविशेषक्लृप्ति-
व्यक्तस्तनोन्नतिरभून्नयनावनौ सा॥

अत्र, उद्दीपनालम्बनरूपाः शृङ्गारयोग्या विभावा अनुभावपर्य्यवसायिनः स्थिता इति कष्टकल्पना (१२८)।

परिहरति रतिं, मतिं लुनीते,
स्खलति भृशं, परिवर्त्तते च भूयः।
इति यत विषमा दशाऽस्य देहं
परिभवति प्रसभं, किमत्र कुर्म्मः॥

अत्र, रतिपरिहारादीनामनुभावानां करुणादावपि सम्भवात् कामिनीरूपो विभावो यत्नतः प्रतिपाद्यः।

---

(२१८) अनुभावं पर्य्यवसाययन्ति प्रकरणाद्यनुसन्धानसापेक्षतया विलम्बेन, अवगमयन्ति ये ते। अयं भावः, तादृश-चन्द्र-नायिकयोरवलोकनेऽपि तस्य यूनोररसिकत्वे, रतेरनुदयस्यापि सम्भवेन प्रथमं तस्य रसिकत्वमनुसन्धेयं, ततो रत्यनुभावप्रतीतिरिति विलम्बः। प्रदीपकृतस्तु 'अनुभावपर्य्यवसायिनः' इति पाठं मन्यमाना 'अनुभावाप्रतीत्या आस्वादापर्य्यवसायिनः' इत्यर्थमाहुः।

प्रसादे वर्त्तस्व, प्रकटय मुदं, सन्त्यज रुषं,
प्रिये ! शुष्यन्त्यङ्गान्यमृतमिव ते सिञ्चतु वचः।
निधानं सौख्यानां क्षणमभिमुखं, स्थापय मुखं
न मुग्धे ! प्रत्येतुं प्रभवति गतः कालहरिणः॥

अत्र, शृङ्गारे प्रतिकूलस्य शान्तस्यानित्यताप्रकाशनरूपो विभावस्तत्प्रकाशितो निर्वेदश्च व्यभिचारी (१४०) उपात्तः।

णिहुअ-रमणम्मि लोअणपहम्मि पडिए गुरुअणमज्झम्मि।
सअलपरिहारहिअआ वणगमणं एव्व इच्छदि वहू (१४१)॥

अत्र सकलपरिहारवनगमने शान्तानुभावौ। (इन्धनाद्यानयनव्याजेनोपभोगार्थं वनगमनं (१४२) चेत्, न दोषः॥

दीप्तिः पुनः-पुनर्यथा (१४३), कुमारसम्भवे रतिविलापे।

अकाण्डे प्रथनं यथा, वेणीसंहारे द्वितीयेऽङ्केऽनेकवीर-

---

(१४०) शृङ्गारे उपात्तत्वेन अस्य अस्थायितया व्यभिचारित्वम्। तेन विभावादिना प्रतिकूलरसस्याप्युपस्थित्या विरोधेन प्रकृतरसाभासादप्रसङ्गः।

(१४१) निभृतरमणे लोचनपथं पतिते गुरुजनमध्ये।
सकलपरिहारहृदया वनगमनमेवेच्छति वधूरिति सं०।

(१४२) निबध्यते इति शेषः। तथात्वे हि शृङ्गारे एव पर्य्यवसानं न तु शान्ते इति न दोषः। अत्र, गुरुजनसन्निधौ निभृतरमणदर्शने प्रकाशशङ्कया वैराग्यस्यापि सम्भवात् न निभृतेत्यादिपदादेव शृङ्गारप्रतीतिः।

(१४३) पुनःपुनर्दीप्तिर्दीपितस्यान्तरा अविच्छिद्य दीपनं अविच्छेदेन करुणः प्रकाशनं। तत्तु अलङ्कारादीनामेव दूषणं नत्वङ्गिन इति केचित्। कुमारसम्भवे, "अथ, मोहपरायणा सती"-इत्यादिना दीपितोऽपि करुणः "अथ सा पुनरेव" इत्यादिना पुनर्दीपितः। एवञ्च पुनःपुनराख्याने वैरस्यमिति दूषणबीजम्।

संनये प्रवृत्ते, भानुमत्या सह दुर्योधनस्य शृङ्गारवर्णनम्(१४४)।

अकाण्डे छेदो यथा, वीरचरिते द्वितीयेऽङ्के 'कङ्कण-मोचनाय गच्छामि'-इति राघवस्योक्तौ (१४५)।

अङ्गस्य अप्रधानस्य अतिविस्तरेण वर्णनं (१४६), यथा, हयग्रीववधे हयग्रीवस्य। अङ्गिनोऽननुसन्धानं (१४७) यथा, रत्नावल्यां चतुर्थेऽङ्के बाभ्रव्यागमने सागरिकाया विस्मृतिः।

प्रकृतयो दिव्या अदिव्या दिव्यादिव्याश्च, वीर-रौद्र-शृङ्गार-शान्त-रसप्रधाना धीरोद्धत-धीरललित-धीरप्रशान्ताः, उत्तमाधम-मध्यमाश्च (१४८); तत्र रति-हास-शोकाद्भुतानि अदिव्योत्तमप्रकृतिवत् दिव्येष्वपि (१४९), किन्तु रतिः

---

(१४४) तदानीं करुणवीरादिरसप्रवणमेव मनो न शृङ्गारास्वादे प्रवर्त्तेत, इति दोषः।

(१४५) तदुक्तिर्हि परशुरामभयात् व्याजेन निर्गमं प्रतिपादयन्ती रामस्यावीरत्वे पर्य्यवस्यतीति नायके रामे वीररसो नास्वाद्येत! इति दोषः। कङ्कणमोचनं विवाहद्वयमदिनोत्सवभेदः। मुद्रितवीरचरितेषु सर्व्वेषु कङ्कणमोचनाय गच्छामीति पाठो नास्ति।

(१४६) 'अप्रधानस्य' प्रतिनायकादेर्वैभवस्य वर्णने हि तद्गत एव अप्रकृतो रसादिः प्राधान्येनास्वाद्येत, न तु नायकगतः प्रकृतो रसादिरिति।

(१४७) 'अङ्गिनः' प्रधानस्य नायकस्य नायिकाया वा, अननुसन्धाने न तद्गतरसास्वादः।

(१४८) प्रकृतयो नायकादयः। दिव्या देवतैकरूपाः (इन्द्रादयः), अदिव्या मानुषैकरूपाः (वत्सराजादयः), दिव्यादिव्याः मानुषरूपेणावतीर्णा देवाः (रामादयः)। ते पुनर्धीरोदात्तादिभेदेन प्रत्येकं चतुर्विधा भूत्वा पुनः (गुणोत्कर्षापकर्षतारतम्यैः) उत्तमादिभेदेन प्रत्येकं त्रिधा भूत्वा षट्त्रिंशद्विधाः सम्पद्यन्ते।

(१४९) वर्णनीयानीति शेषः।

सम्भोगशृङ्गाररूपा उत्तमदेवताविषया न वर्णनीया, तद्वर्णनं हि पित्रोः सम्भोगवर्णनमिवात्यन्तमनुचितम् ।

क्रोधं प्रभो, संहर संहरेति यावद्गिरः खे मरुतां चरन्ति ।
तावत्स वह्निर्भवनेत्रजन्मा भस्मावशेषं मदनं चकार ॥

-इत्युक्तवत् भ्रूकुट्यादिविकारवर्जितः क्रोधः सद्यःफलदः स्वर्ग-पातालगमनसमुद्रोल्लङ्घनाद्युत्साहश्च दिव्येष्वेव । अदिव्येषु तु यावदवदानं (१५०) प्रसिद्धमुचितं वा, तावदेव उपनिबद्धव्यम्, अधिकन्तु निबध्यमानमसत्यप्रतिभासेन, 'नायकवद् वर्त्तितव्यं, न प्रतिनायकवत्'-इत्युपदेशे न पर्य्यवस्येत् । दिव्यादिव्येषु उभयथापि । एवमुक्तस्य औचित्यस्य, दिव्यादीनामिव, धीरोदात्तादीनामप्यन्यथावर्णनं विपर्य्ययः (१५१) । तत्रभवन् भगवन्नित्युत्तमेन, न अधमेन; मुनिप्रभृतौ, न राजादौ; भट्टारकेति नोत्तमेन राजादौ (१५२), प्रकृतिविपर्य्ययापत्तेर्वाच्यम् ।

---

(१५०) अवदानं वृत्तं कर्म्म पूर्व्वं तेनानुचितमिति भावः ।

(१५१) एवं दिव्यादीनामुक्तस्यौचित्यस्यान्यथावर्णनमिव धीरोदात्तादीनामप्यौचित्यस्यान्यथावर्णनं विपर्य्यय इत्यन्वयः ।

(१५२) अत्र प्रतिपुस्तकं विभिन्नः पाठः, तथाहि क्वचित् "भट्टारकेति राजादौ परमेश्वरेति च न मुनिप्रभृतौ" इति पाठः, क्वचिदन्यथा । अयन्तु पाठो प्रदीपतट्टीकानुसारी, "तत्रभवन् भगवन्नित्युत्तमेनैव प्रयोक्तव्यं, नाधमेन; उत्तमेनापि मुनिप्रभृतावेव, न तु राजादौ; भट्टारकेति न राजादावुत्तमेन, किन्तु देवादावेव" इति प्रदीपः । "न राजादाविति, अधमेन तु राजादावेव न मुनिदेवादाविति केचित्" इति तट्टीका । यदि 'न मुनिप्रभृतौ' इत्युक्तिरेव स्यात्, तदा 'केचित्'-इत्यनुपपन्नं स्यात्, स्याच्च तदा प्रदीपेऽपि एतत्समानार्थकः कोऽपि पाठः, तस्याभावादनुपपत्तेः प्रदीपस्य ।

एवं देशकालवयोजात्यादीनां वेषव्यवहारादिकमुचितमेवोपनिबद्धव्यम् ।

अनङ्गस्य (रसानुपकारकस्य) वर्णनं यथा, कर्पूरमञ्जर्य्यां नायिकया स्वात्मना च कृतं वसन्तवर्णनमनादृत्य वन्दिवर्णितस्य राज्ञा प्रशंसनम् ।

'ईदृशाः'-इति नायिकापादप्रहारादिना नायककोपादिवर्णनम् (१५३) । उक्तं हि ध्वनिकृता,-

'अनौचित्यादृते नान्यत् रसभङ्गस्य कारणम् ।
औचित्योपनिबन्धस्तु रसस्योपनिषत्परा ॥'-इति (१५४) ॥

इदानीं क्वचिददोषा अप्येते,-इत्युच्यन्ते,-

**न दोषः स्वपदेनोक्तावपि सञ्चारिणः क्वचित् ।**

यथा,

औत्सुक्येन कृतत्वरा, सहभुवा व्यावर्त्तमाना ह्रिया,
तैस्तैर्बन्धुवधूजनस्य वचनैर्नीताभिमुख्यं पुनः ।
दृष्ट्वाग्रे वरमात्तसाध्वसरसा, गौरी नवे सङ्गमे
संरोहत्पुलका हरेण हसताश्लिष्टा, शिवायास्तु वः ॥

अत्र, औत्सुक्यशब्द इव तदनुभावो न तथा प्रतीतिकृत्(१५५)।

---

(१५३) नायिकापादप्रहारेण नायककोपस्य प्रायशोऽसम्भवादनुचितमिति शेषः । अयं भावः,-एवंविधा अनौचित्यहेतवः रसदोषा भवन्तीत्यर्थपरेण कारिकायां 'ईदृशाः' इति पदेन एतदुक्तं भवति, अनौचित्यहेतवः सर्व्व एव दोषा भवन्ति, परिगणितप्रकारस्तु प्रदर्शनार्थस्तत्र इति।

(१५४) 'उपनिषत्' वेदशिरोभागः, नित्यरसस्वरूपब्रह्मोपस्थापकवेदभाग इव रसोपस्थितिनिदानमिति फलितार्थः ।

(१५५) अनौत्सुक्यस्य नैकोऽपि तादृशोऽसाधारणोऽनुभावादिरस्ति,

अत एव "दूरादुत्सुकम्" (४० उ०)-इत्यादौ व्रीडा-प्रेमाद्यनुभावानां विवक्षितत्वादीनामिव, उत्सुकत्वानुभावस्य सरसा-प्रसरणादिरूपस्य तथा प्रतिपत्तिकारित्वाभावादुत्सुकमिति उक्तम्।

**सञ्चार्य्यादेर्विरुद्धस्य बाध्यस्योक्तिर्गुणावहा ॥१५॥**

बाध्यस्योक्तिः न, न परं दोषः, यावत्प्रकृतरसपरिपोषकृत्। यथा,-

क्वाकार्य्यं, शशलक्ष्मणः क्व च कुलम्-(६४उ०)-इत्यादौ,

अत्र, वितर्कादिषु उद्गतेष्वपि चिन्तायामेव विश्रान्तिरिति प्रकृतरसपरिपोषः (१५६)।

---

येन उपात्तेन औत्सुक्यमसंशयं प्रतीयेत, येऽपि च त्वरादयः, ते नासाधारणाः, गुरुजनगञ्जनाभयादिनापि तेषां सम्भवात्; इति औत्सुक्यं स्वपदेनोपादीयते, व्रीडादीनान्तु असाधारणानुभावसत्त्वात् अनुभावमुखेनैव उपादानं युक्तम्, अतएव अमरुकविर्दूरादुत्सुकमितिश्लोके औत्सुक्यमेव केवलं स्वपदेनाभिदधत् व्रीडादीन् अनुभावमुखेन प्रतिपादयति च। तेनायं सिद्धान्तः, येषां व्यभिचारिणां नासाधारणानुभावादिसम्भवस्त एव स्वशब्देनोपादीयन्ते न त्वन्येऽपीति।

(१५६) अत्र हि प्रतिचरणं पूर्व्वभागोक्तानां शमाङ्गसञ्चारिणां वितर्कादीनाम्, उत्तरभागप्रतिपादितानाञ्च शृङ्गाराङ्गसञ्चारिणाम् औत्सुक्यादीनां यथोत्तरं बाधकतया चरमोक्तायां चिन्तायामेव बाधकत्वं पर्य्यवसन्नमिति (विपक्षजयात् सैनिकोत्कर्षद्वारा राज्ञ इव) चिन्तोत्कर्षद्वारा शृङ्गारस्यैव उत्कर्ष इति। स चोत्कर्षः, वितर्कादीनां बाध्यतयोक्तावेव भवतीति गुणत्वं। नैव बाध्यमानैः शान्तस्य प्रतीत्यनुदयात् प्रकृतशृङ्गाररसास्वादविघातो नास्तीति न दोषत्वमिति।

(पाण्डु क्षामं वदनं, हृदयं सरसं, तवालसञ्च वपुः ।
आवेदयति नितान्तं क्षेत्रियरोगं सखि, हृदन्तः (१५७) ॥
-इत्यादौ साधारणत्वं पाण्डुतादीनामिति न विरुद्धम् ।

सत्यं मनोरमा रामाः, सत्यं रम्या विभूतयः ।
किन्तु मत्ताङ्गनापाङ्ग-भङ्गलोलं हि जीवितम् ॥ वि०वि०)

-इत्यत्र, आद्यमर्द्धं वाच्यत्वेनैवोक्तम् । जीवितादपि अधिकमपाङ्गभङ्गस्यास्थिरत्वमिति प्रसिद्धभङ्गुरोपमानतया उपात्तं शान्तमेव पुष्णाति (१५८) ; न पुनः शृङ्गारस्यात्र प्रतीतिः,

---

(१५७) 'सरसं' अन्तरसहितं सानुरागञ्च ।
'क्षेत्रियं क्षेत्रजतृणे परदाररतेऽपि च ।
अन्यदेहचिकित्स्येऽसाध्यरोगे च जायते' इति विश्वः । अत्र, 'पाण्डुत्वाद्यनुभावपोषितस्य रोगस्य करुणाङ्गतया विरुद्धत्वेऽपि विप्रलम्भे समावेशात् अङ्गभावाप्राप्त्या दोषत्वाभावः'-इति ध्वनिकृन्मतम् । एतदयुक्तं, पाण्डुत्वादीनां ('व्याध्युन्मादाद्यपस्मारजाड्यमरणादिभिर्विप्रलम्भोऽभिनेतव्यः'-इति भरतोक्त्या) रोगस्य विप्रलम्भसाधारणतया विरोधस्यैवासिद्धेः, इति प्रकाशकृन्मतम् ।

(१५८) मत्ताङ्गनापाङ्गेत्यनेन शृङ्गारप्रतीत्या विरोधमाशङ्क्य परिहरति जीवितादिति, अयं परिहारः, शृङ्गारस्यानुभावाद्यप्रतीत्या न एतन्मात्रेण शृङ्गारप्रतीतिरिति न विरोधः, प्रत्युत उपमानतया उपात्तं तत् स्वस्य प्रसिद्ध-भङ्गुरत्वं तदातिशय्यञ्च उपस्थापयत् शान्तमेवोपकरोति, तथाहि, भङ्गुरोपमायां प्रसिद्धभङ्गुरस्यैव उपमानतानियमेन, उपमेयस्य आतिशय्यनिश्चयेन च तस्य उपमानतया उपादानादेव प्रसिद्धभङ्गुरत्वतदातिशय्ये उपस्थापयेते इति। प्रसिद्धेति प्रसिद्धभङ्गुरस्य तत् उपमानस्येति तस्य भाव इति विग्रहः ।

तदङ्गाप्रतिपत्तेः । न तु, 'विनेयोन्मुखीकरणमत्र परिहारः, शान्तशृङ्गारयोर्नैरन्तर्यस्याभावात्, नापि काव्यशोभाकरणम्, रसान्तरादनुप्रासमात्राद्वा तथाभावात् (१५८) ।

**आश्रयैक्ये विरुद्धो यः, स कार्यो भिन्नसंश्रयः(१६०)।**
**रसान्तरेणान्तरितः; नैरन्तर्येण यो रसः ॥१६॥**

वीरभयानकयोरेकाश्रयत्वेन विरोध इति प्रतिपक्षगतत्वेन भयानको निवेशयितव्यः । शान्तशृङ्गारयोस्तु नैरन्तर्येण विरोध इति रसान्तरमन्तरे कार्यं । यथा नागानन्दे, शान्तस्य जीमूतवाहनस्य, 'अहो गीतम्! अहो वादित्रम्!' -इत्यद्भुतमन्तर्निवेश्य मलयवतीं प्रति शृङ्गारो निबद्धः । न परं प्रबन्धे, यावदेकस्मिन्नपि वाक्ये रसान्तरव्यवधिना विरोधो निवर्त्तते । यथा,-

भूरेणुदिग्धान्, नवपारिजात-
मालारजोवासितबाहुमध्याः ।
गाढं शिवाभिः परिरभ्यमाणान्,
सुराङ्गनाश्लिष्टभुजान्तरालाः ॥

---

(१५८) 'भवत्येवात्र शृङ्गारप्रतीतिः, परन्तु तत्र शुद्धनिष्कामत्वायेन विषयमनादि कनिष्ठबीजस्य यामे निवेश्यन्ते इति अदोषता । यद्वा काव्यशोभानिमित्तमेव तदुपादानमतोऽदोषता'-इति ध्वनिकारसमाधानं दूषयति न त्विति । अभावादिति विरोधेनेति शेषः । 'तथाभावात्' काव्यशोभावत्त्वात् ।

(१६०) समानमवलम्बमवद्धो व्याकम्पनाधारोभवपरी, तेनाश्रयैक्येन विरोधे भिन्नाश्रयतया निवेश्यः, आधारैक्येन च विरोधे भिन्नाधारतयेति।

सशोणितैः क्रव्यभुजां स्फुरद्भिः
पक्षैः खगानामुपवीज्यमानान्।
संवीजितांश्चन्दनवारिसेकैः
सुगन्धिभिः कल्पलतादुकूलैः॥
विमानपर्य्यङ्कतले निषण्णाः
कुतूहलाविष्टतया तदानीम्।
निर्दिश्यमानान् ललनाङ्गुलीभि-
र्वीराः स्वदेहान् पतितानपश्यन्॥

अत्र, बीभत्सशृङ्गारयोरन्तर्वीररसो निवेशितः (१६१)॥

**स्मर्य्यमाणो विरुद्धोऽपि, साम्येनाथ विवक्षितः।**
**अङ्गिन्यङ्गत्वमाप्तौ यौ, तौ न दुष्टौ परस्परम्॥१७॥**

अयं स रसनोत्कर्षी पीनस्तनविमर्द्दनः।
नाभ्यूरुजघनस्पर्शी नीवीविस्रंसनः करः॥

एतत् भूरिश्रवसः समरभुवि पतितं हस्तमालोक्य तद्वधूरभिदधौ। अत्र पूर्व्वावस्थास्मरणं शृङ्गाराङ्गमपि करुणं

(१६१) भूरेणुदिग्धेत्यादिना कर्म्मविशेषणेन बीभत्सः, नवपारिजाते-त्यादिना कर्त्तृविशेषणेन शृङ्गारः, अनयोश्च निर्द्देशक्रमेण प्रतीतिः। एवं भूरेणुदिग्धत्वादेः, नवपारिजातमालारजोवासितत्वादेश्च रणोत्साहानुभावकतया रणोत्साहप्रतीत्या वीररसः। एवञ्च प्रथमतो बीभत्सः, ततो वीरः, ततश्च शृङ्गारः, ततः पुनर्वीर इति व्यवधानम्। तेनानन्तर्य्याभावात् बीभत्स-शृङ्गारयोरविरोधः"। वीरस्य आलम्बनन्तु प्रतियोद्धा, शृङ्गारस्य तु सुराङ्गना इति आलम्बनभेदादनयोरप्यविरोधः। "यद्यपि अत्र वीर एव प्रधानः, अन्यौ च तद्व्यभिचारिणाविति न विरोधस्तथाप्येवमविरोधः सम्भवतीति उदाहृतम्" इति प्रदीपः।

क्रामन्त्यः क्षतकोमलाङ्गुलिगलद्रक्तैः सदर्भाः स्थलीः
पादैः, पातितयावकैरिव, पतद्बाष्पाम्बुधौताननाः।
भीता भर्तृकरावलम्बितकरास्त्वच्छत्रुनार्योऽधुना
दावाग्निं परितो भ्रमन्ति पुनरप्युद्यद्विवाहा इव (१६५) ॥[१]

अत्र, चाटुके राजविषया रतिः प्रतीयते, तत्र करुण इव शृङ्गारोऽप्यङ्गमिति तयोर्न विरोधः (१६६)। (यथा (१६७),

एहि, गच्छ; पतोत्तिष्ठ; वद, मौनं समाचर।
एवमाशाग्रहग्रस्तैः क्रीडन्ति धनिनोऽर्थिभिः॥

अत्र, एहीति क्रीडति, गच्छेति क्रीडतीति क्रीडनापेक्षयोः आगमनगमनयोर्न विरोधः।

क्षिप्तो हस्तावलग्नः, प्रसभमभिहतोऽप्याददानोंऽशुकान्तं,
गृह्णन् केशेष्वपास्तश्चरणनिपतितो नेक्षितः संभ्रमेण।
आलिङ्गन् योऽवधूतस्त्रिपुरयुवतिभिः साश्रुनेत्रोत्पलाभिः,
कामीवार्द्रापराधः स दहतु दुरितं शाम्भवो वः शराग्निः ॥[२]

-इत्यत्र त्रिपुररिपुप्रभावातिशयस्य करुणोऽङ्गम् (१६८),

(१६५) विवाहाङ्गलाजहोमे प्रायो वधूनामेतादृशी अवस्था भवति।

(१६६) शोच्यावस्थातः करुणः विवाहावस्थातश्च शृङ्गारः, द्वयोरपि अनयोर्नृपविषयकरतिभावेऽङ्गता, 'एतादृशो हि अस्य राज्ञः प्रतापः, येनैषाम् एतादृशी अवस्था जाता, येन चैताः पुनर्विवाह उत्प्रेक्ष्यन्ते' इति प्रत्ययात्। एवञ्चैकस्यैवान्यपरयोर्नृपयोरिवानयोः (स्वभावतो विरोधिनोरपि) नात्र विरोधः प्रसरति।

(१६७) प्रधानाङ्गभूतयोर्विरोधिनोरप्यविरोधं दृष्टान्तेन द्रढयति यथेति,

(१६८)। करुणोऽङ्गमिति करुणोद्दीपनविभावस्य त्रिपुरपुरस्त्रीजनस्य त्रिपुररिपुप्रभावातिशयाधीनत्वात्। एवञ्च त्रिपुरप्रभावातिशयस्य त्रिपुर-रिपुविषयकरतिभावोद्दीपनविभावत्वात् अङ्गिनि त्रिपुररिपुविषयकरति-

तस्य तु शृङ्गारः ; तथापि न करुणे विश्रान्तिरिति तस्य अङ्गतैव । अथ वा (१६९), प्राक् यथा कामुक आचरति स्म, तथा शराग्निरिति शृङ्गारपोषितेन करुणेन मुख्य एवार्थ उपोद्बलयते । उक्तं हि,-

'गुणः कृतात्मसंस्कारः प्रधानं प्रतिपद्यते ।
प्रधानस्योपकारे हि तथा भूयसि वर्त्तते ॥' (१७०) इति ।

प्राक् (४७०) प्रतिपादितरूपस्य रसस्य रसान्तरेण न विरोधः, नाप्यङ्गाङ्गिभावो भवति (१७१) इति रसशब्देनात्र स्थायिभाव उपलक्ष्यते ॥

इति काव्यप्रकाशे दोषदर्शनो नाम सप्तम उल्लासः ॥

---

भावे करुणोऽङ्गमिति पर्य्यवस्यति । एवं पूर्व्वं प्रणयी यथा कराकर्षणादिकम् अकार्षीत्, तथेदानीं शराग्निरित्युपमानभावेन, पूर्व्वावस्थाप्रतीते-रुद्दीपकत्वेन च शृङ्गारः करुणस्याङ्गं सन् परम्परया प्रधानस्य भावस्याङ्गमिति विरोधिनोरप्यनयोः प्रधानेऽङ्गभावेनाविरोधः । यद्यपि शृङ्गारापेक्षया करुणोऽङ्गी, तथापि तत्र प्रकर्षपर्य्यवसानं नास्ति, तेनापि भावप्रकर्षणात् इत्यङ्गमेव तदिति तात्पर्य्यम् ।

(१६९) ननु यथा छेदे औदासीन्येन खड्गनिर्माता तदुत्कर्षयन् वा शिल्पी नाङ्गं, तथा करुणस्तत्कर्षयन्नपि शृङ्गारो नाङ्गिनि भावेऽङ्गमिति केवलकरुणस्यैव भावाङ्गतया तत्र शृङ्गारस्य औदासीन्यादित्याशङ्क्य पक्षान्तरम् उपन्यस्यति अथ वेति । यथा केवलः खड्गोन छेदेऽङ्गं किन्तु निपातितः स इति निपातविशिष्टः छेदेऽङ्गभावः, तथा केवलः करुणो नाङ्गतया विवक्षितः, किन्तु शृङ्गारेणोत्कर्षितः सः इति तदुत्कर्षविशिष्टः शृङ्गारस्याङ्ग-भावोऽङ्गत इति सिद्धान्तः । उदाहरणद्वयेनैतत् प्रतिपादितम्,-यत्, अङ्गिनि साक्षात् परम्परया वा अङ्गत्वमाप्तयोर्न विरोध इति ।

(१७०) 'गुणः' अङ्गं, 'संस्कारः' उत्कर्षः, 'तथा' कृतात्मसंस्कारस्ते ।

(१७१) रसस्य वेद्यान्तरसम्पर्कशून्यतया रसान्तरस्यैवाप्रवृत्तेः ।

# ॥ अष्टम उल्लासः ॥



एवं दोषानुक्त्वा गुणालङ्कारविवेकमाह,-

**ये रसस्याङ्गिनो धर्म्माः शौर्य्यादय इवात्मनः ।**
**उत्कर्षहेतवस्ते स्युरचलस्थितयो गुणाः(१)॥१॥**

आत्मन एव हि यथा शौर्य्यादयः, न आकारस्य ; तथा, रसस्यैव माधुर्य्यादयो गुणाः, न वर्णानाम् । क्वचित्तु शौर्य्यादिसमुचितस्य आकारमहत्त्वादेर्दर्शनात् 'आकार एवास्य शूरः'-इत्यादेर्व्यवहारादन्यत्र अशूरेऽपि विततात्कृतित्वमात्रेण 'शूरः' इति (२), क्वापि शूरेऽपि मूर्त्तिलाघवमात्रेण 'अशूरः'-इति अविश्रान्तप्रतीतयो(३)यथा व्यवहरन्ति, तद्वत् मधुरादि-व्यञ्जक-सुकुमारादिवर्णानां मधुरादिव्यवहारप्रवृत्तेःअमधुरादि-रसाङ्गानां वर्णानां सौकुमार्य्यादिमात्रेण माधुर्य्यादि, मधुरादिरसोपकरणानां तेषामसौकुमार्य्यादेरमाधुर्य्यादि रस-

---

(१) 'अचलस्थितयः' नियतावस्थानाः, नैयत्यञ्च रसेन तदुपकारेण च सह बोध्यम्, तेन रसं विना ये न तिष्ठन्ति, तिष्ठन्तश्चावश्यं रसमुपकुर्व्वन्तीत्यर्थः । इदञ्च स्वरूपकथनम्; लक्षणन्तु रसोत्कर्षकत्वे सति रसधर्म्मत्वम्, तथात्वे सति रसनियतस्थितिकत्वं, नियमेन रसोपकारकत्वं वेति त्रितयं बोध्यमिति प्रदीपः ।

(२) अत्र व्यवहरन्तीत्यपिनेनान्वयः, एवं परत्र, माधुर्य्यादि-इत्यत्रापि ।

(३) न विश्रान्ता याथार्थ्ये पर्य्यवसन्ना प्रतीतिर्येषां ते, अदूरदर्शिन इति ।

पर्य्यन्तविश्रान्तप्रतीतिवन्ध्या व्यवहरन्ति (४)। अत एव माधुर्य्यादयो रसधर्म्माः समुचितैर्वर्णैर्व्यज्यन्ते, न तु वर्णमात्राश्रयाः (५)। यथैषां व्यञ्जकत्वं, तथोदाहरिष्यते ।

उपकुर्व्वन्ति तं सन्तं येऽङ्गद्वारेण जातुचित् ।
हारादिवदलङ्कारास्तेऽनुप्रासोपमादयः(६)॥२॥

ये वाचकवाच्यलक्षणाङ्गातिशयमुखेन मुख्यं रसं सम्भविनम् उपकुर्वन्ति, ते कण्ठाद्यङ्गानामुत्कर्षाधानद्वारेण शरीरिणोऽपि उपकारका हारादय इव, अलङ्काराः ; यत्र तु नास्ति रसः, तत्रोक्तिवैचित्र्यमात्रपर्य्यवसायिनः। क्वचित्तु सन्तमपि न उपकुर्व्वन्ति ।

---

(४) अयं भावः,—विततकायस्य सुकुमारवर्णादीनाञ्चात्मव्यञ्जकत्वेन व्यञ्जकत्वप्रतिपत्तये उपचारेण 'अस्य अयमाकार एव शूरः, एते वर्णा एव मधुराः' इत्यादि क्वचित् अभियुक्ता व्यवहरन्ति, तमवलोकयन्तोऽनभिज्ञा विततकायस्यैव शूरत्वं, सुकुमारवर्णादीनामेव माधुर्यादि मन्यमाना तथैव व्यवहरन्ति, नैतावता गुणस्य वर्णधर्मत्वसिद्धिरिति ।

(५) अभ्युपगन्तुं शक्या इति शेषः । 'मधुरा रचना' इत्यादिव्यवहारात्तु अविशेषेण रचनायामपि तदभ्युपगमप्रसङ्गादिति भावः । तथाच गुणस्य रसैकधर्म्मत्वे लाघवं, वर्णरचनोभयवृत्तित्वे गौरवमिति सूचितम् । एतदर्थमेव 'वर्णमात्राश्रयाः' इत्युक्तम् ।

(६) 'सन्त' स्फुटतयाऽवस्थितम् । एवं परत्र । अङ्गद्वारेणेति, अनेन रसधर्मत्वं निरस्तम् । इदमपि स्वरूपकथनम्, वस्तुतस्तु, रसोपकारकत्वेऽपि तद्वृत्तित्वम्, तथात्वे सति रसानियतावस्थितिकत्वम् अनियमेन रसोपकारकत्वं वा इति प्रदीपः ।

यथाक्रममुदाहरणानि,-

अपसारय घनसारं, कुरु हारं दूर एव, किं कमलैः ।
अलमलमालि, मृणालैः, इति वदति दिवानिशं बाला ॥

-इत्यादौ वाचकमुखेन,

मनोरागस्तीव्रं विषमिव विसर्पत्यविरतं,
प्रमाथी निर्धूमं ज्वलति विधुतः पावक इव ।
हिनस्ति प्रत्यङ्गं ज्वर इव गरीयानित-इतः,
न मां त्रातुं तातः प्रभवति, न चाम्बा, न भवती ॥

-इत्यादौ वाच्यमुखेन अलङ्कारौ रसमुपकुरुतः (७) ॥

चित्ते विहट्टदि, ण टुट्टदि सा गुणेसु,
सेज्जासु लोटदि, विसट्टदि दिम्मुहेसुं ।
बोलम्मि वट्टदि, पवट्टदि कव्वबन्धे,
झाणे ण तुट्टदि चिरं, तरुणी तरट्टी (८) ॥

-इत्यादौ वाचकमेव (९),

---

(७) पूर्व्वत्र, शृङ्गारव्यञ्जक-रेफानुप्रासः यद्यमलङ्कुर्व्वन् शृङ्गारमप्युपकरोति । उत्तरत्र तु, 'विषमिव'-इत्युपमार्थेन विसर्पणशातिशय्यप्रतीत्या विप्रलम्भोत्कर्ष इति प्रदीपः । 'स्वच्छन्दोच्छलदु'-इत्यादौ चित्रकाव्ये न कश्चित् स्फुटो रसः इति नात्र तदुदाहृतम् ।

(८) चित्ते विघटते, न लुप्यति सा गुणेषु,
शय्यासु लुठति विसर्पति दिङ्मुखेषु ।
वचने वर्त्तते, प्रवर्त्तते काव्यबन्धे,
ध्याने न लुप्यति चिरं तरुणी प्रगल्भा ॥-इति स० ।

विघटते चमत्करोति, चित्तानुरूपं कर्म्म करोतीत्यर्थ इति उद्योतकृत्, विघटते मुह्यति विवेकहीना भवतीति तु वयं । तरट्टी प्रगल्भेति देशीति महेश्वरः ।

(९) उपकरोतीति शेषः । न तु रसमिति परेषामन्वयः । अत्र हि शृङ्गारो रसः, तत्प्रतिकूलः टवर्णानुप्रासोऽलङ्कार इति ।

मित्रे क्वापि गते, सरोरुहवने बद्धानने ताम्यति,
क्रन्दत्सु भ्रमरेषु, वीक्ष्य दयितासन्नं पुरः सारसम्।
चक्राह्वेन वियोगिना बिसलता नास्वादिता नोज्झिता,
कण्ठे केवलमर्गलेव निहिता जीवस्य निर्गच्छतः॥

-इत्यादौ वाच्यमेव, न तु रसम्। अत्र बिसलता न जीवं रोद्धुं क्षमेति प्रकृतानुगुणोपमा (१०)।

एष एव (११) च गुणालङ्कारप्रविभागः। एवञ्च (१२) 'समवायवृत्त्या शौर्य्यादयः, संयोगवृत्त्या तु हारादय इत्यस्तु गुणालङ्काराणां भेदः, ओजःप्रभृतीनामनुप्रासोपमादीनाञ्च उभयेषामपि समवायवृत्त्या स्थितिरिति गड्डलिकाप्रवाहेणैषां

---

(१०) 'अत्र' एतादृशविप्रलम्भावस्थायां, 'जीवं रोद्धुं' जीवनिरोधाय, 'न क्षमा' नार्पयितुं योग्या। जीवनिरोधनिमित्तं कण्ठे बिसलतार्पणमनुचितम्-इत्यर्थः; विप्रलम्भोत्कर्षे हि जीवनिर्गमोपाय एवावलम्ब्यते, न तु तन्निरोधोपाय इति इयमुपमा 'प्रकृतं' विप्रलम्भं रसमपकर्षयतीति भावः।

(११) 'एष एव' पूर्व्वोक्त एव, न अन्यप्रकारः, नापि च विभागाभावः।

(१२) एवञ्च (गुणालङ्कारयोरुक्तरीत्या प्रविभागसत्त्वे च) इत्यभिधानमसदित्यन्वयः। तदभिधानमिदम्,-लौकिका गुणालङ्काराः सम्बन्धभेदेन तिष्ठन्तीति तेषां भेदोऽस्तु, काव्ये पुनरलौकिकानां गुणालङ्काराणामेकेनैव समवायसम्बन्धेनावस्थितिरिति भेदोऽनुपपन्नः। योऽपि च भेदव्यवहारः, स गड्डलिकाप्रवाहन्यायेन, यथा हि, केनापि कारणेन पुरोऽनुसरन्तीमेकामपि गड्डलिकां (मेषीं), विनैव निमित्तविचारम्, इतरा अप्यनुगच्छन्ति, गर्त्ते पतितामपि च तामनुपतन्ति, तथा, कश्चन प्राक्तनः केनचिदप्यभिप्रायेण गुणालङ्कारयोर्भेदमुक्तवान्, तदनुसारेण, विनैव निमित्तविचारं, केचनाधुनिका अपि तथैव व्यवहरन्तीति। समवायश्चेत्तरत्र अयुत-(अपृथक्)-सिद्धात्मकः, तत्तत्-नियतपदार्थात्मकरूपो वा कश्चन सम्बन्धः, न पुनर्वैशेषिककल्पितः समवाय इति।

भेदः'-इत्यभिधानमसत् । यदप्युक्तं, 'काव्यशोभायाः कर्त्तारो धर्म्मा गुणास्तदतिशयहेतवस्तु अलङ्काराः(१३)'-इति ; तदपि न युक्तं, यतः, किं समस्तैर्गुणैः काव्यव्यवहारः, उत कतिपयैः, यदि समस्तैः, तत्कथमसमस्तगुणा गौड़ी पाञ्चाली च रीतिः काव्यस्यात्मा ? (१४) । अथ कतिपयैः, ततः,

'अद्रावत्र प्रज्वलत्यग्निरुच्चैः, प्राज्यः प्रोद्यन्नुल्लसत्येष धूमः ।'

-इत्यादावोजःप्रभृतिषु(१५)गुणेषु सत्सु काव्यव्यवहारप्राप्तिः ।

स्वर्गप्राप्तिरनेनैव देहेन वरवर्णिनी ।
अस्या रदच्छदरसो न्यक्करोतितरां सुधाम् ॥

-इत्यादौ विशेषोक्तिव्यतिरेकौ गुणनिरपेक्षौ काव्यव्यवहारस्य प्रवर्त्तकौ (१६) ।

---

(१३) उक्तं वामनेन । 'काव्यशोभा' काव्यव्यवहारनिदानमुत्कर्षः । 'तदतिशयः' तस्या गुणकृतशोभाया अतिशयः आधिक्यम् ।

(१४) वामनेन हि, 'रीतिरात्मा काव्यस्य, सा च पदसङ्घटनात्मिका त्रिविधा, वैदर्भी गौड़ी पाञ्चाली च ; समस्तगुणा वैदर्भी, प्रसादौजोगुणा गौड़ी ; माधुर्य्यप्रसादगुणा तु पाञ्चाली'-इत्युक्तम् । एतन्मते गुणा न रसधर्म्माः, नापि च त्रय एव, किन्तु दश इत्यनुपदं व्यक्तीभविष्यति ।

(१५) वामनोक्तौजःप्रसादार्थव्यक्तिषु । एषां स्वरूपं वक्ष्यते ।

(१६) पूर्व्वोक्ते विशेषोक्तिरत्तरार्द्धे व्यतिरेकः । 'एकगुणहानिकल्पनया शेषगुणदार्ढ्यकल्पना विशेषोक्तिः'-इति, 'उपमेयस्य गुणातिरेकत्वं व्यतिरेकः'-इति च वामनेनैवोक्तम् । अयमभिसन्धिः, अत्र हि काव्यव्यवहारनिदानशोभाजनका न केऽपि गुणाः सन्ति, येऽपि च वामनमतसिद्धाः प्रसादादयः सन्ति, ते हि रौद्रादिरसव्यञ्जकाः नास्मिन् शृङ्गारप्रधाने श्लोके काव्यव्यवहारप्रवर्त्तनाय प्रभवन्तीति एतावेवालङ्कारौ काव्यव्यवहारं प्रवर्त्तयत इत्यवश्यं भवताङ्गीकार्य्यम्, एवञ्च अस्मिन् अलङ्कारद्वये गुणलक्षणातिव्याप्तिः,

**माधुर्य्यौजःप्रसादाख्यास्त्रयस्ते न पुनर्दश (१७) ।**

एषां क्रमेण लक्षणमाह,-

**आह्लादकत्वं(१८)माधुर्य्यं शृङ्गारे द्रुतिकारणम् ॥३॥**

शृङ्गारे ( अर्थात् ) सम्भोगे, द्रुतिर्गलितत्वमिव ( १९ ) श्रव्यत्वं (२०) पुनरोजःप्रसादयोरपि ।

**करुणे विप्रलम्भे तच्छान्ते चातिशयान्वितम् (२१) ।**

अत्यन्तद्रुतिहेतुत्वात् ।

**दीप्त्यात्मविस्तृतेर्हेतुरोजो वीररसस्थिति ॥४॥**

---

अव्याप्तिश्च अलङ्कारलक्षणस्य, आभ्यां गुणत्वशोभाया अनतिशायनादिति। ग्रन्थकृता यत् काव्यस्वरूपनिरुक्तौ 'सगुणौ'-इति विशेषणं दत्तं, तत् न वामनाद्युक्तगुणयोगाभिप्रायेण, किन्तु स्वोक्तरसधर्म्मगुणानां परम्परया सम्बन्धतात्पर्य्येण, रसवत्त्वे तद्व्याप्तमिति। वस्तुतः ग्रन्थकृता 'तददोषौ सगुणौ' इत्यनेन काव्यस्य स्वरूपमुक्तं न तु लक्षणमिति क्वचित् गुणाभावेऽपि न दोषः।

(१७) 'श्लेषः प्रसादः समता माधुर्य्यं सुकुमारता ।
अर्थव्यक्तिरुदारत्वमोजःकान्तिसमाधयः' ॥
इति वामनाद्युक्ता दश शब्दगुणा अर्थगुणाश्च ।

(१८) 'आह्लादकत्वम्' (स्वार्थे कप्रत्ययात्) आनन्दस्वरूपता इति प्रदीपः। आस्वाद्यमानरत्यादेरेव रसरूपतया आनन्दात्मकास्वादहेतुः रत्यादिगतः कश्चन धर्म्म इति महेश्वरः। द्रुतिकारणं आह्लादकत्वं माधुर्यं, तच्च शृङ्गारे इत्यन्वयः, एवं परत्र।

(१९) सामाजिकानुभवसिद्धः सुकुमारचित्तस्यावस्थाविशेषः द्रुतिः, सा च मधुररसास्वादादेव(मनःकाठिन्याद्युपगमे)जायते, न तु माधुर्य्यमेव स इति ।

(२०) तेन 'श्रव्यत्वं(श्रवणातिशयसुखकरत्वं)माधुर्य्यम्' इति भास्करोक्तं दुष्टम् !

(२१) क्रमादिति शेषः ।

चित्तस्य विस्ताररूपदीप्तत्वजनकमोजः (२२) ।

**बीभत्सरौद्ररसयोस्तस्याधिक्यं क्रमेण च ।**

वीरात् बीभत्से, ततो रौद्रे सातिशयमोजः (२३) ।

**शुष्केन्धनाग्निवत् स्वच्छजलवत्सहसैव यः (२४) ॥५॥**

**व्याप्नोत्यन्यत्प्रसादोऽसौ सर्व्वत्र विहितस्थितिः ।**

'अन्यत्' इति व्याप्यमिह चित्तम् ।

'सर्व्वत्र' इति सर्व्वेषु रसेषु, सर्व्वासु रचनासु च ।

**गुणवृत्त्या पुनस्तेषां वृत्तिः शब्दार्थयोर्मता ॥६॥**

गुणवृत्त्या उपचारेण (२५), तेषां गुणानाम्, (आकारे शौर्य्यस्येव) ।

---

(२२) स्निग्धस्यापि सामाजिकमनसो हृष्याद्यात्मकविषयविशेषसम्पर्केण (सूर्य्यकान्तस्यार्ककिरणसम्पर्केण ज्वलनमिव) तेजस्त्वावस्थाविशेषो विस्तारः ।

(२३) पारिशेष्यात् उक्तेतरेषु हास्यभयानकाद्भुतेषु उभयोरेव माधुर्य्यौजसोः स्थितिरिति बोध्यम् । तत्र हास्यादीनां शृङ्गाराङ्गविभावादिप्रभवत्वे माधुर्य्यं प्रधानं, वीराद्यङ्गविभावादिप्रभवत्वे तु ओजः प्रधानमिति उद्योतकृत् । एवञ्च तत्र तत्र रचनापि तादृशी कार्य्या । 'हास्ये सर्व्वदैव प्रकृष्टं माधुर्य्यं, स्वल्पं ओजः, भयानकेऽद्भुते च ओजः प्रधानं स्वल्पं माधुर्य्यम् इति तु निदर्शनकृत् ।

(२४) ओजसि शुष्केन्धनाग्निवत्, माधुर्य्ये स्वच्छवस्तुजलवदिति । आश्रयतया रसे, व्यञ्जकतया च रचनायामिति च विभागः । येन गुणेन रसाः वक्तव्यं चित्तं व्याप्नुवन्ति, स प्रसाद इति फलितोऽर्थः । 'व्याप्नोति यः' इति कर्तृतया निर्देशोऽस्यैवंरूपत्वेन करणत्वावगतये ।

(२५) 'उपचारेण' व्यञ्जकतादिसम्बन्धेन लक्षणया, मधुरः शब्दः मधुरोऽर्थं इति व्यवहार इति भावः ।

कुतस्त्रय एव, न दश ? इत्याह,-

केचिदन्तर्भवन्त्येषु, दोषत्यागात्परे श्रिताः ।
अन्ये भजन्ति दोषत्वं कुत्रचित्, न ततो दश ॥७॥

बहूनामपि पदानामेकपदवद्भासनात्मा यः श्लेषः, यश्च आरोहावरोहक्रमरूपः (२६) समाधिः, या च विकटत्वलक्षणा (२७) उदारता, यश्चोजोमिश्रितशैथिल्यात्मा प्रसादः ; तेषामोजसि अन्तर्भावः (२८) । पृथक्पदत्वरूपं माधुर्य्यं भङ्ग्या(२९)साक्षादुपात्तम् । प्रसादेन अर्थव्यक्तिर्गृहीता (३०) । मार्गाभेदरूपा समता क्वचिद्दोषः, तथाहि, "मातङ्गाः किमु वल्गितैः"-[१५७ पृ०]-इत्यादौ, सिंहाभिधाने मसृणमार्गत्यागो गुणः । कष्टत्वग्राम्यत्वयोर्दुष्टताभिधानात् तन्निराकरणेन अपारुष्यरूपं सौकुमार्य्यम्, औज्ज्वल्यरूपा (३१) कान्तिश्च स्वीकृता । एवं न दश शब्दगुणाः ।

---

(२६) आरोहो गाढ़ता, अवरोहः शैथिल्यं; तयोः क्रमः वैरस्याजनको विन्यासः, स च आरोहपूर्व्वकोऽवरोहः, अवरोहपूर्व्वको वा आरोहः ।

(२७) विकटत्वं विच्छेदात् पदानां नृत्यत्प्रायत्वम् ।

(२८) वामनाद्युक्तस्य ओजस इव एषामपि गाढ़बन्धत्वेन ओजोगुणव्यञ्जकवर्णसादृश्येन ओजोगुणेऽन्तर्भावः । एवमन्यत्रापि ।

(२९) 'भङ्ग्या' माधुर्य्यव्यञ्जकमध्येऽसमासार्थकाद्युक्तिपदोपादानरूपं प्रकारान्तरं भङ्गिः, तया ।

(३०) अर्थव्यक्तिर्झटित्यर्थोपस्थापनसामर्थ्यम् ।

(३१) कष्टत्वं श्रुतिकटुत्वम्, अपारुष्यं श्रुतिसुखावहत्वम्, औज्ज्वल्यं ग्राम्यिकादिसाधारणपदविन्यासवैलक्षण्येन अलौकिकचमत्कारप्रयोजकत्वम् ।

'पदार्थे वाक्यरचनं, वाक्यार्थे च पदाभिधा ।
प्रौढिर्व्याससमासौ च, साभिप्रायत्वमस्य च (३२) ॥'

-इति या प्रौढिः, ओज इत्युक्तम् (३३) तत् वैचित्र्यमात्रं न गुणः, तदभावेऽपि काव्यव्यवहारप्रवृत्तेः(३४)। अपुष्टार्थत्वाधिकपदत्वानवीकृतत्वामङ्गलरूपाश्लीलग्राम्याणां निराकरणेन च साभिप्रायत्वरूपमोजः (३५), अर्थवैमल्यात्मा (३६)

(३२) उक्तश्लेषादिनामकान् दश अर्थगुणानपि दूषयति 'पदार्थे' इति। 'अस्य' पदस्य विशेषणादेरिति यावत् । उक्तपञ्चप्रकारा प्रौढिरित्यर्थः । तत्राद्या यथा, चन्द्रे वक्तव्ये अत्रिलोचनसमुत्थं ज्योतिरिति वाक्यरचनं । द्वितीया यथा, कान्तार्थिनी सङ्केतस्थानं गच्छतीति वक्तव्ये 'अभिसारिका' इति पदाभिधानम् । तृतीया यथा, परस्वं नापहर्त्तव्यमिति एकस्मिन् वाक्यार्थे वक्तव्ये, परान्नं नापहर्तव्यं, परवस्त्रापहारो अनुचितः, पराभरणहरणम् इहामुत्रानिष्टकरमित्यादिना नानावाक्येन प्रतिपादनं व्यासः । चतुर्थी यथा, 'ते हिमालयमामन्त्र्य' इत्यादिना एकेनैव वाक्येन नानावाक्यार्थीभूतस्यामन्त्रणस्य उक्तिः समासः । पञ्चमी यथा, 'कुर्यां हरस्यापि पिनाकपाणेः' इत्यादौ पिनाकपाणेरिति विशेषणस्य सार्थकत्वम्। महेश्वरानुयायिनस्तु 'साभिप्रायत्वमस्य च' इति पाठं नाङ्गीकुर्व्वन्ति, तन्मते चतुर्व्विधैव प्रौढिः ।

(३३) 'इति' उक्तपञ्चविधा या प्रौढिः 'ओजः-इत्युक्तं' (ओजः-इति नाम्ना अर्थगुणतया वामनादिभिरुक्तं) 'तत्' वैचित्र्यमात्रमित्यन्वयः ।

(३४) अत्र, तत्सत्त्वेऽपि रसाद्यभावे काव्यव्यवहाराप्रवृत्तेश्च-इत्यपि बोध्यः । अयमभिप्रायः, गुणानामेव काव्यव्यवहारहेतुत्वमङ्गीकुर्व्वतां वामनादीनामेतादृशे ओजसि गुणत्वेनाभिमतेऽसति काव्यव्यवहारो न स्यादिति।

(३५) एवञ्च साभिप्रायत्वरूपमोजः न केवलं वैचित्र्यमात्रं किन्तु अपुष्टार्थत्वदोषाभावरूपमपीति बोध्यम् ।

(३६) अर्थवैमल्यम् अधिकपदानुपादानेन अपेक्षितार्थमात्रपरिग्रहात् वाक्यार्थस्य विशदप्रतीतियोग्यत्वम् ।

प्रसादः, उक्तिवैचित्र्यरूपं माधुर्य्यम्, अपारुष्यरूपं (३७) सौकुमार्य्यम्, अग्राम्यत्वरूपा उदारता च स्वीकृता। अभिधास्यमानस्वभावोक्त्यलङ्कारेण रसध्वनिगुणीभूतव्यङ्ग्याभ्यां (३८) च वस्तुस्वभावस्फुटत्वरूपा अर्थव्यक्तिः, दीप्तरसत्वरूपा कान्तिश्च स्वीकृता। क्रमकौटिल्यानुल्बणत्वोपपत्तियोगरूपघटनात्मा (३९) श्लेषोऽपि विचित्रत्वमात्रम्। अवैषम्यस्वरूपा (४०) समता दोषाभावमात्रं न पुनर्गुणः, कः खलु

---

(३७) अपारुष्यं निष्ठुरार्थानभिधानं। परुषेऽप्यर्थे वाच्येऽपरुषरूपेण अभिधानं, यथा 'मृतः' इति वक्तव्ये 'कीर्त्तिशेषं गत' इत्युक्तिरिति प्रदीपः।

(३८) रसस्य प्राधान्ये रसध्वनिना, अप्राधान्ये रसगुणीभूतव्यङ्ग्येन रसवदलङ्कारेणेति विशेषः।

(३९) क्रमकौटिल्यं अतिक्रमः, तस्य अनुल्बणत्वम् अस्फुटत्वं, तत्रोपपत्तिर्युक्तिस्तस्या योग इति, यथा,—

दृष्ट्वैकासनसंस्थिते प्रियतमे पश्चादुपेत्यादराद्
एकस्या नयने पिधाय विहितक्रीडानुबन्धच्छलः।
ईषद्वक्रितकन्धरः सपुलकप्रेमोल्लसन्मानसाम्
अन्तर्हासलसत्कपोलफलकां धूर्त्तोऽपरां चुम्बति॥

—इत्यत्र पिहितनयनामतिक्रम्यान्याचुम्बनाद् अतिक्रमः, अस्य अस्फुटत्वम्, अनया तदज्ञानात्; तत्रोपपत्तिः, एवमनया तु न ज्ञातव्यमिति युक्तिरिति प्रदीपतदुद्योतकृतः। दर्पण-निदर्शनकृतस्तु, क्रमः क्रियापरम्परा; कौटिल्यं विदग्धचेष्टितम्; अनुल्बणत्वं प्रसिद्धिः; उपपत्तिः उपपादकयुक्तिविन्यासः; तेषां योगो मेलनं, स एव रूपं यस्याः सा घटना आत्मा यस्य सः। तथाहि उक्तश्लोके ज्ञान्ता क्रियापरम्परा; पश्चादुपेत्य नयनपिधानादि विदग्धचेष्टितम्; अयमर्थो लोकप्रसिद्धः, एकासनसंस्थिते, पश्चादुपेत्य, नयने पिधाय, ईषद्वक्रितकन्धर इति चोपपादकानि, एषामत्र योग इत्याहुः।

(४०) उपक्रान्तस्य उपसंहारे परित्यागः (प्रक्रमभङ्गदोषरूपः) वैषम्यम्।

अनुभक्तोऽन्यस्य प्रस्तावेऽन्यदभिदध्यात् । अर्थस्य अयोनेरन्यच्छायायोनेर्वा यदि न भवति दर्शनं तत्कथं काव्यम् (४१.), -इत्यर्थदृष्टिरूपः समाधिरपि न गुणः ।

**तेन नार्थगुणाः वाच्याः,**

वाच्या वक्तव्याः ।

**प्रोक्ताः शब्दगुणाश्च ये (४२) ।**

**वर्णाः समासो रचना तेषां व्यञ्जकतामिताः ॥८॥**

के कस्य ? इत्याह,-

**मूर्ध्नि वर्गान्त्यगाः स्पर्शा अटवर्गाः, रणौ लघू,**

**अवृत्तिर्मध्यवृत्तिर्वा माधुर्य्ये घटना तथा ॥९॥**

---

(४१) अयोनिः केनाप्यनुल्लिखितपूर्व्वः, यथा,-

'सद्योमुण्डितमत्तहूनचिबुकप्रस्पर्द्धि नारङ्गकम्' इत्यादि ।

अन्यच्छाययोनिः अन्यैरुल्लिखितमूलको रचनानैपुण्येन अभिनव इव प्रतीयमानोऽर्थः, यथा,-

निजनयनप्रतिबिम्बैरम्बुनि बहुशः प्रतारिता कापि ।
नीलोत्पलेऽपि विमृशति करमर्पयितुं कुसुमलावी ॥

अत्र हि नयननीलोत्पलयोः प्रसिद्धामेवोपमामवलम्ब्यायमर्थ उद्भावितः । अयम्भावः, लोकशास्त्रकाव्यादिदर्शनजन्यनिपुणताया काव्यहेतुतया अर्थदर्शनाभावे काव्यशरीरमेव न निष्पद्यते इत्यर्थदृष्टेः काव्यशरीरनिर्व्वाहकत्वमेव न तु गुणत्वमिति ।

(४२) ये च माधुर्य्यौजःप्रसादाख्या (गुणाइत्यर्थ) 'शब्दगुणाः' 'प्रोक्ताः', 'तेषाम्'-इत्यन्वयः । 'शब्दगुणाः' इत्युक्तिस्तु शब्दात्मनां वर्णादीनां व्यञ्जकत्वसम्भवप्रदर्शनाय ।

टठडढवर्ज्जिताः कादयो मान्ताः, शिरसि निजवर्गान्त्य-युक्ताः, तथा रेफणकारौ ह्रस्वान्तरिताविति वर्णाः ; समासाभावो मध्यमः समासो वेति समासः ; 'तथा' माधुर्य्यवती पदान्तरयोगेन(४३), रचना माधुर्य्यस्य व्यञ्जिका। उदाहरणम्,

अनङ्गरङ्गप्रतिमन्तदङ्गम्भङ्गीभिरङ्गीकृतमानताङ्ग्याः।
कुर्व्वन्ति यूनां सहसा यथैताः स्वान्तानि शान्तापरचिन्तनानि॥

**योग आद्यतृतीयाभ्यामन्त्ययोः, रेण, तुल्ययोः।**
**टादिः, शषौ, वृत्तिदैर्घ्यं, गुम्फ उद्धत ओजसि॥१०॥**

वर्गप्रथमतृतीयाभ्यामन्त्ययोः (द्वितीयचतुर्थयोः), रेफेण अध उपरि उभयत्र वा यस्य कस्यचित्, तुल्ययोः (तेन तस्यैव) सम्बन्धः, टवर्गो (अर्थात्) णकारवर्ज्जः, शकारषकारौ ; दीर्घसमासः ; विकटा सङ्घटना ओजसः (४४)। उदाहरणम्,-मूर्द्ध्नामुद्वृत्तकृत्तेत्यादि [११२ पृ०]।

---

(४३) पदान्तरयोगः सन्धिः, 'यथा प्रतिमं तदङ्गम्'-इति पदयोः सन्धौ 'न्त'-इति मधुरवर्णोत्पत्तिरिति महेश्वरः। वस्तुतः सन्धिं विनापि पौर्व्वापर्य्यविशेषेणापि रचना मधुरा भवतीति पदान्तरयोगः पदान्तरेण सम्बन्ध इत्यर्थः।

(४४) व्यञ्जिका इति शेषः। द्वितीयचतुर्थयोर्व्विजातीययोरपि सम्बन्धः, (तेन तस्येत्यस्य प्रथमेन प्रथमस्य द्वितीयेन द्वितीयस्येत्याद्यर्थं कल्पयित्वा) विजातीयेन प्रथमादिना विजातीयप्रथमादेरपि योगोऽस्य व्यञ्जकः, णकारस्य लघोरेव वर्ज्जनमिति महेश्वरः। दीर्घसमासोऽपि विकट एवास्य व्यञ्जक इत्युद्योतकृत्।

श्रुतिमात्रेण शब्दात्तु येनार्थप्रत्ययो भवेत् (४५) ।
साधारणः समग्राणां, स प्रसादो गुणो मतः ॥११॥

समग्राणां रसानां सङ्घटनानाञ्च । उदाहरणम्,-

परिम्लानं पीनस्तनजघनसङ्गादुभयतः,
तनोर्मध्यस्यान्तःपरिमिलनमप्राप्य हरितम् ।
इदं व्यस्तन्यासं श्लथभुजलताक्षेपवलनैः,
कृशाङ्ग्याः सन्तापं वदति बिसिनीपत्रशयनम् ॥

यद्यपि गुणपरतन्त्राः सङ्घटनादयः, तथापि,

वक्तृवाच्यप्रबन्धानामौचित्येन क्वचित् क्वचित् ।
रचना वृत्तिवर्णानामन्यथात्वमपीष्यते ॥१२॥

क्वचिद्वाच्यप्रबन्धानपेक्षया वक्त्रौचित्यादेव रचनादयः । यथा,-

मन्थायस्तार्णवाम्भःप्लुतिकुहरचलन्मन्दरध्वानधीरः,
कोणाघातेषु (४६) गर्जत्प्रलयघनघटान्योन्यसंघट्टचण्डः ।
कृष्णाक्रोधाग्रदूतः कुरुकुलनिधनोत्पातनिर्घातवातः,
केनास्मत् सिंहनादप्रतिरसितसखो दुन्दुभिस्ताडितोऽसौ ? ॥

अत्र हि न वाच्यं क्रोधादिव्यञ्जकम्(४७), अभिनेयार्थञ्च काव्य-

---

(४५) तथाच श्रुतिमात्रेणार्थबोधकाः सर्व्वे एव (सुकुमारा वा विकटा वा) वर्णादयः प्रसादगुणस्य व्यञ्जका इत्यर्थो लभ्यते ।

(४६) कोणः वादनदण्डः । केचित्तु,-

'ढक्काशतसहस्राणि भेरीशतशतानि च ।
एकदा यत्र वाद्यन्ते कोणाघातः स उच्यते' ॥

-इति पारिभाषिकेषु शब्देषु सत्स्वपीत्यर्थमाहुः ।

(४७) प्रश्नरूपत्वात् तस्येति शेषः । 'अभिनेयः' अभिनयबोधनीयः,

मिति तत्प्रतिकूला उद्धता रचनादयः, वक्ता चात्र भीमसेनः ।
क्वचिद्वक्तृप्रबन्धानपेक्षया वाच्यौचित्यादेव रचनादयः । यथा,-

प्रौढच्छेदानुरूपोच्छलनरयभवत्सैंहिकेयोपघात-
त्रासाकृष्टाश्वतिर्य्यग्वलितरविरथेनारुणेनेक्ष्यमाणम् ।
कुर्व्वत्काकुत्स्थवीर्य्यस्तुतिमिव मरुतां कन्धरारन्ध्रभाजाम्
भाङ्कारैर्भीममेतन्निपतति वियतः कुम्भकर्णोत्तमाङ्गम् ॥

क्वचिद्वक्तृवाच्यानपेक्षाः प्रबन्धोचिता एव ते, तथाहि, आख्यायिकायां शृङ्गारेऽपि न मसृणवर्णादयः, कथायां रौद्रेऽपि नात्यन्तमुद्धताः, नाटकादौ रौद्रेऽपि न दीर्घसमासादयः (४८) । एवमन्यदप्यौचित्यमनुसर्त्तव्यम् ॥

इति काव्यप्रकाशे गुणालङ्कारभेदनियतगुण-
निर्णयो नाम अष्टम उल्लासः ॥

---

'अर्थः' प्रतिपाद्यो यस्य तत् नाटकादीत्यर्थः । अभिनयस्यत्रे'हि झटिति अर्थप्रत्यायनमेवोचितं, दीर्घसमासादिना तु न तद्विलम्बः कार्य्य इति ।

(४८) आख्यायिकायां गद्यस्य प्राधान्यम् गद्ये च विकटवर्णस्यैव अभ्यर्हितत्वात् न मसृणवर्णादयः, किन्तु विप्रलम्भकरुणयोः तस्यामपि न दीर्घसमासादि, तयोरतिसौकुमार्य्यात् । कथायान्तु वर्णनीयस्य सुखप्रतिपत्तेरेवोद्देश्यत्वात् न उद्धता वर्णादयः । नाटकादौ विच्छेदेन अभिनयसौकर्य्यात् न दीर्घसमासादय इति प्रदीपः ।

## ॥ नवम उल्लासः ॥

गुणविवेचने कृतेऽलङ्काराः प्राप्तावसराः, इति संप्रति शब्दालङ्कारान् आह-, (१)

**यदुक्तमन्यथा वाक्यमन्यथाऽन्येन योज्यते (२) ।**
**श्लेषेण काक्वा वा, ज्ञेया सा वक्रोक्तिस्तथा द्विधा ॥१॥**

'तथा' इति श्लेषवक्रोक्तिः, काकुवक्रोक्तिश्च । तत्र पदभङ्गश्लेषेण यथा,-

नारीणामनुकूलमाचरसि चेज्जानासि, कश्चेतनो
वामानां प्रियमादधाति, हितकृन्नैवाबलानां भवान् ? ।
युक्तं किं हितकर्त्तनं ननु बलाभावप्रसिद्धात्मनः,
सामर्थ्यं भवतः पुरन्दरमतच्छेदं विधातुं कुतः (३) ॥

---

(१) वक्रोक्त्यर्थान्तरन्यासौ यमकं श्लेषचित्रके ।
पुनरुक्तवदाभासः शब्दालङ्कृतयस्तु षट् ॥

(२) एकेनान्याभिप्रायेणोक्तम् वाक्यम् अन्येन यदि अन्याभिप्रायकतया कल्प्यते, तदा वक्रोक्तिः । 'अन्येन' इति स्वयमन्यथाकरणरूपात् अपह्नुतेर्व्यवच्छेदः । अत्र च तत्तत्पदानां परिवृत्त्यसहत्वेन, शब्दस्यैव चमत्काराधायकत्वेन च शब्दालङ्कारत्वमस्य ।

(३) 'जानासि' अभिज्ञोऽसि । 'मतम्' इष्टम् । अत्र नारीणामिति पदं कामिनीपरतया वक्त्रा उक्तम्, प्रतिवक्त्रा तु, न अरीणामित्यर्थपरतया योजितम्, ततस्तेन शत्रुपरतयोक्तम् वामानामिति पदम् वक्त्रा नारीपरतया परिकल्प्य, हितकृदितिपदं, हितकारिपरतया अबलानामिति च नारीपरतया

अभङ्गश्लेषेण यथा,-

अहो ! केनेदृशी बुद्धिर्दारुणा तव निर्म्मिता ? ।
त्रिगुणा श्रूयते बुद्धिर्नतु दारुमयी क्वचित् (४) ॥

काक्वा यथा,-

गुरुजनपरतन्त्रतया दूरतरं देशमुद्यतो गन्तुम् ।
अलिकुलकोकिलललिते नैष्यति सखि, सुरभिसमयेऽसौ (५) ॥

वर्णसाम्यमनुप्रासः,

स्वरवैसादृश्येऽपि व्यञ्जनसदृशत्वं वर्णसाम्यम् । रसाद्यनुगतः प्रकृष्टो न्यासोऽनुप्रासः (६) ।

---

उक्तम् । प्रतिवक्त्रा पुनः ते पदे यथाक्रमं स्थितच्छेत्तृपरतया दुर्ब्बलपरतया च व्याख्याय, दुर्ब्बलाभिप्रायेण 'बलाभावप्रसिद्धात्मनः' इति पदं प्रयुक्तं । वक्त्रा पुनः तत् पदं बलाहरनायक-(इन्द्र)-परतया योजितम् । अत्र, नारीणामित्यत्र अबलानामित्यत्र च सभङ्गः श्लेषः । यद्यपि अत्रैव वामानामित्यादिषु अभङ्गः श्लेषोऽपि सम्भवति, तथापि केवलाभङ्गश्लेषप्रदर्शनार्थमुत्तरोदाहरणम् ।

(४) त्रिगुणा सत्त्वरजस्तमोगुणात्मिका । अत्र 'दारुणा' क्रूरा, काष्ठेन वा-इत्युभयार्थपक्षेऽपि दारुणेति पदस्य न भङ्गः ।

(५) अत्र नैष्यतीति निषेधाभिप्रायेण, नायिकयोक्तम्, सख्या तु, काक्वा न एष्यति, अपि तु एष्यत्येवेत्यर्थकतया योज्यते इति प्रदीपः ।

(६) 'रसाद्यनुगतः' प्रकृतरसव्यञ्जकवर्णसम्बन्धित्वेन प्रकृतरसानुगुणः । 'प्रकृष्टः' अनतिव्यवहिततया चमत्कृत्याधायकः 'न्यासः' विन्यासः, निवेशनं आवृत्तिरिति । तथा चानतिव्यवहितत्वेन चमत्कृत्याधायिका प्रकृतरसव्यञ्जकसदृशवर्णावृत्तिरनुप्रासः इति फलितम् । अतएव वर्णसाम्यपदस्य तात्पर्य्यम् । पदस्य साम्ये तदन्तर्गतवर्णस्य साम्यमप्यस्तमिति लाटानुप्राससंग्रहः । प्रकृतरसप्रतिकूलेऽपि अनुप्रासव्यवहारो भाक्त इति ।

**छेकवृत्तिगतो द्विधा (७)।**

छेकाः विदग्धाः। वृत्तिर्नियतवर्णगतो रसविषयो व्यापारः। 'गतः' इति छेकानुप्रासो वृत्त्यनुप्रासश्च।

किं तयोः स्वरूपम्? इत्याह,-

**सोऽनेकस्य सकृत्पूर्व्वः,**

अनेकस्य (अर्थात्) व्यञ्जनस्य 'सकृद्' (एकवारं) सादृश्यं छेकानुप्रासः। उदाहरणम्,-

ततोऽरुणपरिस्पन्दमन्दीकृतवपुः शशी।
दध्रे कामपरिक्षामकामिनीगण्डपाण्डुताम् (८)॥

**एकस्याप्यसकृत्परः॥ २॥**

एकस्य, अपिशब्दादनेकस्य व्यञ्जनस्य द्विर्बहुकृत्वो वा सादृश्यम् वृत्त्यनुप्रासः (९)। तत्र (१०),

---

(७) अनुप्रासो हि द्विविधः वर्णानुप्रासः शब्दानुप्रासश्चेति, निरर्थकवर्णानामनुप्रासः प्रथमः, द्वितीयस्तु पदात्मकानां सार्थकवर्णानामनुप्रासस्वरूपः। तत्र प्रथमं वर्णानुप्रासं विभजति छेक इति। छेकगतः छेकानां प्रचुरप्रयोज्यः, वृत्तिगतः वृत्त्यन्तर्निविष्टः। वृत्तिश्च माधुर्यादिव्यञ्जकसुकुमारादिवर्णगतत्वेन मधुरादिरसोपकारकः शब्दस्य सङ्घटनाख्यः कश्चन व्यापारविशेषः।

(८) 'स्पन्द' 'मन्द' इत्यत्र, 'गण्ड' 'पाण्डु'-इत्यत्र चानेकव्यञ्जनस्य साम्यम्

(९) "वस्तुतस्तु छेकानुप्रासभिन्नं लक्षणम्, अन्यथा एकस्य सकृदावृत्तेरसंग्रहापत्तिः, एवञ्च एकस्यैव सकृदसकृत्, अनेकस्य तु असकृत् साम्यम् वृत्त्यनुप्रास इति पर्यवसन्नम्", इति प्रदीपः। एकस्य सकृत्साम्यं न चमत्कारजनकमिति नास्यानुप्रासत्वं अन्यथासदनुगतमिति यथाश्रुतमेव सम्यगिति तु वयं।

(१०) वृत्त्यनुप्रासघटकतयोक्तां वृत्तिं प्रपञ्चात् विभजति तत्रेति।

माधुर्यव्यञ्जकैर्वर्णैरुपनागरिकोच्यते ।
ओजःप्रकाशकैस्तैस्तु परुषा,

उभयत्रापि प्रागुदाहृतम् [२२२ पृ० । २ एवं ११ प०] ।

कोमला परैः ॥ ३ ॥

'परैः' शेषैः । तामेव केचित् ग्राम्येति वदन्ति । उदाहरणम्,-
अपसारय घनसारं, कुरु हारं दूर एव, किं कमलैः ।
अलमलमालि, मृणालैरिति वदति दिवानिशं बाला (११) ॥

केषाञ्चिदेता वैदर्भीप्रमुखा रीतयो मताः ।

'एताः' तिस्रो वृत्तयः, वामनादीनां मते वैदर्भीगौडीपाञ्चाल्याख्या रीतयो मताः ।

शाब्दस्तु लाटानुप्रासो भेदे तात्पर्यमात्रतः (१२)॥४॥

---

(११) अत्र न केऽपि वर्णा माधुर्यव्यञ्जकाः, येऽपि च त्रयो अनुस्वाराः, ते तु गुरुस्वरेण व्यवहिता न माधुर्यं व्यञ्जयितुमीशाः ।

(१२) शाब्दः शब्दैकवर्णगतः । उद्देश्यविधेयभावादिः, कर्तृत्वकर्मत्वादिरूपश्च पदार्थयोः सम्बन्धोऽन्वयः, स एवात्र तात्पर्यशब्देनाभिहितः ; तन्मात्रस्यैव भेदे (न तु स्वरूपतोऽर्थतः क्रमतश्च भेदेऽपि) । अत्रापि वर्णसाम्यमित्यनुषज्यते । तेन विभिन्नान्वयपराणां समानानुपूर्वीकाणां तुल्यस्वरूपाणामेकार्थानां वर्णानां (वर्णयोर्वा) अनतिव्यवधानेनावृत्तिः शाब्दानुप्रासः, स च 'लाटानुप्रासः' इत्युच्यते । शाब्दानुप्रासस्तु प्रथमतो द्विविधः, पदगतो नामगतश्चेति । तत्राद्योऽपि एकानेकपदगतत्वेन द्विविधः, अन्त्यश्च असमासगतत्वेन, एकसमासगतत्वेन विभिन्नसमासगतत्वेन च, त्रिविधः इति मिलित्वा शाब्दानुप्रासः पञ्चविधः । एतदेव 'पदानां सः' इत्यादिना 'तदेवं पञ्चधा मतः' इत्यन्तेन दर्शयिष्यते ।

शब्दगतोऽनुप्रासः, शब्दार्थयोरभेदेऽप्यन्वयमात्रभेदात्, लाटजनवल्लभत्वाच्च लाटानुप्रासः । एष पदानुप्रास इत्यन्ये ।

**पदानां सः,**

'सः'-इति लाटानुप्रासः । उदाहरणम्,-

यस्य न सविधे दयिता, दवदहनस्तुहिनदीधितिस्तस्य ।
यस्य च सविधे दयिता, दवदहनस्तुहिनदीधितिस्तस्य (१३) ॥

**पदस्यापि,**

अपिशब्देन 'सः' इति समुच्चीयते । उदाहरणम्,-

वदनं वरवर्णिन्यास्तस्याः सत्यं सुधाकरः ।
सुधाकरः क्व नु पुनः कलङ्कविकलो भवेत् ॥

**वृत्तावन्यत्र, तत्र वा ।**

**नाम्नः स वृत्त्यवृत्त्योश्च,**

एकस्मिन् समासे, भिन्ने वा समासे, समासासमासयोर्वा 'नाम्नः' प्रातिपदिकस्य, (न तु पदस्य), सारूप्यम् (१४) ।

---

(१३) अत्र 'सविधे दयिता' इत्यादीनां बहूनां पदानां तात्पर्यमात्रभेदेनावृत्तिः । पूर्वार्द्धे दवदहनस्यैव, उत्तरार्द्धे तुहिनदीधितेरेव च विधेयतया आरोपणं, न तु लक्षणया यथाक्रमं तापकरत्वस्य शीतलत्वस्य च विधेयत्वं विवक्षितं, तथात्वे भिन्नार्थकत्वापत्त्या लाटानुप्रासो न स्यात् । लाटानुप्रासादौ उद्देश्यविधेययोर्वैपरीत्येन निर्देशो न दोषाय ।

(१४) "अत्र 'समासे' इत्युपलक्षणम्, पञ्चविधवृत्तेरपि ग्रहणं । तेन, "हंसायते चारुगतेन कान्ता, कान्तायते स्पर्शसुखेन वायुः"-इत्यादि संग्रहः' इति ।" इति, एवं "नाम्नः-इत्युपलक्षणम्,
जित्वा विश्वं भवानत्र विहरत्यवरोधनैः ।
विहरत्यप्सरोभिस्ते रिपुवर्गो दिवं गतः ॥ इति केचित्" इति च उद्योतकृत् ।

उदाहरणम्,-

सितकरकररुचिरविभा विभाकराकार, धरणिधर, कीर्त्तिः ।
पौरुषकमला कमला सापि तवैवास्ति नान्यस्य ॥

**तदेवं पञ्चधा मतः ॥ ५ ॥**

**अर्थे सत्यर्थभिन्नानां वर्णानां सा पुनःश्रुतिः ।**
**यमकम् (१५);**

'समर-समरसोऽयम्'-इत्यादावेकेषामर्थवत्त्वे अन्येषामनर्थकत्वे भिन्नार्थानामिति न युज्यते वक्तुम्,-इति 'अर्थे सति' इत्युक्तम् । 'सा'-इति सरो रस इत्यादिवैलक्षण्येन तेनैव क्रमेण स्थिता ।

**पादतद्भागवृत्ति तद्यात्यनेकताम् ॥ ६ ॥**

प्रथमो द्वितीयादौ [३] द्वितीयस्तृतीयादौ [२], तृतीयश्चतुर्थे [१], प्रथमस्त्रिषु [१], अपीति (१६) सप्त । प्रथमो

---

(१५) 'अर्थभिन्नानां' विभिन्नार्थानां (तेन लाटानुप्रासाद्भेदः) । सा तत्क्रमिका । एकेन क्रमेण असमानार्थानां समानवर्णानां (वर्णयोर्वा) आवृत्तिः यमकमिति फलितोऽर्थः ।

'यमकादौ भवेदैक्यम् डलयोः रलयोः बयोः ।
बवयोर्वनयोश्चान्ते सविसर्गाविसर्गयोः ॥
सबिन्दुकाबिन्दुकयोः .........' इत्युद्योतकृत् ।

(१६) 'द्वितीयादौ' द्वितीये, तृतीये, चतुर्थे वा । 'तृतीयादौ' तृतीये चतुर्थे वा (न तु प्रथमेऽपि, तस्य 'प्रथमो द्वितीयादौ'-इत्यनेन गतार्थत्वात्) । त्रिष्वपि द्वितीये तृतीये चतुर्थेऽपि ।

'यमकन्तु विधातव्यं न कदाचिदपि त्रिपात्' इति नियमात् एकस्य अपरपादद्वयगतत्वेन भेदो न कृतः इति एकपादस्यावृत्तिरूपमसंकीर्णं पादगतं यमकं सप्तविधमेव । अनेकपादावृत्तिरूपं संकीर्णन्तु पादगतं अनन्तरोक्तम् चतुर्विधम् ।

द्वितीये, तृतीयचतुर्थे ; प्रथमचतुर्थे, द्वितीयतृतीये इति द्वे । तदेवं पादजं नवभेदम् (१७) । अर्द्धावृत्तिः, श्लोकावृत्तिश्चेति द्वे (१८) । द्विधा विभक्ते पादे प्रथमपादादिभागः पूर्ववत्(१९)द्वितीयादिपादादिभागेषु, अन्तभागोऽन्तभागेष्विति विंशतिर्भेदाः, (श्लोकान्तरे हि नासौ भागावृत्तिः (२०)। त्रिखण्डे त्रिंशत्, चतुःखण्डे चत्वारिंशत्(२१) । प्रथमपादादिगतान्त्यार्द्धादिभागो द्वितीयपादादिगते आद्यार्द्धादिभागे 'यम्यते'-इत्याद्यन्वर्थतानुसरणेनानेकभेदम्(२२),-अन्तादिकम्

---

(१७) यथाक्रमं पादद्वयस्यावृत्तिः, पृथक्तया च पादद्वयस्यावृत्तिरिति संकीर्णमपि पादगतं यमकं द्विविधमेव । तत्र यथाक्रमं पादद्वयस्य आवृत्तौ अर्द्धावृत्तिः श्लोकावृत्तिर्वा भवतीति विशेषनामानौ तौ भेदावपहाय नवभेदमित्युक्तम् ।

(१८) एतेषां विशेषनामानि प्रदीपादवगन्तव्यानि ।

(१९) पूर्ववत् पादावृत्तिरीत्या । प्रथमपादस्य आदिभागोऽन्तभागश्च यथाक्रमं द्वितीयादिपादानां आदौ अन्ते च भागे आवर्त्तते, एवं द्वितीयस्य आद्यन्तभागौ तृतीयादीनामाद्यान्तभागयोरपीति बोध्यम् । इदञ्च आद्यभागोऽपरस्याद्य एव भागेऽन्त्यभागोऽन्त्य एव भागे इति सजातीयभागावृत्तिरूपम् बोध्यम् ।

(२०) तेन न प्रत्येकमेकादशविधत्वेन द्वाविंशत्यापत्तिः ।

"(२१) प्रतिभागमावृत्तेर्दशविधत्वात् ।

(२२) विजातीयभागावृत्तिमाह प्रथमेति । 'अन्वर्थता' योगार्थता । प्रथमादिपादानामन्त्यादिभागयोर्द्वितीयादिपादानामाद्यावन्ते च यथाक्रमआवृत्तौ अन्तादिकम् आद्यन्तिकञ्च यमकम्, एतयोरेकत्र समावेशे समुद्गः । एवं मध्यादिकाद्यपि ज्ञेयम् । आद्यादिकादि तु न विजातीयमिति न गोक्तम् ।

आद्यन्तिकम्, तत्समुच्चयः ; मध्यादिकम्, आदिमध्यम्, अन्तमध्यं, मध्यान्तिकं, तेषां समुच्चयः । तथा तस्मिन्नेव पादे आद्यादिभागानां मध्यादिभागेषु, अनियते च स्थाने आवृत्तिरिति प्रभूततमभेदम् । तदेतत्काव्यान्तर्गडुभूतम् (२३),- इति नास्य भेदलक्षणं कृतम् । दिङ्मात्रमुदाह्रियते,-

सन्नारीभरणोमायमाराध्य विधुशेखरम् ।
सन्नारीभ-रणोऽमायस्ततस्त्वं पृथिवीं जय (२४) ॥ [प्र० तृ०]

विनाऽयमेनो नयताऽसु-खादिना
विना यमेनोनयता सुखादिना ।
महाजनोऽदीयत मानसादरम्
महाजनोदी यतमानसादरम्(२५)॥ [प्र० द्वि० एवं तृ० च०]

---

(२३) 'अन्तर्गडुभूतं' रसास्वादविघ्नकतया स्फोटपिण्डभूतमिव ।

(२४) 'सन्नारीभरणोमायं'-सतीनां नारीणां भरणमाभरणस्वरूपाम् उमां याति शरीरार्द्धरूपेण प्राप्नोति तमर्द्धनारीश्वररूपम् । 'आराध्य' आराधय । 'ततः' आराधनात्, 'सन्नारीभरणः' सन्ना अवसन्ना अरीणाम् इभा यस्य, तादृशो रणो यस्य सः सन् । 'अमायः' अकपटः ।

(२५) विना अयम् एनः नयता असु-खादिना विना यमेन ऊनयता सुखादिना । महाजनः अदीयत मानसात् अरम्, महाजनोदी यतमान-सादरम् इति पदपाठः । 'अयं' 'विना' (पक्षिस्वरूपः पुरुषः) 'यमेन' 'यतमान-सादरं' (यतमानानां रक्षितृस्वयुक्तानां सादं विषादं राति ददातीति तम्) यथा स्यात् तथा 'अरं' (शीघ्रं) 'मानसात्' (मानसं चित्तमेव मानसं मानससरस्तस्मात्) 'अदीयत' (अपलायत) । अयं विष्णुः १-'महाजनः' (महात्मा), 'महाज-नोदी' च (महत् अजवत् अक्ष्णि विपत्ति ते दुर्जनास्तन्नोदी तदपसारकः) । यमेन विधुतेन १-'एनो' 'विना' (अपराधरहिते) 'नयता' (अपरं प्रापयता) 'असु-खादिना' (प्राणभक्षकेण), 'सुखादिना' 'ऊनयता' च (हीनं कुर्वता च)।

स त्वारम्भरतोऽवश्यमवलम् विततारवम् ।
सर्व्वदा रणमानैषीदवानलसमस्थितः ॥
सत्वारम्भरतोऽवश्यमवलम्बित-तारवम् ।
सर्व्वदारण-मानैषी दवानलसमस्थितः (२६) ॥ [श्लो०आ०]
अनन्तमहिमव्याप्तविश्वाम् वेधा न वेद याम् ।
या च मातेव भजते प्रणते मानवे दयाम् ॥ [भा०आ०।एवंपरत्र]
यदानतोऽयदानतो नयात्ययं न यात्ययम् ।
शिवे हितां शिवेहितां स्मरामितां स्मरामि ताम् (२७) ॥ [युग्मम्]

---

(२६) स तु आरम् भरतः अ-वश्यम् अवलं विततारवम् । सर्व्वदा रणम् आनैषीत् अयान् अलसम् अ-स्थितः । सत्वारम्भरतः अवश्यम् अवलम्बिततारवम् । सर्व्वदारण-मानैषी दवानलसमस्थितः इति पदपाठः । 'स तु' 'आरं' (अरिसमूहम्) 'अवलं' (सैन्यशून्य'), 'विततारवं' (विस्तृतार्त्तनादम्), 'अवलम्बित-तारवं' च (अवलम्बितं तारवं तरुसमूहो वनं येन तत्) यथा स्यात् तथा 'सर्व्वदा' 'रणं' 'आनैषीत्' (प्रापयामास) । आरं कीदृशम् ?-'भरतः' (अतिशयेन) 'अ-वश्यम्' अवशीभूतं अनायत्तं । स किम्भूतः ?-'अलसं' यथा तथा, 'अ-यान्' (अ-गच्छन्, शीघ्रगामी), 'अ-स्थितः' (ए विष्णौ स्थितः, विष्णुपरायणः), 'अवश्यं' (नियतम्) 'सत्वारम्भरतः' (सात्विककर्म्मानुष्ठान-निरतः), 'सर्व्वदारण-मानैषी' (सकलजनहृदयविदारकमानेच्छुः), 'दवानलसमस्थितः' (दावाग्नितुल्यः) चेत्यर्थः ।

(२७) यस्यामानतोऽयं जनः 'नयात्ययं' (नीतिविश्लेषं) 'न याति', कुतः ?-'अयदानतः' (अर्थात् तयैवास्य शुभावहविधिदानात्) । 'शिवे' (मङ्गले) 'हिताम्' (अनुकूलाम्), 'शिवेन' (महादेवेन) 'ईहिताम्' (प्रार्थनीयाम्), 'स्मरेण' (कन्दर्पेण) 'अमिताम्' मात्सर्य्यमनीप्सिताम् अनभिभूताम् वा । अत्र एकस्मिन्नेव पादे आद्यन्तिकं भागावृत्तियमकम् ।

सर स्वतिप्रसादं मे, स्थितिं चित्तसरस्वति ।
सरस्वति, कुरु क्षेत्र कुरुक्षेत्र-सरस्वति, (२८) ॥
ससार साकं दर्पेण कन्दर्पेण स सारसा ।
शरन्नवाना बिभ्राणा नाविभ्राणा शरन्नवा (२९) ॥

मधुपराजि-पराजित-मानिनी-
जनमनःसुमनः सुरभिश्रियम् ।
अभृत वारित-वारिजविप्लवं
स्फुटित-ताम्र-तताम्रवनं जगत् (३०) ॥

एवं वैचित्र्यसहस्रैः स्थितमन्यदुन्नेयम् ।

वाच्यभेदेन भिन्ना यत् युगपद्भाषणस्पृशः ।

---

(२८) हे 'सरस्वति,' 'मे' (मम) 'स्वतिप्रसादम्'(शोभनातिप्रसन्नताम्) 'सर'(प्राप्नुहि)। 'क्षेत्रं'(शरीरमेव)'कुरुक्षेत्रं', तत्र हे सरस्वत्याख्यनदी-रूपे, 'चित्तसरस्वति' (चित्तसमुद्रे), नद्याः समुद्रस्थितेरौचित्येन मम चित्तसमुद्रे 'स्थितिं' कुरु-इत्यर्थः। अत्र प्रथमार्द्धे आद्यन्तिकमेव केवलं, उत्तरार्द्धे तु आद्यन्तिकम् अन्तादिकञ्चोभयमिति तेषां समुच्चयः।

(२९) 'नवा' 'शरत्' कन्दर्परूपेण 'दर्पेण' 'साकं' 'ससार'। किम्भूता?- 'स-सारसा' (सारसेन पक्षिविशेषेण पद्मेन वा सहिता), 'शरं' (काण्डं) 'बिभ्राणा'(पोषयन्ती, परिपाकं प्रापयन्तीत्यर्थः), 'नवाना'(नवम् अनः शकटं कर्द्दमाभावेन पथि यस्यां सा), 'न अविभ्राणा'(वीनां पक्षिणां भ्राणः शब्दः, न तेन रहिता) च। अत्र द्वयोरप्यर्द्धयोराद्यन्तिकम्, अन्तादिकञ्चोभयमिति तत्समुच्चयः।

(३०) 'सुमनः' पुष्पं 'सुरभिः' वसन्तकालः। 'ताम्रं' ताम्रवत् मलिन-रक्तवर्णं। 'ततं' विस्तृतम्। अत्रानियतभागे मध्यमध्यम-यमकसमुच्चयः।

श्लिष्यन्ति शब्दाः, श्लेषोऽसावक्षरादिभिरष्टधा॥७॥

'अर्थभेदेन शब्दभेदः'(२१)-इति दर्शने, 'काव्यमार्गे स्वरो न गण्यते' इति च नये वाच्यभेदेन भिन्ना अपि शब्दा यत् युगपदुच्चारणेन श्लिष्यन्ति (भिन्नं स्वरूपमपह्नुवते), स श्लेषः। स च, वर्ण-पद-लिङ्ग-भाषा-प्रकृति-प्रत्यय-विभक्ति-वचनानां भेदादष्टधा (२२)। क्रमेणोदाहरणम्,-

अलङ्कारः शङ्काकर-नरकपालं परिजनो
विशीर्णाङ्गो भृङ्गी, वसु च वृष एको बहुवयाः।

---

(२१) 'सकृदुच्चरितः शब्दः सकृदर्थं गमयति' इति नियमेन एकेन शब्देनार्थद्वयप्रतीत्यसम्भवात् अर्थद्वयप्रतीत्यर्थं (श्लेषस्थले) एकाकारौ द्वौ शब्दौ स्तः-इत्यवश्यमङ्गीकार्य्यम्, तौ च एकेन प्रयत्नेनैकदोच्चार्य्यतया पृथक्तया नानुभूयेते, तथाच एकप्रयत्नोच्चार्य्यतया भेदेन अननुभूयमानत्वात् यः श्लेष इव (मिश्रणमिव), स श्लेषः-इति फलितम्। विभिन्नसमासादीनामुदात्तादिस्वर-भेदनियमात् तदनुसारेण उच्चारणे श्लेषाभावप्रसङ्गस्तु, 'काव्ये उदात्तादिस्वरविशेषमनादृत्य सर्व्वेष्वेव समासादिष्वेकविधमेवोच्चारणम्' इत्यङ्गीकारेण निरस्तः। "यत्रानेकस्मिन् अर्थे प्रकरणादिकं युगपदवतरति, तत्र श्लेषः; ...... यत्र तु एकत्रैव, तत्र व्यञ्जना" इति उद्योतकृत्। यत्र एकस्मिन्नपि अर्थे न प्रकरणादिनियमस्तत्रापि श्लेषः इति तु वयम्। अत एव "यत्र प्रकरणादिनियमाभावात् द्वावप्यर्थौ वाच्यौ" इत्यनुपदं ग्रन्थकृदाह च।

(२२) विजातीयत्वेऽपि विभिन्नस्वरूपापह्नवो हि चमत्कारातिशयं पुष्णातीति वर्णादीनां मध्ये यस्य वैजात्येऽपि (विभक्तिविशेषयोग-समासादिभिरैकरूप्येण) श्लिष्टत्वम्, तत्र तच्छ्लेषनाम्नैव व्यपदेशः। यथोदाहरणे विधुविधिशब्दयोः उकारेकारवर्णयोः विजातीययोरपि (सप्तमीविभक्तियोगेन औकारत्वापन्नतयैकरूप्यात्) श्लेषः, स एव चमत्कारातिशयजनकतया व्यपदेश्यः। एवं परत्रापि।

अवस्थेयं स्थाणोरपि भवति सर्वामरगुरोर्,
विधौ वक्रे मूर्ध्नि स्थितवति वयं के पुनरमी ॥ [व०]

पृथुकार्त्तस्वरपात्रं भूषितनिःशेषपरिजनं देव ।
विलसत्करेणुगहनं संप्रति सममावयोः सदनम् ॥ [प०]

भक्तिप्रह्वविलोकनप्रणयिनी नीलोत्पलस्पर्द्धिनी
ध्यानालम्बनतां समाधिनिरतैर्नीते हितप्राप्तये ।
लावण्यैकमहानिधी-रसिकतां लक्ष्मीदृशोस्तन्वती
युष्माकं कुरुतां भवार्त्तिशमनं नेत्रे तनुर्वा हरेः (३१) ॥ [लि०]

एष वचनश्लेषोऽपि ।

---

प्रकृत्यादिघटकानां एकस्य वर्णस्य विजातीयत्वे वर्णश्लेषः, प्रकृत्यादिस्वरूपस्य समुदायस्य तथात्वे प्रकृत्यादिश्लेषः । विभक्त्यन्तसमुदायस्य विभिन्नस्वरूपत्वे पदश्लेषः, तदन्तर्गतायाः केवलायाः प्रकृतेः प्रत्ययस्य वा तथात्वे तु यथायथं प्रकृत्यादिश्लेषः । विभक्तिर्द्विविधा सुप्तिङ्प्रत्ययभेदात्, एवञ्च सामान्य-विशेषन्यायेन विभक्तिस्वरूपयोः सुप्तिङ्प्रत्यययोः श्लिष्टत्वे विभक्तिश्लेषः, तदन्यत्र प्रत्ययश्लेषः इति विशेषः ।

(३१) भक्तिप्रह्वः भक्तिनम्रः, स च नेत्रपक्षे विलोकनस्य कर्म्म, तनुपक्षे कर्त्ता । ध्यानालम्बनतां ध्यानविषयतां, नेत्रपक्षे हितप्राप्तये नीते (सर्व्वा-ङ्गस्य ध्येयत्वेन नेत्रयोरपि ध्येयत्वादिति महेश्वरः । 'नेत्रमवलम्ब्य ध्यानं परस्परावलोकनप्रतिनिधितया तारामैत्रकापरनाम-चक्षूरागजनकमिति नेत्रमपि स्वत एव ध्येयमिति तु वयं ). । तनुपक्षे ईप्सितप्राप्तये नीता । एवं तनुपक्षे 'महानिधी' इत्यत्र 'ढ्रलोपे पूर्व्वस्य दीर्घोऽणः' [६।३।१११ पा०] इति सूत्रेण रकारे परे दीर्घः इति विशेषः । अत्र 'प्रणयिनी'-इत्यादिषु स्त्रीनपुंसकलिङ्गयोर्द्विवचनयोश्च श्लेषः, एवञ्च तयोरत्र सङ्करः । महानिधी-इत्यत्र प्रथमैकवचनद्विवचनयोः । कुरुतामित्यत्र आत्मनेपदैक-वचन-परस्मैपदद्विवचनयोश्च विकृतवेषरहितयोः श्लेषः । एवं 'हरिस्तन्नाम पावतु' इत्यत्र वचनश्लेषनिरपेक्षयोर्लिङ्गश्लेष इति अनयो पृथगुक्तिः ।

महदे सुरसन्धम्मे तमव समासङ्गमागमाहरणे ।
हर बहुसरणं तं चित्तमोहमवसर उमे सहसा (३४) ॥[भा०]

अयं सर्व्वाणि शास्त्राणि हृदि ज्ञेषु च वक्ष्यति ।
सामर्थ्यकृदमित्राणां मित्राणाञ्च नृपात्मजः (३५) ॥ [प्रकृ०]

रजनिरमणमौलेः पादपद्मावलोक-
क्षणसमयपराप्तापूर्व्वसम्पत्सहस्रम् ।
प्रमथनिवहमध्ये जातुचित् त्वत्प्रसादात्
अहमुचितरुचिः स्यान्नन्दिता सा तथा मे ( ३६ ) ॥ [प्रत्य०]

---

(३४) अत्र 'संस्कृतप्राकृतयोः श्लेषः' इति प्रदीपादयः, 'संस्कृत-महाराष्ट्रयोः' इति तु दर्पणादयः । वयन्तु प्राकृतमहाराष्ट्रभाषा-लक्षणानामनुसरणानुसरणादर्शनादुदासीना एवास्म । तत्र संस्कृतपक्षे महदे, सुर-सन्ध' मे तम् अव समासङ्गम् आगमाहरणे । हर बहु-सरणम् तम् चित्तमोहं अवसरे उमे सहसा इति च्छेदः । 'महः' उत्सवः । 'सुरसन्धं' सुरैः सन्धा मिलनं यस्मात् तम्, सुराणां सन्धा सन्धानं यत्र तत्, सुराणामप्यभिलषणीयमिति वा । 'अव' रक्ष । 'आगमाहरणे' विद्योपार्ज्जने । 'बहु' अनेकं वारंवारं 'सरणं' संसारो यस्मात् तं ।

पक्षान्तरे, मह देहु रसं धम्मे तमवसम् आसं गमागमा हर णे । हरवहु सरणं तं चित्तमोहम् अवसरउ मे सहसा इति च्छेदः । मम देहि रसम् धर्म्मे तमोवशामाशाम् गमागमात् हर नः । हरवधु, शरणं त्वं चित्तमोहोऽपसरतु मे सहसा इति स० । रसं प्रीतिं । गमा-गमात् संसारात् । अत्र सहसेति पदादन्यत्र सर्व्वत्रैव भाषाश्लेषः ।

(३५) 'वक्ष्यति' धारयिष्यति कथयिष्यति च । 'सामर्थ्यकृत्' सामर्थ्यच्छेत्ता सामर्थ्यकारकश्च यथाक्रममर्थः । अत्र वहिवच्योः, कृन्ततिकरोत्योश्च प्रकृत्योरेव विभिन्नस्वरूपता, न तु प्रत्ययस्यापीति प्रकृतिश्लेषः ।

(३६) क्षणः उत्सवः । सहस्रमित्यन्तं पदं क्रियाविशेषणम् । अत्र 'नन्दिता'(आनन्दकः) स्याम्, तथा 'नन्दिता' (नन्दिनामकगणाधिपत्व

सर्व्वस्वं हर सर्व्वस्य, त्वं भवच्छेदतत्परः ।
नयोपकारसांमुख्यमायासि तनुवर्त्तनम् (३७) ॥ [वि०]

भेदाभावात्प्रकृत्यादेर्भेदोऽपि नवमो भवेत् (३८) ।

नवमोऽपीत्यपिर्भिन्नक्रमः । उदाहरणम्,-

योऽसकृत्परगोत्राणां पक्षच्छेदक्षणक्षमः ।
शतकोटिदतां बिभ्रद्विबुधेन्द्रः स राजते (३९) ॥

---

भावः नन्दिता) स्यादित्यर्थः । एवञ्च 'स्याम्' 'स्यात्' इति उत्तमपुरुष-प्रथमपुरुषयोः श्लेषः ( तस्य च पृथगनुक्तिः प्रत्ययश्लेषान्तर्भावः )। तथा नन्दितेत्यत्र तृच्‌क्तयोः कृत्तद्धितप्रत्यययोश्च श्लेषः ।

(३७) शिवं प्रति भक्तस्य, पुत्त्रं प्रति दरिद्रस्योक्तिरियम् । तत्र प्रथम-पक्षे, 'हर' शिव । 'भवच्छेदतत्परः' संसारनिवर्त्तकः । 'नयोपकार-सांमुख्यं' (नीतेरुपकारस्य च सांमुख्यमानुकूल्यं यस्मात् तत्) 'तनुवर्त्तनं' (शरीरावस्थितिम्) 'आयासि'(प्राप्नोषि) इति । पक्षान्तरे च 'हर' इति 'भव' इति च क्रियापदम् । 'उपकारसांमुख्यं' (प्रत्युपकारकरणं) 'नय' (अपनय), 'वर्त्तनम्' (जीविकाम्) 'आयासि' (परेषाम् आयास-[क्लेश]-दायकम्) 'तनु' (विस्तारय) इत्यर्थः । अत्र 'हर' इत्यादिपदम् एकत्र सुबन्तम्, अपरत्र तु तिङन्तमिति विभक्तिश्लेषः । एवम् 'आयासि' 'तनु'-इत्यादावपि बोध्यम् ।

(३८) पूर्व्वम् "वर्णादिभिरष्टधा" इत्युक्तेः, अत्र, भेदाभावा-दक्षरादेरिति पाठो भवितुमुचितः ।

(३९) 'क्षणक्षमः' क्षणमात्रेणैव समर्थः । राजपक्षे 'परगोत्राणां' शत्रु-कुलानां 'पक्षस्य' सहायस्य । 'शतकोटिदतां' शतकोटिमिता वस्तुसङ्ख्येन सङ्ख्येया दतां (द्यति खण्डयति यः तस्य भावस्तत्तां) छेदकतामिति, 'विबुधेन्द्रः' पण्डितराज इति, चार्थः । इन्द्रपक्षे 'परगोत्राणां' श्रेष्ठपर्व्वतानां 'पक्षस्य' पतत्रस्य इति 'विबुधेन्द्रः' देवराज इति चार्थः । राजपक्षे शतकोटिदता-

अत्र, प्रकरणादिनियमाभावात् द्वावप्यर्थौ वाच्यौ ।

'ननु (४०) स्वरितादिगुणभेदात् भिन्नप्रयत्नोच्चार्य्याणां,

---

मित्यस्य शतकोटेर्दातृतामित्यर्थकत्वेऽस्मिन् अंशे नायं प्रभेदः, किन्तु पूर्व्वोक्तावेव प्रत्ययश्लेषप्रकृतिश्लेषौ ।

(४०) श्लेषो हि प्रथमतो द्विविधः, सभङ्गोऽभङ्गश्चेति । तत्राद्यः पृथु-कार्त्तस्वर-पात्रमित्यादौ, अत्र हि पृथु कार्त्तस्वरस्य पात्रमिति, पृथुकानाम् आर्त्तस्वरस्य पात्रमिति च पदभङ्गः । अन्त्यस्तु योऽसकृत्पर-गोत्राणामित्यादौ, अत्र हि उभयस्मिन् पक्षे एकरूपाण्येव पदानि ।

तत्र सभङ्गश्लेषो विजातीयशब्दयोः श्लेषत्वेन शब्दश्लेषः, तत्र हि उदात्तानुदात्तस्वरितानामन्यतमः नैक एव स्वरः, किन्तु भिन्नौ द्वौ, न च, स्वरभेदे उच्चारणप्रयत्नस्य ऐक्यम्, अपि तु विभिन्नत्वमेव, विभिन्नप्रयत्नो-च्चारणयोग्यानाञ्च विजातीयत्वमेव नियतम्, तथापि 'काव्यमार्गे स्वरो न गण्यते'-इति नियममाश्रित्य स्वरविशेषमननुसन्धायोच्चारणात् श्लिष्टत्वं संभवतीति ।

अभङ्गस्तु अर्थश्लेष एव, तत्र स्वराभेदेन उच्चारणप्रयत्नस्यैक्यात् न शब्दानामपि वैजात्यम्, किन्त्वर्थयोरेव । तथा, श्लेषस्य उपमाद्यलङ्कारान्तर-संकीर्ण एव नियतः, उपमादयश्च श्लेषासंकीर्णा अपि सम्भवन्तीति सामान्यविशेषन्यायेन, श्लेषः उपमाद्यलङ्कारान्तरबाधक इति उपमाद्य-लङ्कारान्तराणां प्रतिभायाः (छायायाः आपाततः प्रतीतेः) उत्पत्तौ हेतुः, श्लेषेणैव हि अर्थद्वयस्योपस्थित्या उपमादयः प्रतीयन्ते, तथापि श्लेषो विशेषतया अलङ्कारपदवीमधिकुर्व्वन् उपमादीन् सम्भाव्यमानानपि प्रति-बध्नातीति तेषां प्रतिभानमात्रं न तु तेषां प्ररोहः-वस्तुतः स्थितिरिति । द्विविधोऽपि श्लेषोऽर्थसापेक्षतया वस्तुतोऽर्थालङ्कार एवेति कैश्चिदर्थालङ्कारमध्ये संगृहीतः इति अस्य शब्दालङ्कारत्वकथनं नोचितमिति पूर्व्वपक्षः ।

अस्य पूर्व्वपक्षस्य चायमाशयः,-अभङ्गश्लेषस्यार्थालङ्कारत्वमिष्टेऽपि, श्लेष-स्थले उपमादीनां प्रतिभानमेव भवति, श्लेष एव उपमादिबाधकतया अलङ्कारः इत्यपरः, उभयरूपश्चार्थालङ्कार इति चाभ्य इति ।

तद्भावादभिन्नप्रयत्नोच्चार्य्यत्वाच्च शब्दानां बन्धेऽलङ्कारान्तरप्रतिभोत्पत्तिहेतुः (४१) शब्दश्लेषोऽर्थश्लेषश्चेति द्विविधोऽपि अर्थालङ्कारमध्ये गणितोऽन्यैरिति कथमयं शब्दालङ्कारः ?। उच्यते,-इह (४२) दोषगुणालङ्काराणां शब्दार्थगतत्वेन यो

(४१) अत्र अलङ्कारान्तरस्य प्रतिभाया उत्पत्तिहेतुरिति षष्ठीसमासः कार्य्यः, 'एकप्रयत्नोच्चार्य्याणां तच्छायाञ्चैव बिभ्रताम् ।
स्वरितादिगुणैर्भिन्नैर्बन्धः श्लिष्ट इहोच्यते ।
अलङ्कारान्तरगतां प्रतीतिं जनयत् पदैः ।
द्विविधैरर्थशब्दोक्तिविशिष्टं तत्प्रतीयताम्'
-इत्युक्तेः, "श्लेषप्रतिभोत्पत्तिहेतुरलङ्कारान्तरमेव इति भिन्नविभक्तिकतया धन्यकृतैव (२।१।४ प०) निर्द्दिश्यमानत्वाच्च। एवञ्च महेश्वराद्याचार्य्यसम्मादितोऽपि बहुव्रीहिर्नासम्यं रोचते ।

(४२) तत्र प्रथमतः पूर्व्वपक्षप्रथमांशं दूषयितुं दोषगुणालङ्काराणां शब्दार्थगतत्वे नियामकं दर्शयति इहेति। अयमत्र सिद्धान्तः,-शब्दार्थयोर्मध्ये यस्मिन् ( शब्दे अर्थे वा ) सति ये दोषगुणालङ्काराः सन्ति, असति च न सन्ति, ते तदधीनस्वरूपतया तदीया इति व्यवस्थाप्यन्ते। एतन्मूलक एव 'शब्दपरिवृत्तिसहत्वासहत्वाभ्यां (तच्छब्दमनुपादाय तच्छब्दसमानार्थकशब्दान्तरोपादानं शब्दपरिवृत्तिः, तत्सहत्वासहत्वाभ्यां शब्दपरिवर्त्तनेऽपि सम्भवासम्भवाभ्याम्) शब्दार्थगतत्वव्यवस्थितिः' इति प्राचां प्रवादः। एवञ्च यथा, श्रुतिकटुत्वादयो दोषाः, ओजआद्यपरनामानो (वामनाद्युक्ताः)गाढ़त्वादयो गुणाः, अनुप्रासादयश्चालङ्काराः, तस्मिन् तस्मिन् शब्दे सति सन्ति, असति न सन्ति चेति शब्दगता इत्युच्यन्ते,यथा च, अपुष्टार्थत्वादयो दोषाः, ओजआद्यपरनामानो (वामनाद्युक्ताः)प्रौढ़िप्रभृतयो गुणाः, उपमादयश्चालङ्काराः सति तस्मिन् तस्मिन्नर्थे सन्ति, असति च न सन्ति च, तत्तच्छब्दपरिवर्त्तनमपि सहन्ते च इत्यर्थगता इति नियम्यन्ते, तथा उभयश्लेषोदाहरणतया निर्णीतेऽपि 'स्वयञ्च पल्लवा'-इत्यादौ, पराद्धं इव प्रथमार्द्धेऽपि तस्मिन् तस्मिन् शब्दे सति असति च श्लेषस्य सत्त्वमसत्त्वञ्चेति शब्दाधीनस्वरूपत्वाविशेषेण शब्दालङ्कारत्वमवश्यं वाच्यम् । न चैतावता अर्थश्लेषस्य निर्व्विषयत्वं यद्वाच्यम्, 'स्तोकेन'-इत्यादौ स्तोकादिपदपरिवर्त्तनेनाल्पादिपदोपादानेऽपि श्लेषस्यानुगततया तस्यैवार्थश्लेषविषयत्वादिति। अयञ्च सिद्धान्तः, 'इह'-इत्यादि-'अलङ्कारश्च'-इत्यन्त-प्रतीकप्रतिपाद्यः।

विभागः, स अन्वयव्यतिरेकाभ्यामेव व्यवतिष्ठते, तथाहि, कष्टत्वादि-गाढ़त्वाद्यनुप्रासादयः, व्यर्थत्वादि-प्रौढ्याद्युपमाद्य-सद्भावतदभावानुविधायित्वादेव शब्दार्थगतत्वेन व्यवस्थाप्यन्ते।

स्वयञ्च पल्लवाताम्रभास्वत्करविराजिता। ( इत्यभङ्गः )
प्रभातसन्ध्येवास्वापफललुब्धेहितप्रदा(४३)॥ (इति सभङ्गः)

-इति द्वावपि शब्दैकसमाश्रयाविति द्वयोरपि शब्दश्लेषत्वमुपपन्नं, न तु आद्यस्यार्थश्लेषत्वम्। अर्थश्लेषस्य तु स विषयः, यत्र शब्दपरिवर्त्तनेऽपि न श्लेषत्वखण्डना। यथा,-

स्तोकेनोन्नतिमायाति स्तोकेनायात्यधोगतिम्।
अहो सुसदृशी वृत्तिस्तुलाकोटेः खलस्य च॥

न च (४४), अयमुपमाप्रतिभोत्पत्तिहेतुः श्लेषः, अपि तु श्लेषप्रतिभोत्पत्तिहेतुरुपमा। तथाहि (४५) यथा,

'कमलमिव मुखं मनोज्ञमेतत्कचतितराम्'। इत्यादौ

---

(४३) पार्व्वतीपक्षे अस्वापं ( न सुखेन आप्यते इति व्युत्पत्त्या ) सुदुर्लभं यत् फलं मोक्षादि, तल्लुब्धानामीप्सितस्य वाञ्छितस्य प्रदात्रीत्यर्थः। प्रभातसन्ध्यापक्षे अस्वापम् निद्राभावः, अन्यत् समानम्।

(४४) पूर्व्वपक्षस्य द्वितीयमंशं निराकरोति न चेति। उपमाया या प्रतिभा छाया आपाततः प्रतीतिः, तस्या उत्पत्तिहेतुः सम्पादकः, एवमेवार्थः परत्रापि सर्व्वत्र। श्लेषवशात् आपाततः उपमादीनां 'प्रतीतावपि न तेषामलङ्कारत्वं किन्तु श्लेषस्यैवालङ्कारत्वमिति पूर्व्वपक्षस्य सारः। यथा चात्र उपमाया एवालङ्कारत्वं, श्लेषस्य प्रतिभानमात्रं तथा 'उपपत्तिपर्य्यालोचने तु'-इति ( २१०। २५० ) वक्ष्यमाणग्रन्थावसरे एव प्रतिपादयिष्यते। पल्लवाताम्रेत्यादिशब्दसाम्येनेयमुपमा।

(४५) ननु गुणक्रियासाम्यस्यैवोपमाप्रयोजकत्वेन शब्दसाम्यमकिञ्चित्कर-मिति अत्रोपमैव नास्तीत्याशङ्कां निराकरोति 'तथाहि' इत्यादिना, 'सर्व्वतः' इति-इत्यन्तेन। कचतितरां दीप्यतेतराम्। [illegible] सकला कला यस्य तत्, उरपक्षे [illegible] यत् तदिति भावः।

गुणसाम्ये, क्रियासाम्ये, उभयसाम्ये वा उपमा; तथा,

'सकलकलं पुरमेतज्जातं सम्प्रति सुधांशुबिम्बमिव' ।

-इत्यादिशब्दमात्रसाम्येऽपि सा युक्तैव (४६)। तथाहि उक्तम् रुद्रटेन,-'स्फुटमर्थालङ्कारावेतावुपमा-समुच्चयौ, किन्तु आश्रित्य शब्दमात्रं सामान्यम्, इहापि (४७) सम्भवतः' इति । न च (४८), 'कमलमिव मुखम्'-इत्यादिः साधारणधर्म-प्रयोगशून्य उपमाविषय इति वक्तुं युक्तम्, पूर्णोपमाया निर्विषयत्वापत्तेः (४९) ।

देव त्वमेव पातालमाशानां त्वं निबन्धनम् ।
त्वं चामरमरुद्भूमिरेको लोकत्रयात्मकः (५०) ॥

---

(४६) गुणक्रिययोरिव वाचकतासम्बन्धेन समानधर्मत्वस्य, समानशब्द-वाच्यत्वस्य वा साधारणधर्मत्वस्य सम्भवेन गुणक्रिययोरिव उपमाप्रयोजकत्वे बाधाभावादिति शेषः ।

(४७) इहापि शब्दालङ्कारमध्येऽपीत्युद्योतकृत् ।

(४८) ननु उपमाद्यसंकीर्णस्य श्लेषस्यासम्भवात्, उपमादीनाञ्च श्लेषं विनापि सम्भवात् सामान्यविशेषन्यायेन श्लेषस्यैवोपमादिबाधकत्वमिति, 'कमल-मिव मुखं मनोज्ञम्'-इत्यादावपि अर्थश्लेष एवालङ्कारः, मनोज्ञत्वस्य, उपमानो-पमेययोः कमलमुखयोर्भेदेन भिन्नतया श्लिष्टत्वात् । यत्र तु न साधारणधर्मो-पादानं, तत्र श्लेषाभावादुपमैवालङ्कार इत्याक्षेपं समाधत्ते नचेति ।

(४९) तस्याः साधारणधर्मोपादाननियतत्वादिति शेषः ।

(५०) उपमाद्यलङ्काराणां श्लेषस्य च सामान्यविशेषभावं, श्लेषस्य निर्विषयत्वप्रसङ्गञ्चापनेतुं श्लेषस्यासंकीर्णोदाहरणं दर्शयति देवेति । एक-स्मिन् पक्षे, 'आशानां' दिशां, 'निबन्धनं' नियमनस्थानं, भूलोक इति यावत्, भूलोके एव सर्वासां दिगवधारणात् । 'अमरमरुद्भूमिः' 'च' 'अमराणां' देवानां 'मरुतां' वायूनाञ्च 'भूमिः' आवासस्थानम्, स्वर्लोक इति यावत् ।

-इत्यादिः श्लेषस्य च उपमाद्यलङ्कारविविक्तोऽस्ति विषय इति; द्वयोर्योगे (५१) सङ्कर एव। उपपत्तिपर्य्यालोचने (५२) तु उपमाया एवायं युक्तो विषयः, अन्यथा विषयापहार एव पूर्णोपमायाः स्यात् ।

न च, अविन्दुसुन्दरी नित्यं गलल्लावण्यविन्दुका ।

-इत्यादौ (५३) विरोधप्रतिभोत्पत्तिहेतुः श्लेषः, अपितु

---

पक्षान्तरे च 'अलं' (अत्यर्थं) 'पाता', 'आशानाम्' ( अभिलाषाणां ) 'निबन्धनं' (कारणं), 'वामरमहतास्तु भूमिः' (पात्रम्) इति । अत्र उपमाया असंकीर्णोदाहरणप्रदर्शनस्यैव प्रकृतोपयोगितया तदपि रूपकं न दोषाय । तेनाप्यसंकीर्णोदाहरणन्तु 'येन ध्वस्तम्' इत्यादि ; अतएव 'इत्यादिः'-इत्यत्रादिपदम् प्रयुक्तं ।

(५१) एवञ्च श्लेषस्य उपमाद्यसंकीर्णविषयसत्त्वात् सामान्यविशेषभावो नास्तीति नोपमाबाधकत्वं श्लेषस्य, परमलङ्कारान्तरयोरिवानयोरप्येकत्रोपनिपातेन सङ्कर एव युक्त इत्याह द्वयोरिति ।

(५२) नन्वेवं चेत् 'स्वयञ्च पल्लवा'-इत्यादावपि श्लेषस्योपमायाश्च सत्त्वात् सङ्कर एवास्तां नतूपमा,-इत्याक्षेपे आह उपपत्तीति । इयमत्रोपपत्तिः, प्रधानयोर्द्वयोरेकत्र समावेशो हि सङ्करः, न चात्र द्वयोरेव प्राधान्यं, येन सङ्करः स्यात्, प्राधान्यन्त्वत्र उपमायाः, श्लेषस्य तन्निर्व्वाहकतया तदङ्गमित्यप्रधानमेव, न हि श्लेषं विना साधारणधर्म्मसम्भवः, न च तं विना उपमा सम्भवति ; यच्च यन्निर्वाहकं, तत्तदङ्गम्, अङ्गञ्चाप्रधानमेव ; न चाप्रधानेन व्यपदेशः, 'प्रधानेन हि व्यपदेशा भवन्ति'-इति नियमात्, अत्र उपमैव प्रधानभूता व्यपदेशहेतुरिति । 'अन्यथा' उपपत्तिसत्त्वेऽपि सङ्करस्वीकारे । 'स्यात्'-इति, अविशेषेण 'कमलमिव मुखं मनोज्ञम्' इत्याद्यर्थश्लेषमूलकपूर्णोपमास्थलेऽपि सङ्करस्वीकारप्रसङ्गः, सङ्करश्चालङ्कारान्तरम्, इति सङ्करेणैव तत्र तत्रापि व्यपदेश आस्ताम्, न तु पूर्णोपमयेति भावः ।

(५३) एवमलङ्कारान्तराणामपि श्लेषबाधकत्वं दर्शयति न चेति । अविन्दुरपि लावण्यविन्दुकेति विरोधः, अपृथु प्रतिबिम्बित इन्दुरिति विरोधभङ्गः ।

श्लेषप्रतिभोत्पत्तिहेतुर्विरोधः, न हि अत्र अर्थद्वयप्रतिपादकः (५४) शब्दश्लेषः, द्वितीयार्थस्य प्रतिभातमात्रस्य प्ररोहाभावात्। न च (५५), विरोधाभास इव विरोधः, श्लेषाभासः श्लेषः; तदेवमादिषु वाक्येषु श्लेषप्रतिभोत्पत्तिहेतुरलङ्कारान्तरमेव।
तथा च, सद्वंशमुक्तामणिः (५६)। [१]
नाल्पः कविरिव स्वल्पश्लोको देव, महान् भवान् (५७)। [२]

---

(५४) 'अर्थद्वयप्रतिपादकः' उभयविधार्थस्यान्वयबोधकतया अभिप्रेतः। 'द्वितीयार्थस्य' विन्दुरहितविन्दुसहितरूपार्थस्य। 'प्रतिभातमात्रस्य' शब्दशक्तिमहिम्ना आपातत उपस्थितमात्रस्य। 'प्ररोहाभावात्' प्रस्फुटत्वाभावात् प्रकृतान्वयाप्रवेशात्। अयं भावः, उभयविधार्थस्य विवक्षितत्वे एव 'अर्थभेदेन शब्दभेदः'-इति नियमात् शब्दयोः श्लेषः स्वीक्रियते, न चात्र, उभयविधार्थान्वयो विवक्षितः, द्वितीयार्थस्यापि अन्वये प्रवेशे वास्तविकविरोधप्रसङ्गादिति तात्त्विकः श्लेष एवात्र नास्ति, दूरे चास्याभास विरोधितेति।

(५५) ननु विरोधाभासस्य विरोधालङ्कारत्वमिव श्लेषाभासस्यापि श्लेषालङ्कारत्वमस्तु इत्याक्षेपे समादधाति न चेति। अयं भावः, वास्तविकविरोधस्य दोषतया विरोधाभासस्यैव विरोधालङ्कारत्वं स्वीक्रियते, श्लेषस्य तु वास्तविकस्य सम्भवेन तस्यैवालङ्कारत्वं युक्तम् न तु तदाभासस्यापीति।

(५६) 'सद्वंशः' सत्कुलमेव सद्वेणुस्तत्र 'मुक्तामणिः', एवञ्चात्र वंशशब्दे श्लेषप्रयुक्तं वेणुकुलयोः रूपकमेव राजनि मुक्तामणित्वारोपे हेतुरिति श्लिष्टपरम्परितरूपकम्, इदमेव एकदेशविवर्त्तिरूपकमित्युच्यते। श्लेषस्तु तन्निर्वाहकतया तदङ्गत्वेन न प्रधानमिति।

(५७) 'श्लोकः' पद्यं यशश्च। 'महान् भवान्', अल्पः कविरिव न स्वल्पश्लोकं इत्यर्थः। अत्र व्यतिरेकः श्लोकशब्दश्लेषप्रयुक्त इति श्लेषव्यतिरेकोऽयम्। श्लेषस्तु तदङ्गतया अप्रधानमेव।

अनुरागवती सन्ध्या दिवसस्तत्पुरःसरः ।
अहो दैवगतिश्चित्रा तथापि न समागमः (५८) ॥ [३]

आदाय चापमचलं, कृत्वाऽहीनं गुणं, विषमदृष्टिः ।
यश्चित्रमच्युतशरो लक्ष्यमभाङ्क्षीन्नमस्तस्मै (५९) ॥ [४]

-इत्यादौ एकदेशविवर्त्तिरूपक-श्लेषव्यतिरेक-समासोक्ति-विरोधत्वमुचितम्, न तु श्लेषत्वम् (६०) ।

शब्दश्लेषः-(६१)इति च उच्यते, अर्थालङ्कारमध्ये च लक्ष्यते इति कोऽयं नयः । किञ्च (६२) वैचित्र्यमलङ्कार इति, य

---

(५८) 'अनुरागः' प्रणयविशेषः, लौहित्यानुगतिश्च । 'पुरःसरो'ऽग्रगामी सम्मुखश्च । 'समागमो' मिलनं स्त्रीपुंसङ्गमश्च । अत्राभिधया नियमनेनार्थ-द्वयान्वयबोधस्याभावात् न श्लेषः, किन्तु श्लिष्टविशेषणमहिम्ना नायक-वृत्तान्तप्रतीतिमात्रमिति समासोक्तिरेवालङ्कारः ।

(५९) त्रिलोचनः, हिमाचलं धनुः, वासुकिं ज्यां, विष्णुं शरञ्च विधाय त्रिपुरासुरं जघानेति प्रकृतोऽर्थः । चलनशून्यं धनुः, हीनो जीर्णः, अथवा अहीनो धनुर्दण्डादन्यूनो गुणः, विषमा लक्ष्यादन्यत्र निहिता दृष्टिः, तथापि लक्ष्यभङ्ग इति विरोधाभासः, स एव प्रधानं श्लेषस्य प्ररोहाभावादित्युक्तमेव ।

(६०) अलङ्कारस्येति शेषः ।

(६१) पूर्वपक्षस्य तृतीयमंशं दूषयति शब्दश्लेष इति ।

(६२) ननु शब्दालङ्कारतया न शब्दश्लेषव्यपदेशः, किन्तु विजातीययोः शब्दयोः श्लेषरूपतया तथा व्यपदेशः, अर्थालङ्काररूपतया च अर्थालङ्कार-मध्ये गण्यते इति को दोष इत्यत आह किञ्चेति । य एव (शब्दो वा अर्थो वा) 'कविप्रतिभायाः' कवित्वशक्तेः 'संरम्भः' स्फुरणं, तस्य 'गोचरो' विषयः, तत्रैव (शब्दे वा अर्थे वा) विचित्रता, इति हेतोः, सैव (शब्दो वा अर्थो वा) 'अलङ्कारभूमिः' अलङ्कारस्याश्रयः। विचित्रताया एवालङ्कारतया यत्र विचित्रता, तत्रैव सुतरामलङ्कार इति फलितार्थः । एवञ्च शब्दश्लेषविष-

एव कविप्रतिभासंरम्भगोचरस्तत्रैव विचित्रता इति सैवालङ्कारभूमिः।

अर्थमुखप्रेक्षितत्वमेतेषां शब्दानामिति चेत् (६३), अनुप्रासादीनामपि तथैवेति तेऽपि अर्थालङ्काराः किं नोच्यन्ते? रसादिव्यञ्जकस्वरूपवाच्यविशेषसव्यपेक्षत्वेऽपि हि अनुप्रासादीनामलङ्कारता (६४)। शब्दगुणदोषाणामपि अर्थापेक्षयैव गुणदोषता। अर्थगुणदोषालङ्काराणां शब्दापेक्षयैव (६५) व्यवस्थितिरिति तेऽपि शब्दगतत्वेनोच्यन्ताम्। 'विधौ (६६) वक्त्रे मूर्ध्नि'-इत्यादौ च वर्णादिश्लेषे एकप्रयत्नोच्चार्यत्वेऽर्थश्लेषत्वं शब्दभेदेऽपि प्रसज्यतामित्येवमादि स्वयं विचार्यम्।

**तच्चित्रं यत्र वर्णानां खड्गाद्याकृतिहेतुता ॥८५॥**

---

श्लेषस्थले कविप्रतिभासंरम्भविषयतया श्लेषस्यैव वैचित्र्यमिति तद्गत एव तत्र श्लेष इति भावः। अलङ्कारभूमिरिति विधेयापेक्षतया सैवेत्यस्य चोक्ततेति।

(६३) ननु निरर्थकशब्दानां श्लेषासम्भवेन श्लेषस्यार्थकापेक्षतया अर्थालङ्कारत्वमित्युक्तमेवेति पूर्वपक्षयति अर्थमुखेति।

(६४) रसादिव्यञ्जकं यत् स्वरूपं अनुकूलवर्णादिरूपं, यश्च वाच्यविशेषः अर्थविशेषः, तयोः सव्यपेक्षत्वे अधीनत्वे, सतीति शेषः। अपिर्भिन्नक्रमेणान्वेति, अनुप्रासादीनामपि रसादिव्यञ्जकस्वरूपवाच्यविशेषसव्यपेक्षत्वे सति हि अलङ्कारतेत्यन्वयः। अनुप्रासो हि रसादिव्यञ्जकं स्वरूपमपेक्षते, अनुप्रासशब्दस्य तथैव ('अनु' रसाद्यनुगतत्वेन "प्रकर्षेण न्यासः" विन्यास इति) व्युत्पत्तेः। रसाद्यत्र अपरत्वे न सम्भवतीति अनुप्रासच्छायाभेदः। लाटानुप्रासवक्रोक्त्यादयश्च वाच्यविशेषं साक्षादेवापेक्षन्ते इति।

(६५) शब्देनार्थबोधं विना तेषामसम्भवात्।

(६६) एकप्रयत्नोच्चार्यत्वमेवार्थश्लेषत्वे न नियामकमित्याह विधाविति।

सन्निवेशविशेषेण यत्र न्यस्ता वर्णाः खड्ग-मुरज-पद्माद्याकारमुल्लासयन्ति, तच्चित्रं काव्यम् (६७)। कष्टं काव्यमेतदिति दिङ्मात्रं प्रदर्श्यते। उदाहरणम्,-

मारारिशक्ररामेभमुखैरासाररंहसा।
सारारब्धस्तवा, नित्यं तदर्त्तिहरणक्षमा॥
माता नतानां, सङ्घट्टः श्रियां, बाधितसंभ्रमा।
मान्याथ, सीमा रामाणां, शं मे दिश्यादुमादिमा (६८)॥

(खड्गबन्धः)

(६७) चित्रं चित्रालङ्कारयुक्तम्; क्वचित्तु 'चित्रमलङ्कारः'-इत्येव पाठः। यद्यपि शब्दात्मकानां वर्णानां खड्गाद्याकारवत्ता नास्ति, तथापि तद्व्यञ्जकानां लिप्यात्मकवर्णानां तथात्वेन तेषु तथात्वमुपचर्यते।

(६८) खड्गबन्धो यथा,—




खड्गबन्धनप्रकारो यथा, मुष्टेरुपरि अधश्च शाखाद्वयवान् खड्गो लेख्यः, तत्र उपरिशाखाचतुष्पथमध्ये 'मा'-इति प्राथमिकं वर्णं विन्यस्य, तदूर्ध्वारोहक्रमेण (उपरि अधो वा) एकस्यां धारायां 'रा'-इत्यादीन् 'ह'-इत्यन्तान् चतुर्दशवर्णान् न्यसेत्, खड्गस्याग्रे च 'सा'-इति वर्णो विन्यास्यः, (तत्र च अपरः 'सा'-इति वर्णः प्रविष्टः)। ततोऽपरधारायामवरोह-क्रमेण 'रा'-इत्यादीन् 'ण'-इत्यन्तान् चतुर्दश वर्णान् विन्यसेत् (मा-वर्णः प्राथमिके मावर्णे प्रविष्टः) ततश्च खड्गस्य एकस्यां उपरिशाखायां

सरला बहुलारम्भतरलालिबलारवा ।
वारलाबहुलामन्दकरलाबहुलामला (९८) ॥

(मुरजबन्धः)

निष्क्रमणक्रमेण 'मा'-इत्यादीन् 'हः'-इत्यन्तान् सप्त वर्णान् विन्यस्य, अपरस्यासुपरिशाखायां प्रवेशक्रमेण 'श्रि'-इत्यादीन् 'भ'-इत्यन्तान् सप्त वर्णान् न्यसेत् । (माकारः प्राथमिके माकारे प्रविष्टः)। ततश्च खड्गसृष्टौ 'मा'-मध्यादधः क्रमेण न्या-इत्यादि सी-इत्यन्तं वर्णत्रयं विन्यस्य तदधश्चतुष्पथे माकारो विन्यास्यः । ततश्च तदूर्ध्वशाखायां निष्क्रमणक्रमेण 'रा'-इत्यादीन् 'शम्'-इत्यन्तान् चतुरो वर्णान् विन्यस्य अपरशाखायां प्रवेशक्रमेण 'मे'-इत्यादि 'ड'-इत्यन्तं वर्णचतुष्टयं विन्यसेत् । (माकारोऽधश्चतुष्पथस्थमाकारे प्रविष्टः) ।

ततश्च सृष्टेर्मूलभागे माकारस्याधःक्रमेण 'दिमा'-इति वर्णद्वयं न्यसेत् ।

श्लोकयोरयमर्थः, मारस्य कन्दर्पस्य अरिः शिवः, शक्र इन्द्रः, रामो रघुनन्दनः परशुरामो वा इभमुखो गणेशः, एतैरासाररंहसा धारासम्पात-तुल्यवेगेन सारमतिशयम् सफलं वा आरब्धः स्तवो यस्याः सा । तेषां मारारिशक्रादीनां नित्यं पीडाहरणसमर्था । श्रियां संघट्टः सम्मेलनस्थानम् । बाधितो निरस्तः संभ्रम उद्वेगो यस्याः सा । रामाणां रमणीयानां नारीणां सीमा परा काष्ठा पर्यन्तभूमिः रमणीयतमेति यावत् । आदिमा शिवा । अन्यत् सुगमम् ।

(९८) मुरजबन्धो यथा,—



अस्य न्यासप्रकारस्त्वयम्, पङ्क्तिक्रमेण प्रथमपादवर्णान् विलिख्य, तेषा-मधोऽधस्तथैवापरपादत्रयवर्णान् लिखेत्, ततस्तेषु रेखाविशेषदानेन श्लोकोद्धारो मुरजोत्पादनञ्च कार्य्यम्, यथा, प्रथमादिपादचतुष्टयस्य यथाक्रमं प्रथम-द्वितीय-तृतीय-चतुर्थवर्णेषु अधोगत्या एका रेखा देया, ततश्च तद्रेखाग्रतः चतुर्थादिपादचतुष्टयस्य व्युत्क्रमेण पञ्चम-षष्ठ-सप्तमाष्टमेषु ऊर्द्ध्वगत्या एका रेखा देया ; एवं रेखाद्वयेन प्रथमपादोत्पत्तिः । ततश्च द्वितीयपाद-प्रथमवर्ण-प्रथमपादद्वितीयवर्णयोरेका रेखा, तदग्रतः प्रथमपादतृतीयवर्ण-द्वितीयपादचतुर्थवर्णयोरेका, तदग्रतः द्वितीयपादपञ्चमवर्ण-प्रथमपादषष्ठ-वर्णयोरेका, तदग्रतः प्रथमपादसप्तमवर्ण-द्वितीयपादाष्टमवर्णयोश्चैका-इत्येवं-रेखाचतुष्टयेन द्वितीयपादोद्धारः । यथैव प्रथम-द्वितीयपादयोर्येषु येषु वर्णेषु रेखाचतुष्टयदानेन द्वितीयपादोद्धारः, तथैव तृतीय-चतुर्थपादयोस्तेषु तेषु वर्णेषु रेखाचतुष्टयेन तृतीयपादोद्धारः कार्य्यः । एवं चतुर्थादिपादचतुष्टयस्य व्युत्क्रमेण प्रथम-द्वितीय-तृतीय-चतुर्थवर्णेषु ऊर्द्ध्वगत्या एका रेखा, एका च रेखा तदग्रतः प्रथमादिपादचतुष्टयस्य क्रमेणाधोगत्या पञ्चम-षष्ठ-सप्तमाष्टम-वर्णेषु देया, एवं रेखाद्वयेन चतुर्थपादोत्पत्तिः ।

श्लोकस्यायमर्थः, प्रकरणगम्या शरत् विशेष्या । सरला मेघादिकौटिल्य-रहिता । 'बहुलैरनेकैरारम्भैश्चेष्टाभिश्चरतानाम् चञ्चलानाम् अलिकुलानां भ्रमरसमूहानाम् आरवः कोलाहलो यस्यां, सा । वारला हंसाः बहुला यस्याम्, सा । अमन्दा उद्योगिनः' (अर्थात् रणाय) करला (करं राजग्राह्यभागं लान्ति गृह्णन्तीति) राजानः यस्यां सा, शरदेव युद्धा-रम्भोपयोगी ऋतुरिति । अबहुले शुक्लपक्षे अमला निर्मला, (बहुले कृष्णपक्षेऽपि अमला इति वार्थः)। सरलेत्यत्र सरसेतिपाठे (सरं सरणं लाति आदत्ते इति व्युत्पत्त्या) सरणाद्युद्यमवतीति महेश्वरः ।

भासते प्रतिभासार! रसाभाताहताविभा।
भावितात्मा, शुभा वादे, देवाभा बत ते सभा (१८)॥

(पद्मबन्धः)

---

(१८) पद्मबन्धो यथा,—




अस्य न्यासप्रकारो यथा, अष्टदलपद्मं लेख्यम्, तत्र कर्णिकायाम् श्लोकस्य आदिमो वर्णः स्थाप्यः, स च अष्टधा श्लिष्टः। प्रतिदलं द्वौ द्वौ वर्णौ लेख्यौ, तत्र दिग्दलेषु निर्गमप्रवेशाभ्यां श्लिष्टौ वर्णौ, विदिग्दलेषु तु न श्लिष्टौ। तत्र प्राग्दले आदौ निर्गमः श्लोकान्ते च प्रवेशः, दक्षिणोत्तरदलयोर्विपरीत

रसासार, रसा सारसायताक्ष, क्षतायसा ।
सातावात, तवातासा रक्षतस्त्वस्त्वतक्षर, (७१) ॥
(सर्व्वतोभद्रम्)

---

प्रवेशः, पश्चिमदले तु प्रविश्यैव निर्गमः, आग्नेयवायव्यदलयोः प्रवेश एव, नैर्ऋतैशानयोस्तु निर्गम एव। तथाहि प्रकृते कर्णिकायां भा-इति, पूर्व्वदले निर्गमक्रमेण सते-इति, आग्नेयदले प्रवेशक्रमेण प्रति-इति चैते वर्णा लेख्याः, भा-इति वर्णः कर्णिकास्थः श्लिष्टः, ततो दक्षिणदले निष्क्रमणक्रमेण [illegible] वर्णद्वयम् लेख्यम्, तस्मिन् वर्णद्वये च प्रवेशक्रमेण रसा-इति वर्णद्वयं श्लिष्टम्, कर्णिकायाञ्च भावर्णः श्लिष्टः एवमन्येऽपि उक्तदिशाऽवसेयम्।

श्लोकस्यायमर्थः, हे 'प्रतिभासार', उद्भावनशालिमतिमन्, 'ते सभा' 'भासते'। किंभूता सा, 'रसाभाता' रसैराभाता शोभिता। 'अहताविभा' अहता अक्षता, आविभा सम्यग्दीप्तिर्यस्याः सा। 'भाविताक्मा' भावितः निर्णीतः ध्यातो वा आत्मा यस्यां सा। 'वादे' तत्त्वकथायां 'शुभा'। 'देवाक्ष' देवसभातुल्या इत्यर्थः।

(७०) सर्व्वतोभद्रस्य न्यासप्रकारविशेषप्रदर्शनं निरर्थकं, पादचतुष्टयस्य क्रमेणाधोऽधोविन्यसनमेव पर्य्याप्तम्; तथा कृते एव हि "तदिदं सर्व्वतोभद्रं भ्रमणं यदि सर्व्वतः"-इति दण्ड्युक्तस्य सर्व्वतोभद्रत्वस्य प्रतीतिसम्भवात्। सर्व्वतोभद्रत्वञ्च अनुलोमेन, प्रतिलोमेन, अनुलोमप्रतिलोमाभ्यां, प्रतिलोमानुलोमाभ्याञ्च; अधःक्रमेण, उपरिक्रमेण, अधउपरिक्रमेण, उपर्य्यधःक्रमेण च उच्चारणे स एव श्लोक आयातीत्येवंरूपम्।

यथा—

| | | | | | | | |
|---|---|---|---|---|---|---|---|
| र | सा | सा | र | र | सा | सा | र |
| सा | य | ता | क्ष | क्ष | ता | य | सा |
| सा | ता | वा | त | त | वा | ता | सा |
| र | क्ष | त | स्त्व | स्त्व | त | क्ष | र |

अत्र हि प्रथमादिपादानामनुलोमेनेव प्रतिलोमेनोच्चारणेऽपि त एव पादाः

सम्भविनोऽप्यन्ये प्रभेदाः शक्तिमात्रप्रकाशका नतु काव्यरूपतां दधतीति न प्रदर्श्यन्ते ।

पुनरुक्तवदाभासो विभिन्नाकारशब्दगा ।

एकार्थतेव,

भिन्नरूपसार्थकानर्थकशब्दनिष्ठमेकार्थत्वेन मुखे भासनं (७१) पुनरुक्तवदाभासः । स च,

शब्दस्य,

---

आयान्ति । एवं प्रतिपादं प्रथमादिवर्णचतुष्टयस्य पञ्चमादिवर्णचतुष्टयस्य वा अनुलोमप्रतिलोमाभ्याम्, प्रतिलोमानुलोमाभ्यां वा त एव पादाः । एवं, पादचतुष्टयस्य प्रथमानां अष्टमानाञ्च वर्णानां अधःक्रमेण उपरिक्रमेण वा उच्चारणे प्रथमपादः, अथवा प्रथमवर्णचतुष्टयस्य अष्टमवर्णचतुष्टयस्य वा कोष्ठस्य उपर्य्यधःक्रमेण, अधउपरिक्रमेण वा उच्चारणे प्रथमः पादः । एवं-रीत्या प्रत्येकपादानां द्वितीयवर्णचतुष्टयेन सप्तमवर्णचतुष्टयेन च द्वितीयपादस्य, तृतीयवर्णचतुष्टयेन षष्ठवर्णचतुष्टयेन च तृतीयपादस्य, एवं चतुर्थवर्णचतुष्टयेन पञ्चमवर्णचतुष्टयेन च चतुर्थपादस्य च उत्पत्तिरित्येवं बहुविधं भ्रमणमूह्यम् ।

रक्षतः तु अस्तु अतक्षर इति गूढपदच्छेदः । श्लोकस्यायमर्थः, हे रसासार (पृथ्वीश्रेष्ठ), रक्षतस्तव रसा (पृथ्वी) क्षतायसा (क्षतः नाशितः अयः शुभावहविधिर्यैः, तान् स्यति अन्तं प्रापयति या, सा, सोऽन्तकर्मणि इत्यस्य रूपम्), अतासा (अनुपक्षया, तसु उपक्षये-इत्यस्य रूपम्) तु (च) अस्तु-इत्यन्वयः । हे सारसायताक्ष, (सारसवत् पद्मवत् आयते अक्षिणी यस्य सः), हे सातावात, (साते सुखे अवात अपस्खल, अनासक्त), हे अतक्षर, (अतक्षद, तक्ष तनूकरणे, रा दाने इत्यनयोः रूपम्) ।

(७१) मुखे आपाततः । भासनम् प्रतीतिः, तथा च आर्थिकानाम्

सभङ्गाभङ्गरूपकेवलशब्दनिष्ठः। उदाहरणम्,—

अरिवधदेहशरीरः, सहसा रथिसूततुरगपादातः।
भाति सदानत्यागः स्थिरतायामवनितलतिलकः (७२)॥

चकासत्यङ्गनारामाः कौतुकानन्दहेतवः।
तस्य राज्ञः सुमनसो विबुधाः पार्श्ववर्तिनः (७३)॥

तथा शब्दार्थयोरयम् ॥ ९ ॥

---

एकार्थतेवेतिपदम् एकार्थतया आपाततो भासनपरमितिबोध्यम्। विभिन्नरूपयोर्वस्तुतो भिन्नार्थयोरपि शब्दयोरापातत एकार्थतया प्रतीतिः पुनरुक्तवदाभासः।

(७२) 'अरिवधदेहशरीरः' अरिवधदा ईहा (चेष्टा) येषाम्, तान् शरिणः (शरयुक्तान् योधान्) ईरयति (प्रेरयति) यः सः। 'सहसारथिसूततुरगपादातः' सहसा रथिभिः सूताः (सुष्ठु जाताः सम्बद्धाः) तुरगाः पादाताश्च (पदातिकाः) यस्य, सः। 'स्थिरतायाम्' 'अगः'(पर्वत इव) 'अवनितलतिलकः', 'सदानत्या' सताम् विषये आनत्या (अतिनम्रभावेन सन्तोषजननेन वा) 'भाति' शोभते इत्यर्थः।

(७३) 'अङ्गनारामाः' अङ्गने एव आ (सम्यक्) रमन्ते इति अङ्गनारामाः (अप्रवासिनः)। 'कौतुकानन्दहेतवः,' कौतुकेन (सत्कर्मणि अभिलाषेण नृत्यगीतादिना वा) अस्य (विष्णोः) नन्दस्य सन्तोषस्य, हेतवः। (कौतुकेन आनन्दहेतवः-इति यथाश्रुतार्थकरणे आनन्दशब्दस्य परिशिष्टत्वेन अस्य शब्दमात्रालङ्कारोदाहरणत्वासङ्गतिः)। 'सुमनसः' 'सु' (शोभनानि) मनांसि येषां ते। 'विबुधाः' पण्डिताः।

अत्र श्लोकद्वये शब्दगत एवायमलङ्कारः, तथाहि देहशरीर-इति द्वावेव शब्दौ सार्थकौ सभङ्गौ च। सारथि-सूत-इति द्वयोराद्यो निरर्थकः, अपरश्च सार्थकः, उभावेव सभङ्गौ। दान-त्याग-इति उभावपि निरर्थकौ सभङ्गौ च। अङ्गनारामाशब्दयोः पूर्वः सभङ्गः निरर्थकश्च, अपरस्तु अभङ्गः सार्थकश्च।

उदाहरणम्,-

तनुवपुरजघन्योऽसौ करिकुञ्जररुधिररक्तखरनखरः ।
तेजोधाम महःपृथुमनसामिन्द्रो हरिर्जिष्णुः (७४) ॥

अत्रैकस्मिन् पदे परिवर्त्तिते नालङ्कार इति शब्दाश्रयः, अपरस्मिंस्तु परिवर्त्तितेऽपि स न हीयते-इत्यर्थनिष्ठ इत्युभयालङ्कारोऽयम् ॥

॥ इति काव्यप्रकाशे शब्दालङ्कारनिर्णयो नाम नवम उल्लासः ॥

---

कौतुकानन्दशब्दयोः पूर्व्वोऽभङ्गः, उत्तरस्तु सभङ्गः, उभावपि सार्थकौ । सुमनसो विबुधा इति द्वावेव अभङ्गौ सार्थकौ चेति शब्दगतत्वादस्य शब्दनिष्ठत्वम् । एतेषां शब्दानां परिवृत्त्यसहत्वात् शब्दालङ्कारत्वम् ।

(७४) असौ हरिः (सिंहः), तनुवपुरपि (क्षीणशरीरोऽपि) अजघन्यः (श्रेष्ठः) इति विधेयम् । स किम्भूतः ?—करिकुञ्जराणाम् (गजश्रेष्ठानाम्) रुधिरेण रक्ताः (लोहिताः) खराः (तीक्ष्णाः) च नखरा यस्य सः, तेजसाम् धाम (आश्रयः), महसा (तेजसा) पृथुमनसाम् (विपुलान्तःकरणानाम्) इन्द्रः (प्रभुः), जिष्णुश्च (जयशीलश्च) इति । अत्र तनु-कुञ्जर-रक्त-धाम-हरि-पदानि परिवृत्त्यसहानि, वपुरादिपदानि तु तत्सहानीत्युभयालङ्कारत्वम् । धाम-महः-इत्यत्र हरिर्जिष्णुः-इत्यत्र च शब्दगतत्वमेव, उभयोरेव शब्दयोः परिवृत्त्यसहत्वादिति । एवं करिवाचकाः सर्व्व एव शब्दा उत्तरत्र स्थिताः श्रेष्ठार्थज्ञापका इति मते 'करिकुञ्जर' इत्यत्र अर्थगतोऽयमलङ्कारः उभयपदयोरेव परिवृत्तिसहत्वादिति तु विभावनीयम् ।

## ॥ दशम उल्लासः ॥

अर्थालङ्कारानाह (१),-

**साधर्म्यमुपमा भेदे,**

उपमानोपमेययोरेव (२), ( न कार्य्यकारणादिकयोः )

---

(१) "उपमाऽनन्वयस्तद्वदुपमेयोपमा ततः। उत्प्रेक्षाऽथ ससन्देहो रूपकापह्नुती तथा। श्लेषस्तथा समासोक्तिः प्रोक्ता चैव निदर्शना। अप्रस्तुतप्रशंसाऽतिशयोक्ती परिकीर्त्तिते। प्रतिवस्तूपमा तद्वद्दृष्टान्तो दीपकं तथा। तुल्ययोगितया चैव व्यतिरेकः प्रकीर्त्तितः। आक्षेपो विभावना च विशेषोक्तिस्तथैव च। यथासंख्यमर्थान्तरन्यासः स्यातां विरोधवत्। स्वभावोक्तिस्तथा व्याजस्तुतिः प्रोक्ता सहोक्तिवत्। विनोक्ति-परिवृत्ती च भाविकं काव्यलिङ्गवत्। पर्यायोक्तमुदात्तञ्च समुच्चय उदीरितः। पर्यायश्चानुमानञ्च प्रोक्तः परिकरस्तथा। व्याजोक्तिपरिसंख्ये च विकल्पे हेतुमालया। अन्योन्यमुत्तरं सूक्ष्मसारौ तद्वदसङ्गतिः। समाधिश्च समेन स्याद्विषमस्त्वधिकेन च। प्रत्यनीकं मीलितञ्च तथातामेकावली स्मृती। भ्रान्तिमांश्च प्रतीपेन सामान्यञ्च विशेषवत्। तद्गुणातद्गुणौ चैव व्याघातः परिकीर्त्तितः। संसृष्टिसङ्करौ चेत्थमेकषष्टिरुदीरिताः" इति प्रदीपः।

(२) ननु साधर्म्यं हि सादृश्यापरनामकः सम्बन्धविशेषः, सम्बन्धश्च एकप्रतियोगिकोऽपरानुयोगिक एव नियतः, (यत्र यस्य यः सम्बन्धः, यथाक्रमं तौ तत्र सम्बन्धस्य प्रतियोग्यनुयोगिनौ, यथा, दण्डस्य कुण्डे संयोगः, घटस्य कपाले कार्य्यत्वस्य सम्बन्ध इति तत्र तत्र सम्बन्धस्य यथाक्रमं तौ दण्डघटौ प्रतियोगिनौ तावपि कुण्डकपालौ अनुयो-

साधर्म्यं भवतीति तयोरेव समानधर्मेण (३) सम्बन्ध उपमा। भेदप्रदर्शनमनन्वय[illegible]च्छेदाय (४)।

---

गिनाविति) एतच्च अत्र, साधर्म्यसम्बन्धस्य तौ प्रतियोग्यनुयोगिनाविति। यदि यौकौचिदपि तौ कल्प्येते-इत्युच्यते, तदा कार्यकारणादिरूपौ तौ किमिति न कल्प्येते ?-इत्याशङ्कां निराकरोति उपमानेति। इदमत्र निराकरणम्, सर्व एव न सर्वेषां सम्बन्धानां प्रतियोग्यनुयोगिनः, किन्तु कौचित् कस्यचित् इति कार्यत्वादिसम्बन्धस्य प्रतियोग्यनुयोगिनावपि कार्यकारणादिकौ न साधर्म्यसम्बन्धस्य तथा सम्भवत इति न तौ अत्र कल्प्येते, किन्तु योग्यतया उपमानोपमेये एव प्रतियोग्यनुयोगितया नियत[illegible] इति तदनुपादानं न दोषायेति।

(३) समानः (एकः तुल्यो वा) धर्मः (गुणक्रियादिरूपः) ययोः (अर्थात् उपमानोपमेययोः) तौ सधर्माणौ, तयोर्भावः (तेन समानेन धर्मेण सम्बन्धः) साधर्म्यमिति व्युत्पत्तिलभ्यं साधर्म्यपदार्थमाह समानेति। साधर्म्यमेव परैः सादृश्यपदेनोच्यते।

(४) अनन्वये उपमानस्यैवोपमेयतया तयोर्भेदाभावादिति भावः। न च अस्यालङ्कारत्वे सतीति विशेषणमनुक्तमपि प्रकरणात् प्राप्तमेव, तेन गौरिव गवय इत्यादौ सदपि साधर्म्यं नोपमालङ्कारः वैचित्र्याभावात्। एवं कण्ठे [illegible]इत्यादौ उपमायाः प्रधानरसानुपकारकतया अलङ्कारत्वमेव नास्ति, तथापि तत्प्रकारो भाव्य एवेति। ततश्चोक्तरीत्यैव अनन्वयवारण-प्रसङ्गे भेदप्रदर्शनमनर्थकमिव प्रतिभाति अनन्वयस्यैव चमत्कारजनकत्वेन अलङ्कारत्वात् नतूपमाया इति। अतएव रसगङ्गाधरकृद्भिरस्य लक्षणस्य दूषणावसरे "भेदप्रदर्शनस्य वैयर्थ्यापत्तेः"-इत्युक्तम्। एवञ्चालङ्कारत्वे सति साधर्म्यमुपमेत्येव वक्तव्यम्। उपमास्थले च उपमानम्, उपमेयं, साधारणो धर्मः, साधर्म्यञ्चेति चतुष्टयमपेक्ष्यते। साधारणधर्माश्रयत्वेन प्रसिद्धः पदार्थः उपमानं तद्वत्तया वर्णनीयः पदार्थ उपमेयः, उभयत्र (उपमाने उपमेये च) वर्तमानो धर्मः साधारणो धर्मः, यस्य धर्मस्य सम्बन्धात् येन सह यदुपमीयते, स साधारणो धर्मः, तद् उपमानम्, तच्च उपमेयमिति स परमार्थः, यथा, कमलमिव मुखं मनोज्ञमित्यादौ मनोज्ञत्वधर्मसम्बन्धात् तद्वत्तया प्रसिद्धेन कमलेन सह मुखमुपमीयते इति मनोज्ञत्वं साधारणो धर्मः,

पूर्णा लुप्ता च,

उपमानोपमेयसाधारणधर्मोपमा-प्रतिपादकानामुपादाने पूर्णा, एकस्य द्वयोस्त्रयाणां वा लोपे लुप्ता ।

साऽग्रिमा ।

**श्रौत्यार्थी च भवेद्वाक्ये समासे तद्धिते तथा(५) ॥१॥**

अग्रिमा पूर्णा ।

---

[illegible]नम्, मुखमुपमेयमिति । उपमानादिचतुष्टयञ्च सदसदपि, वाच्यं प्रतीयमानमपि च भवति । अतएव त्वयि कोपो ममाभाति सुधांशाविव पावक इत्यादौ सुधांशौ पावकस्यासतोऽपि उपमानत्वसिद्धिः, कमलमिव मुखमित्यादौ लुप्तोपमास्थले प्रसिद्धतया साधारणधर्मस्यानुपात्तत्वेऽपि उपमासिद्धिश्चेति । अतएव उपमालक्षणे वाच्यपदप्रक्षेपो दर्पणकृतामसङ्गत इव प्रतिभाति प्रतीयमानाया अपि उपमायाः उपमात्वानपायात्, एवं रीत्या सर्व्वेष्वपि अलङ्कारलक्षणेषु वाच्यपदप्रक्षेपप्रसङ्गाच्च । किञ्च प्रतीयमानाया उपमायाः व्यङ्ग्यरूपत्वेनालङ्कारत्वाभावादेव उपमात्वाभावः सिद्ध एवेति ।

(५) उपमानादिपदानि चत्वार्य्यपि यद्यसमस्तानि तदा वाक्यगा, तेषु कयोरपि समस्तत्वे समासगा तद्धितप्रत्ययान्तत्वे न वाक्यत्वम् न वा समासत्वमिति पृथगुक्तिः । त्रिविधाऽपि पूर्णोपमा, श्रौती आर्थी चेति प्रत्येकं द्विधा भूत्वा षड्विधेति । उपमायाः श्रौतत्वञ्च शब्दगम्यत्वम्, श्रव्यत्वमिति यावत्, तच्च यथेववादिशब्दोपादाने इवार्थविहितवतेश्चोपादाने भवति, यथादिशब्दानां साधर्म्यसम्बन्धरूपधर्मवाचकतया तच्छ्रवणे श्रवणमात्रेणैव साधर्म्यसम्बन्धस्य मुख्यतयोपस्थितेः । आर्थत्वम्, अर्थबललभ्यत्वम् तच्च तुल्यादिशब्दानां तुल्यार्थविहितवतेश्चोपादाने भवति, तुल्यादिशब्दानाम् सधर्म्मसम्बन्धसम्बन्धिरूपधर्मिवाचकतया तच्छ्रवणे तादृशधर्मिणः (उपमानस्य, उपमेयस्य, उभयस्य वा) एव मुख्यतयोपस्थितेः साधर्म्यस्य चार्थिकत्वात् । एतत् सर्व्वमनुपदमेव स्फुटीभविष्यति ।

यथेववादिशब्दा (६) यत्परास्तस्यैवोपमानताप्रतीतिरिति यद्यप्युपमानविशेषणान्येते; तथापि शब्दशक्तिमहिम्ना श्रुत्यैव षष्ठीवत्सम्बन्धं प्रतिपादयन्तीति तत्सद्भावे श्रौती उपमा। तथैव, "तत्र तस्येव"-[५।१।११६ पा० सू०]-इत्यनेनेवार्थे विहितस्य वतेरुपादाने।

---

(६) यथादिशब्दानां साधर्म्यसम्बन्धवाचकत्वं प्रतिपादयन् [illegible] श्रौतत्वं प्रतिपादयति यथेवेति। 'यत्पराः' यदनन्तरमुपात्ताः। [illegible] तदर्थस्यैव। 'श्रुत्यैव' श्रवणमात्रेणैव। 'सम्बन्धं' प्रकृते उपमानोपमेययोः साधारणधर्मसम्बन्धरूपं साधर्म्यम्। अयमत्र पूर्व्वः पक्षः यद्धि यदर्थे धर्मविशेषं प्रतिपादयति तत् तद्विशेषणं, एकविशेषणञ्च नापरत्र स्वार्थं प्रत्याययतीति नियमः, यथा, नीलमुत्पलमित्यादौ नीलपदम् उत्पलपदार्थे स्वार्थं प्रत्याययत् उत्पलपदस्य विशेषणं भवति, ततश्च नान्यत्र स्वार्थम् प्रत्याययति, तथा, 'मुखं मनोज्ञं कमलं यथैतत्' इत्यादौ यथाशब्दः कमलपदोत्तरमुपात्तत्वेन कमलपदार्थे उपमानतां प्रत्याययतीति कमलपदस्य विशेषणमिति उपमानभूते कमले एव साधारणधर्मसम्बन्धं बोधयतु, तदन्यस्मिन् उपमेये मुखे कथं तदवगमयेत्? इति उपमानोपमेययोः साधर्म्यस्य शब्दागम्यत्वात् कथं श्रौतत्वमिति। सिद्धान्तस्त्वयम्, राज्ञो राज्यमित्यादौ स्वप्रकृत्यनन्तरमुपात्ता षष्ठीविभक्तिः स्वप्रकृत्यर्थे राजनि स्वामित्वं प्रत्याययन्ती तद्विशेषणं भवन्त्यपि यथा राजराज्ययोः स्वस्वामिभावं सम्बन्धं प्रत्याययति, तथा उपमाने उपमानतां प्रत्याययन्तोऽपि यथादिशब्दा उपमानोपमेययोः साधर्म्यसम्बन्धं श्रवणमात्रेण उपस्थापयन्त्येवेति, अत्र तु, हेतुः शब्दशक्तेर्वैचित्र्यमेव। विशेषणत्वमभ्युपेत्यायं सिद्धान्तः, वस्तुतः यथादयः शब्दा नोपमानविशेषणानि, न हि, 'यत् यदर्थे धर्मविशेषं प्रत्याययति, तत् तद्विशेषणम्,-इति नियमः, किन्तु यदर्थस्य यदर्थेऽन्वयबोधः, तत् तद्विशेषणमित्येव सिद्धान्तः, न च यथादयः शब्दा उपमानतार्थकाः, येन उपमाने तदन्वयबोधं जनयन्तो उपमानविशेषणानि स्युः, यथादिशब्दैरुपमानताप्रतीतिस्तु नान्वयबोधरूपा, किन्त्वर्थवशसम्पन्नेति न इवशब्द उपमानविशेषणम्।

'तेन तुल्यम्(७)मुखम्' इत्यादावुपमेये एव, 'तत्तुल्यमस्य-' इत्यादौ चोपमाने एव, 'इदञ्च तच्च तुल्यम्' इत्युभयत्रापि तुल्यादिशब्दानां विश्रान्तिरिति साम्यपर्य्यालोचनया तुल्यता-प्रतीतिरिति साधर्म्यस्यार्थत्वात्तुल्यादिपदोपादाने आर्थी। तद्वत्, "तेन तुल्यम् क्रिया चेत् वतिः-" [५।१।११५ पा० सू०]-इत्यनेन विहितस्य वतेः स्थितौ।

'इवेन नित्यसमासो (८) विभक्त्यलोपः पूर्व्वपदप्रकृति-स्वरत्वं च' इति नित्यसमासे इवशब्दयोगे समासगा।

---

(७) तुल्यादिशब्दानां धर्म्मिवाचकत्वं प्रतिपादयन् तत्सद्भावे आर्थत्वं व्यवस्थापयति तेन तुल्यमिति। अत्र सर्व्वत्र तत्पदार्थः कमलम्, इदम्पदार्थश्च मुखम्। उपमेये इति, उपमाने इति च विश्रान्तिरित्यनेनान्वेति। उभयत्र उपमाने उपमेये च। विश्रान्तिः पर्य्यवसानम्, तात्पर्य्यमिति फलितार्थः। साम्यस्य साधर्म्यस्य। पर्य्यालोचना अनुसन्धानम्। तुल्यता साधर्म्यसम्बन्ध-सम्बन्धिता, सा च तेन तुल्यं मुखमित्यादौ उपमेयतारूपा, तत्तुल्यमस्ये-त्यादौ उपमानतारूपा, इदञ्च तच्च तुल्यमित्यादौ उभयरूपेण पर्य्यवस्यतीति न साधर्म्यमेव तुल्यता। अयं भावः, तुल्यादिशब्दानां उक्तरूपधर्म्मिवाचकतया यद्यपि तत्सद्भावे साधर्म्यं शब्दात् न प्रतीयते, तथापि अर्थादाक्षिप्यते एव तदिति आर्थत्वम्, तथाहि कमलेन तुल्यं मुखमित्यत्र प्रथमत एव, शब्दात् तुल्यमुखयोरभेदान्वयबोधः, ततश्च मुखस्य कमलतुल्यताप्रतीतिरिति निर्व्वि-वादम्, सा तु प्रतीतिः कमलमुखयोः साधर्म्यानुसन्धानं विनाऽनुपपन्ना, कमलमुखयोः साधर्म्यं विना कमलेन मुखस्य तुल्यतायाः (साधर्म्यसम्बन्ध-सम्बन्धितारूपायाः) एवाप्रसक्तेरिति तुल्यताप्रतीत्यन्यथानुपपत्त्या अर्था-दाक्षिप्यते एव साधर्म्यमिति।

(८) अत्र "सुपो धातुप्रातिपदिकयोः" (२।४।७१ पा०) इति सूत्रव्याख्यानावसरे "इवेन समासः विभक्त्यलोपः पूर्व्वपदप्रकृतिस्वरत्वञ्च"

अस्यैव उदाहरणम्,-

स्वप्नेऽपि समरेषु त्वां विजयश्रीर्न मुञ्चति ।
प्रभावप्रभवं कान्तं स्वाधीनपतिका यथा ॥ [वा० श्रौ०]

चकितहरिणलोललोचनायाः
क्रुधि तरुणारुणतारहारकान्ति ।
सरसिजमिदमाननञ्च तस्याः
सममिति चेतसि संमदं विधत्ते ॥ [वा० आ०]

अत्यायतैर्नियमकारिभिरुद्धतानाम्,
दिव्यैः प्रभाभिरनपायमयैरुपायैः ।
शौरिर्भुजैरिव चतुर्भिरदः सदा यो
लक्ष्मीविलासभवनैर्भुवनं बभार ॥ [स० श्रौ०]

अवितथमनोरथपथप्रथनेषु
प्रगुणगरिमगीतश्रीः ।
सुरतरुसदृशः स भवान्
अभिलषणीयः क्षितीश्वरो न कस्य ॥ [स० आ०]

गाम्भीर्यगरिमा तस्य सत्यं गङ्गाभुजङ्गवत् । [त० श्रौ]
दुरालोकः स समरे निदाघाम्बररत्नवत् ॥ [त० आ०]

स्वाधीनपतिका (८) कान्तं भजमाना यथा लोकोत्तर-

---

इति वार्त्तिकदर्शनेन, "व्याकरणे वैकल्पिकत्वाङ्गीकारात् वार्त्तिके तयोरुपादानाच्च नित्यपदप्रक्षेपोऽप्रामाणिकः" इत्युद्योतकृत् प्राह च; एवमिवाङ्गीकुर्वन् रसगङ्गाधरकृदपि 'प्राचिपेयत्न इव वारिधरो मेऽवेदनां हरतु उपमि-मरेष्यः' इत्यादौ (प्रावृषेण्यो वारिधर इव इत्येवान्वयस्य कर्त्तव्यत्वात्) वाक्य-गत इवशब्द इत्युदाजहार ।

(८) [illegible] "[illegible]"

चमत्कारभूः, तथा, जयश्रीस्त्वदासेवनेनेत्यादिना प्रतीयमानेन विना यद्यपि नोक्तवैचित्र्यं, वैचित्र्यञ्चालङ्कारः, तथापि (१०) न ध्वनिगुणीभूतव्यङ्ग्यव्यवहारः, न खलु व्यङ्ग्यसंस्पर्शपरामर्शादत्र चारुताप्रतीतिः, अपि तु वाच्यवैचित्र्यप्रतिभासादेव। रसादिस्तु (११) व्यङ्ग्योऽर्थोऽलङ्कारान्तरञ्च सर्व्वत्र

---

इत्यभिहितम्, तच्चाभिधानं तदैवावितथं स्यात्, यद्यलङ्कारप्रभेदेषु विद्यमानेषु चित्रकाव्यत्वस्य सम्भवः स्यात्; स एव न, उपमादीनामर्थालङ्काराणां व्यङ्ग्यस्वरूपतया तत्सद्भावे (तादृशव्यङ्ग्यस्य प्राधान्ये ध्वनित्वस्य, अप्राधान्ये) गुणीभूतव्यङ्ग्यत्वस्य वा सम्भवेन अव्यङ्ग्यस्वरूपस्य चित्रकाव्यत्वस्य दुरुपपादत्वात्; तथाहि स्वप्नेऽपीत्यादावुदाहरणे, 'स्वाधीनपतिका कान्तं भजमाना यथा लोकोत्तरचमत्कारविषयः, तथा जयलक्ष्मीस्त्वदासेवनेन'-इत्यादि व्यङ्ग्यरूपैवोपमा वाच्यार्थस्य उत्कर्षाधायकतया अलङ्कारः, तया विना वैचित्र्यान्तरस्यासत्त्वादिति उक्तोपमाद्यर्थालङ्कारसत्त्वे न चित्रकाव्यत्वस्य सम्भव इति पूर्व्वाभिधानेनात्रोपमालङ्काराभिधानं विरुद्धमिति पूर्व्वपक्षयति स्वाधीनपतिकेति।

(१०) अत्र वैचित्र्यान्तरस्यासत्त्वमेवासत्, वाच्यस्यैव उपमारूपवैचित्र्यस्य सत्त्वात्, तच्च श्रुतिमात्रेण प्रतीतं सत् वक्तव्यमर्थं सातिशयमुत्कर्षयत् प्रथमत एवालङ्कारपदवीमधिकरोति, उक्तव्यङ्ग्यरूपं वैचित्र्यम् अनुसन्धानसाधितं भवदपि पश्चात्प्रतीततया अस्फुटतया च सदप्यकिञ्चित्करमेवेति, एवञ्चोपमाद्यलङ्काराणां वाच्यस्वरूपतया तत्सद्भावे चित्रकाव्यत्वं नासम्भवीति सिद्धान्तयति तथापीति। 'संस्पर्शः' सम्बन्धः 'परामर्शो'ऽनुसन्धानम्। अत्र उपमाद्यलङ्कारस्थले। 'चारुता' उत्कर्षः।

(११) ननु तथापि पूर्व्वापरविरुद्धाभिधानमस्त्येव, तथाहि "ते चालङ्कारनिर्णये निर्णेष्यन्ते"(६ उल्ला०)-इत्यनेन, वाच्यालङ्कारोदाहरणतया वक्ष्यमाणानि, तान्येव चित्रकाव्योदाहरणतयाऽत्र लक्षणेऽभिहितम्,

अत्र तु यानि 'स्वप्नेऽपी'त्यादीनि उपमोदाहरणतयाऽभिहितानि, तान्येतानि चित्रकाव्योदाहरणानि भवितुं नार्हन्ति, एतेषु राजविषयकभावादिरूपस्य व्यङ्ग्यस्य सत्त्वेनाव्यङ्ग्यत्वलक्षणस्य चित्रकाव्यलक्षणस्याभावादित्येकं पूर्व्वापरविरुद्धाभिधानम् । तथा अलङ्कारद्वयस्य एकत्र उपनिपाते,-

“सेष्टा संसृष्टिरेतेषां भेदेन यदिह स्थितिः ॥५१॥

अविश्रान्तिजुषामात्मन्यङ्गाङ्गित्वन्तु सङ्करः” । (१०७०)

—इत्यनेन संसृष्टिसङ्कररूपं स्वतन्त्रमलङ्कारद्वयं वक्ष्यते, तदनुसारेण 'स्वप्नेऽपी'त्यादौ प्रभावप्रभवेत्याद्यनुप्रासस्यापि सत्त्वेन उपमानुप्रासयोः संसृष्टिसङ्करयोरन्यतर एवास्तु अलङ्कारो न तु उपमेति अस्योपमोदाहरणत्वाभिधानमसङ्गतमित्यपरं पूर्व्वापरविरुद्धाभिधानमिति । [पूर्व्वपक्षद्वयमंशतोऽङ्गीकृत्य समाधानमाह रसादिरिति । 'अव्यभिचारि' नियतावस्थितिकम् । 'अगणयित्वा' (अनावश्यकतया) अनालोच्य । 'तदलङ्काराः' काव्यालङ्काराः । अत्रेदं समाधानम्, इहालङ्कारस्यैव प्रकृततया तस्यैव विवेचनमपेक्षितम्, रसादिरूपस्तु व्यङ्ग्योऽर्थः (अन्ततः) अलङ्कारद्वयञ्च सर्व्वत्रैव काव्ये सम्भवति, तत्र 'स्वप्नेऽपी'त्यादौ राजविषयकभावादेर्यदि स्फुटत्वमङ्गीकरोषि, तदा ध्वनित्वं, गुणीभूतव्यङ्ग्यत्वं वा अस्तु, अथास्फुटत्वं चेत्, तदा चित्रत्वमस्तु ('अव्यङ्ग्यं त्ववरं स्मृत'मिति चित्रकाव्यलक्षणे अव्यङ्ग्यपदस्य अस्फुटव्यङ्ग्यपरत्वादिति) । एतद्विवेचनमत्राप्रकृततया उपेक्ष्य, प्रस्तुताः काव्यालङ्कारभूता उपमादयः केवलं प्रदर्शिताः, न तु चित्रकाव्यप्रभेदा अपीति । “तैः वाच्यालङ्कारनिर्णये निर्णेष्यन्ते”—इत्यनेन तु नैवमभिहितम्, 'वाच्यालङ्कारोदाहरणानि, तान्येव चित्रकाव्यप्रभेदोदाहरणानीति, किन्तु यदेवालङ्कारनिरूपणं, तदेव चित्रकाव्यप्रभेदनिरूपणमित्येवोक्तम्, (अत एव, 'निर्णेष्यन्ते'-इत्युक्तम्, न तूदाहरिष्यन्ते-इति), अलङ्कारप्रभेदे हि निरूपिते चित्रकाव्यप्रभेदनिरूपणाय नापरं किञ्चिदपेक्षितं स्यात्, तथाहि अनुप्रासचित्रमुपमाचित्रमित्येवमादयश्चित्रकाव्यप्रभेदाः अनिरूपणाय केवलमनुप्रासोपमादिनिरूपणमपेक्षन्ते, इतरांशस्य विज्ञातत्वात् ; ततश्च 'स्वप्नेऽपी'त्यादौ चित्रकाव्यत्वाभावेऽपि न प्राथमिकं पूर्व्वापरविरुद्धाभिधानमिति ।]

व्यभिचारीत्यगणयित्वैव तदलङ्कारा उदाहृताः। तद्रूषितत्वेन (१२) तु उदाह्रियमाणा विरसतामावहन्तीति पूर्व्वापरविरुद्धाभिधानमिति न चोदनीयम्॥

तद्वत् धर्मस्य लोपे स्यात्,
न श्रौती तद्धिते पुनः [१३]। [५]

---

एवं च द्वितीयमपि, तथाहि सत्यामेवोपमायां तत्र यत्र अपरस्य संसृष्टिः सङ्करो वा सम्भवतीति शुद्धोपमास्थल इव संसृष्ट्यादिस्थलेऽपि उपमासत्त्वमावश्यकमेव, इयांस्तु विशेषः, चमत्कारितायां यद्यलङ्कारान्तरस्य उपमया तुल्यकक्षत्वादि, तदा संसृष्टा संकीर्णा वा उपमा भवति, अतुल्यकक्षत्वादिको चेत्, शुद्धैव उपमा भवतीति; एतद्विवेचनन्तु अत्राप्रकृततया उपेक्ष्य, प्रकृतत्वात् काव्यालङ्कारभूता उपमैव केवलं प्रदर्शिता इति। यतश्च अत्रेऽपीत्यादौ अनुप्रासस्य यद्युपमातुल्यकक्षत्वमङ्गीकरोषि, तदाङ्गीक्रियताम् नाम संसृष्टा संकीर्णा वा उपमा, अथ न तुल्यकक्षत्वं, तदा शुद्धैव उपमेति न पूर्व्वापरविरुद्धाभिधानमिति। वस्तुतस्तु चलोपमाजातचमत्कारेण सातिशयेन अनुप्रासजातचमत्कारस्य तिरोधानात् शुद्धोपमैवालङ्कार इति अलमधिकेन।

(१२) ननु चित्रकाव्योदाहरणयोग्यतया रसादिरहितान्येव उपमोदाहरणानि किमिति नोपन्यस्तानीति अत आह तद्रूषितत्वेनेति।

(१३) अस्याभिसन्धिः, इवार्थविहितवतिरूप एव हि तद्धिते श्रौती भवेत्, स च वतिप्रत्ययः "तत्र तस्येव" (५।१।११६।)-इति सूत्रेण षष्ठीसप्तम्यन्तादेवोपमानपदात् विहिततया साधारणधर्मे एव सादृश्यबोधं जनयन् नियतमेव साधारणधर्मसाकाङ्क्ष इति साधारणधर्म्मोपादानं विना तादृशस्य तद्धितस्यासम्भवात् न तल्लुप्ता उपमाभेद इति।

धर्मः साधारणः, तद्धिते कल्पबादौ (१४) चार्थ्येव । तेन पञ्च (१५)। उदाहरणम् ॥

धन्यस्यानन्यसामान्यसौजन्योत्कर्षशालिनः ।
करणीयं वचश्चेतः, सत्यं तस्यामृतं यथा ॥ [वा० श्रौ०]
आकृष्टकरवालोऽसौ सम्पराये परिभ्रमन् ।
प्रत्यर्थिसेनया दृष्टः कृतान्तेन समः प्रभुः ॥ [वा० आ०]
करवाल इवाचारः [स० श्रौ]
तस्य वागमृतोपमा (१६)। [स० आ०]
विषकल्पं मनो वेत्सि, [त० आ०]
यदि जीवसि तत् सखे ॥

उपमानानुपादाने
वाक्यगाऽथ समासगा [ १७ ] ॥ २ ॥ [२] ।

---

(१४) तुल्यार्थवतिरिह, "तेन तुल्यं क्रिया चेद् वतिः"-(५।१।११५) इत्यनेन विहित इति तदर्थस्य साधारणधर्मरूपायां तुल्यक्रियायामेव पर्यवसानात् साधारणधर्मोपादानं विना नैव तुल्यार्थवतेः सम्भव इति तद्धितान्तरे दर्शयति कल्पबादाविति ।

(१५) वाक्यगा समासगेति द्विविधा श्रौती, वाक्य-समास-तद्धित-गेति त्रिविधा आर्थीति मिलित्वा धर्मलोपे लुप्ता पञ्चविधा ।

(१६) अमृतोपमेति अमृतेनोपमीयते या, अमृतमुपमा (उपमानं) यस्या इति वा समासः । विषकल्पमिति अत्र "ईषदसमाप्तौ कल्पब्देश्यदेशीयरः"-(५।३।६७ पा०)-इति सूत्रेण विहितस्य कल्पप्प्रत्ययस्य (विषकल्पं मन इति सामानाधिकरण्येन निर्देशात्) ईषदसमाप्तिविशिष्टो धर्मोऽर्थः, ईषदसमाप्तिश्च किञ्चिन्न्यूनसकलधर्मसम्बन्धरूपा उपमेति अत्र तदुपमायाः (तुल्यादिपदवत्) विशेषणतया वाच्यत्वात् आर्थीति ।

(१७) उपमानपदादेव उपमाप्रतिपादकस्य वतिप्रभृतितद्धितस्य

सअल-करण-पर-वीसाम-सिरि-विअरणं ण सरसकव्वस्स ॥
दीसइ अह वा णिसम्मइ सरिसं अंसंसमेत्तेण (१८) ॥

कव्वस्सेत्यत्र कव्वसममिति, सरिसमित्यत्र गुणमिति पाठे एषैव समासगा ॥

वादेर्लोपे [१९] समासे सा कर्माधारक्यचि क्यङि]
कर्मकर्त्रोर्णमुलि [२०], [६]

---

विधानात् तदनुपादाने तद्धितप्रासम्भवेनात्र न तद्धितगा सम्भवति, नापि श्रौती, इवादीनां उपमानान्वितत्वैव स्वार्थबोधकत्वनियमेन उपमानानुपादाने तेषामुपादानासम्भवात्, अतो द्विविधैव । एवमेव प्रदीपः, अतश्च दर्पणकृदुद्भावितं श्रौत्यार्थीभेदेन चातुर्विध्यं न रुचिरम् ।

(१८) सकलकरणपरविश्रामश्रीवितरणं न सरसकाव्यस्य ।
दृश्यतेऽथ वा निशम्यते सदृशमंशांशमात्रेणेति सं० ।

"अस्मादृग्दर्शनश्रवणाविषयत्वेन दुर्लभतया उत्कृष्टगुणम् अस्मदगोचरं किञ्चित् उपमानं भविष्यतीति सादृश्यापर्यवसानादुपमानलुप्तेयमुपमा" इति उद्योतकृत् । "उपमानवाचकात् वत्पदादनन्तरम् इवादेः सम्भवस्तदनुपादानमप्युपमानानुपादानम्, तेनात्र सदृशपदेन सामान्यत उपमानोक्तावपि न क्षतिः सदृशपदादिशब्दप्रयोगात्" इति तु महेश्वरः ।

(१९) अत्र उपमा वाक्यगा न सम्भवति, मुखं चन्द्रवदाचरते इत्येतावन्मात्रेण उपमाया अप्रतीतेः, नापि तद्धितगा श्रौती वा सम्भवति, वत्यादीनां तद्धितानाम्, इत्यादीनाञ्च औपम्यप्रतिपादकतया तत्प्रयोगे औपम्यप्रतिपादकलोपासम्भवादित्यन्यथा विभजते वादेरिति एवमेव प्रदीपः । "उपमानादाचारे"-इति-(३।१।१०पा०)-सूत्रेण कर्मपदात्, "अधिकरणाच्च" इति तत्रत्यवार्त्तिकेन च अधिकरणपदात् च क्यच् विहितः । एवं "कर्तुः क्यङ्सलोपश्च"-इति(३।१।११पा०) इति सूत्रेण कर्तृपदात् क्यङ् विहितः । तथा "उपमाने कर्मणि च" इति (३।४।४५।पा०) इति सूत्रेण कर्मणि कर्तरि उपपदे णमुल् विहितः । ततश्च यद्यपि क्यच्क्यङ्णमुलां प्रयोगे उपमा प्रतीयते, तथापि चैषां यथा नोपमावाचकत्वं, तथोदाहरणव्याख्यानावसरे एव प्रतिपादयिष्याम ।

(२०) 'कर्मकर्त्रोर्णमुलोरतद्धितलोपे किलुमावगा'-इति वक्ष्यमाणात् नात्र छन्दोभङ्गाशङ्का कार्या ।

वाचकस्य उपमाद्योतक इति वादेरुपमाप्रतिपादकस्य लोपे यद्,-समासेन, कर्म्मणोऽधिकरणाच्चोत्पन्नेन क्यचा, कर्त्तुः क्यङा, कर्मकर्त्रोरुपपदयोर्णमुला च भवेत्। उदाहरणम्,-

तत: कुमुदनाथेन कामिनीगण्डपाण्डुना।
नेत्रानन्देन चन्द्रेण माहेन्द्री दिगलङ्कृता॥ [द्वयोः स०]

तथा,

असितभुजगभीषणासिपत्रो
रुहरुहिकाहितचित्ततूर्णचारः।
पुलकिततनुरुत्कपोलकान्तिः
प्रतिभटविक्रमदर्शनेऽयमासीत्॥ [बहूनां स०]

पौरं सुतीयति जनं, समराक्तरेऽसौ [क०क्यच्]
अन्तःपुरीयति विचित्रचरित्रचञ्चुः। [अ०क्यच्]
नारीयते समरसीम्नि कृपाणपाणेः [क्यङ्]
आलोक्य तस्य चरितानि सपत्नसेना॥

मृधे निदाघघर्मांशुदर्शं पश्यन्ति तं परे। [कर्म्म०णमुल्]
स पुनः पार्थसञ्चारं सञ्चरत्यवनीपतिः (२१)॥ [कर्तृ०णमुल्]

(२१) क्यच्क्यङ्णमुलामुपमावाचकत्वाभावेन एव उपमाप्रतिपादकस्य लोपः, तथाहि क्यच्क्यङोः केवल आचारस्तुल्याचारो वा सामान्यतोऽर्थः, विशेषाचारस्तु तत्तत्पदसान्निध्यात् प्रतीयते, यथा, 'पौरं जनं सुतीयति'-इत्यस्य, सुतकर्म्मकाचारतुल्यपौरजनकर्म्मकाचारकर्त्तेत्यर्थः, अत्राचारः स्नेहपालनादिः। 'समरान्तरेऽन्तःपुरीयति' इत्यस्य अन्तःपुराधिकरणकाचारतुल्यसमरान्तराधिकरणकाचारकर्त्तेत्यर्थः, अत्राचारः स्वच्छन्दविहारादिः। एवं 'नारीयते' इत्यस्य नारीकर्तृकाचारतुल्याचारकर्त्तेत्यर्थः, अत्राचारः पलायनविनयादिः। ततश्च क्यच्क्यङोराचारगततुल्यताप्रतिपादकत्व-

एतद्-

द्विलोपे क्विप्समासगा [२२] ॥ ९ ॥ [२]

एतयोर्धर्म्मवाद्योः । उदाहरणम्,-

सविता विधवति, विधुरपि
सवितरति, तथा दिनन्ति यामिन्यः ।
यामिनयन्ति दिनानि च
सुखदुःखवशीकृते मनसि (२३) ॥ [क्विप्]

---

मेवास्ति, न तु प्रकृतोदाहरणतया विवक्षितायाः सुतादिना (उपमानेन) पौरजनादेः (उपमेयस्य) उपमायाः प्रतिपादकत्वमिति । सा च उपमा तुल्याचारप्रतीत्यनन्तरं (तुल्याचारं साधारणधर्म्मीकृत्य) प्रतीयते । एवं यल्लोऽपि क्रियागततुल्यत्वमर्थः, तथाहि 'निदाघघर्म्मांशुदर्शं पश्यन्ति तं परे' इत्यस्य निदाघघर्म्मांशुकर्मकदर्शनक्रियातुल्यातत्कर्मकदर्शनकर्त्तारः परे इत्येवमर्थः, 'पार्थसञ्चारं सञ्चरति' इत्यस्य पार्थकर्तृकसञ्चारक्रियातुल्य-सञ्चरणकर्त्तृत्वमर्थः, ततश्च णमुलः क्रियागततुल्यत्वप्रतिपादकत्वेऽपि प्रकृताया (निदाघघर्म्मांशुपार्थाभ्याम् उपमानाभ्याम् अवनीपतेरुपमेयस्य) उपमायाः प्रतिपादकत्वं नास्ति, उत्तरकालन्तु तुल्यक्रियाप्रतीतिमूला तत्प्रतीतिर्भवति । एवञ्च दर्पणे यदत्र दोषदर्शनम्, तत् स्वच्छेऽपि मुखे मलिनिमदर्शनमिव, दर्शयमाबिन्यश्रिन्तृम्भितमेवेति प्रतिभाति ।

(२२) 'अथ द्विलोपे विभजनीया, तत्र धर्म्मवाद्योर्लोपे वाक्यगा न सम्भवति, शिष्टयोरुपमानोपमेययोर्मुखं चन्द्र इत्येतावन्मात्रयोरुपादाने उपमाया अनवगमात् । नापि तद्धितगा, तद्धितस्यैव कल्पबादिरूपस्य उपमाद्योतकत्वेन तल्लोपे द्विलोपासम्भवात् । नापि श्रौती, इवाद्यभा-वादित्यन्यथा विभजते एतदिति' इति प्रदीपः ।

(२३) अत्र ''कर्त्तुः क्यङ्सलोपश्च'(३।१।११) इति सूत्रव्याख्यानाव-सरे "सर्वप्रातिपदिकेभ्यः क्विप् वा वक्तव्यः" इति वार्त्तिकेन विहितःक्विप्-प्रत्यय एव तुल्याचाररूपसाधारणधर्म्मशायक इति । तत्र "वेरपृक्तस्य" (६।१।६७) इति सूत्रेण नित्यं लुप्तत्वात् धर्म्मलोपः ।

परिपन्थिमनोराज्यशतैरपि दुराक्रमः ।

सम्परायप्रवृत्तोऽसौ राजते राजकुञ्जरः (२४) ॥ [स०]

धर्मोपमानयोर्लोपे वृत्तौ वाक्ये च दृश्यते (२५) । [२]

ढुण्ढुल्लन्तो मरिहिसि कण्टअकलिआइं केअइवणाइं ।

मालइकुसुमसरिच्छं भमर, भमन्तो ण पाविहिसि (२६)॥

कुसुमेण सममिति पाठे वाक्यगा ।

क्वचिद्वाद्युपमेयासे, [१]

आसे निरासे ।

अरातिविक्रमालोकविकस्वरविलोचनः ।

कृपाणोदग्रदोर्दण्डः स सहस्रायुधीयति (२७) ॥

अत्रात्मा उपमेयः ।

---

(२४) राजा कुञ्जर इवेति "उपमितं व्याघ्रादिभिः सामान्याप्रयोगे"-(२।१।५६। पा०) इति सूत्रेण समासः । दुराधर्षत्वस्य साधारणधर्मस्यातिप्रसिद्धतया तदनुपादानेऽपि नोपमाप्रतीतिव्याघातः ।

(२५) तद्धिते तु नेयं, उपमानलोपे तद्धितस्यैवाभावात् । नापि श्रौती उपमाऽप्रयोगे इवादेरप्रयोगादिति प्रदीपः । वृत्तौ समासे ।

(२६) ढुण्ढुणायमानो मरिष्यसि कण्टककलितानि केतकीवनानि ।

मालतीकुसुमसदृशं भ्रमर, भ्रमन्नपि न प्राप्स्यसीति सं० ।

ढुण्ढुणायमानः ढुण्ढुणित्याकारशब्देन प्रार्थयमान इति निदर्शनकृत् । अत्र प्रकृतत्वात् मालती उपमेया, कुसुमान्तरस्याप्राप्त्युपदेशेन त्वदप्राप्यमुत्कृष्टगुणमस्योपमानमिति प्रतीतेरस्योपमितिक्रियानिष्पत्तिरिति उद्योतकृत् ।

(२७) सहस्रमायुधानि यस्य, तमिवात्मानमाचरतीत्यर्थात् कर्मत्वेनोपमेयभूत आत्मा कर्मत्वेन नोपात्तः । प्रदीपे तु सहस्रारायुधीयतीति पाठः, तत्र, सहस्रारं चक्रमायुधं यस्य (विष्णोः), तमिवाचरतीत्यर्थः ।

त्रिलोपे च समासगा ॥ ४ ॥ [ १ ]

त्रयाणां वादिधर्म्मोपमानानाम् । उदाहरणम्,-

तरुणिमनि कृतावलोकना ललितविलासवितीर्णविग्रहा ।
स्मरशरविसराचितान्तरा मृगनयना हरति मुनेर्मनः ॥

अत्र सप्तम्युपमानेत्यादिना यदा समासलोपौ भवतः, तदोदाहरणम् (२८) ।

क्रूरस्य (२९) आचारस्यायःशूलतयाऽध्यवसयात्, अयः-शूलेनान्विच्छति, 'आयःशूलिकः'-इत्यतिशयोक्तिर्नतु क्रूरा-चारोपमेय-तैक्ष्ण्यधर्म्म-वादीनां लोपे त्रिलोपेयमुपमा ।

---

(२८) "अत्र यदि मृगशब्देन लक्षणया तन्नयने विवक्ष्येते, तदा नेद-मुदाहरणं [मृगपदस्यैव उपमानप्रतिपादकस्य सत्त्वप्रसङ्गात्], यदा तु मृग-नयने इव (चञ्चले) नयने यस्या इत्यर्थो विवक्ष्यते, तदा सप्तम्युपमानपूर्व्व-पदस्य बहुव्रीहिरुत्तरपदलोपश्च इति (२।२।२४। पा० सू०) वार्त्तिकेन उपमानपूर्व्वपदस्य नयनशब्देन बहुव्रीहौ उपमानवाचिमृगलोचनेतिपूर्व्वपदे उत्तरपदभूतस्य नयनशब्दस्य लोपे उपमेयभूतस्य नयनमात्रस्योपादानात् इद-मुदाहरणम्" इति प्रदीपः । त्रिलोपे प्रकारान्तरासम्भवात् एकविधैवोक्ता ।

(२९) अत्र 'उपमानमात्रोपादानेऽपि त्रिलुप्ता सम्भवति, यथा 'आयः-शूलिकः' इति, अत्र हि क्रूराचार उपमेयः, तीक्ष्णत्वादिरूपः साधारणो धर्म्मः, इवादिश्च नोपात्तः, केवलमुपमानभूतमयःशूलमेवोपात्तम्' इति केचिदाहुः, तन्निराकरोति क्रूरस्येति । अन्विच्छति व्यवहरति । इदमत्र निराकरणम्, नेह उपमानोपमेयभावः प्रतीयते, तद्बोधकाभावात्, किन्तु क्रूराचार एव निगीर्णस्वरूपः अयःशूलतादात्म्येन (आरोपात्) निर्दिष्ट इत्यतिशयोक्तिरलङ्कार इति ।

एवमेकोनविंशतिर्लुप्ताः(२०),पूर्णाभिः सह पञ्चविंशतिः ॥

'अनयेनेव (२१) राज्यश्रीर्दैन्येनेव मनस्विता ।
मम्लौ साथ विषादेन, पद्मिनीव हिमाम्भसा ॥

-इत्यभिन्ने साधारणे धर्म्मे,

ज्योत्स्नेव नयनानन्दः, सुरेव मदकारणम् ।
प्रभुतेव समाकृष्टसर्व्वलोका नितम्बिनी ॥

-इति भिन्ने च तस्मिन्, एकस्यैव बहूपमानोपादाने मालोपमा,
यथोत्तरमुपमेयस्योपमानत्वे, पूर्व्ववदभिन्नभिन्नधर्म्मत्वे,

अनवरतकनकवितरण-
जललवभृतकरतरङ्गितार्थिततेः ।
भणितिरिव मतिर्मतिरिव
चेष्टा,चेष्टेव कीर्त्तिरतिविमला ॥ [अभि०ध०]

---

(२०) धर्म्मलोपे पञ्च, उपमानलोपे द्वौ, इवादिलोपे षट्, धर्म्मेवादिलोपे द्वौ, धर्म्मोपमानयोर्लोपे द्वौ, इवोपमेययोर्लोपे एकः, त्रिलोपे च एक इति मिलित्वैकोनविंशतिर्लुप्तोपमाप्रभेदाः । उपमानोपमेयादीनां लोपे उपमैव न सम्भवतीति तत्कृतप्रभेदो नोक्तः ।

(२१) ननु अन्येऽपि उपमाप्रभेदाः प्राचीनैरुक्ताः, तथाहि एकस्य उपमेयस्य बहूपमानसम्बन्धे मालोपमा, पूर्व्व-पूर्व्वस्य उपमेयस्य उत्तरोत्तरमुपमानत्वे रसनोपमा इति द्वौ भेदौ, तयोरपि यथाक्रमं बहूपमानानाम् उत्तरोत्तरोपमानानाञ्च साधारणधर्म्मस्य एकत्वेन भिन्नत्वेन च प्रत्येकं द्वैविध्यमिति मिलित्वा चत्वारो भेदाः,-इत्येवं प्राचीनप्रदर्शितबहुभेदसत्त्वे कथं पञ्चविंशतिविधत्वमित्याशङ्काम् उक्तचतुःप्रभेदप्रदर्शनपूर्व्वकम् (एवंविधयत्किञ्चिद्वैचित्र्यमादाय प्रभेदकरणे आनन्त्यदोषप्रसङ्गेन, पूर्व्वोक्तप्रभेदेषु यथासम्भवमेतेषामन्तर्भावेण च ) निराकरोति अनयेनेति ।

मतिरिव मूर्त्तिर्मधुरा, मूर्त्तिरिव सभा प्रभावचिता।
तस्य सभेव जयश्रीः शक्या जेतुं नृपस्य, न परेषाम्॥ [भि० ध०]

-इत्यादिका रसनोपमा च न लक्षिता, एवंविधवैचित्र्यसहस्रसम्भवात्, उक्तभेदानतिक्रमाच्च॥

उपमानोपमेयत्वे एकस्यैवैकवाक्यगे।

अनन्वयः,

उपमानान्तरसम्बन्धाभावो-(३२)-ऽनन्वयः। उदाहरणम्,-

न केवलं भाति नितान्तकान्ति-
र्नितम्बिनी सैव नितम्बिनीव।
यावद्विलासायुधलास्यवासा-
स्ते तद्विलासा इव तद्विलासाः॥

विपर्य्यास उपमेयोपमा तयोः॥ ५॥

तयोरुपमानोपमेययोः, (३३) परिवृत्तिः (अर्थात्) वाक्यद्वये, इतरोपमानव्यवच्छेदपरा (उपमेयेनोपमा इति) उपमेयोपमा।

---

(३२) अत्र बहुव्रीहिः समासः। एतच्चानन्वयपदव्युत्पादनं, लक्षणन्तु कारिकोक्तम्-एकस्मिन् वाक्ये एकस्य (तत्सदृशवस्त्वन्तराभावप्रतिपादनाय) उपमानोपमेयभावोऽनन्वय इत्येव ग्राह्यम्। उपमायां न एकस्यैव ह्युपमानोपमेयभावः, उपमेयोपमायान्तु वाक्यद्वये च इति तयोर्व्यवच्छेदः। स्वेन स्वस्य उपमाऽनन्वय इति तु निष्कर्षः।

(३३) परिवृत्तिरिति विपर्य्यासपदस्यार्थः। एकवाक्ये परिवर्त्तनासम्भवात्, 'अर्थात्' 'वाक्यद्वये' इति उक्तम्। इतरोपमानेति विशेषणम्, एकस्य उभयत्र साधारणधर्मत्वे सतीति विशेषणं ध्वनयति, एकेन हि धर्मेण तस्य साम्येऽपरत्र वर्णिते, तेन धर्मेण अपरस्य तत्र साम्यमर्थप्राप्तमपि

उदाहरणम्,

कमलेव मतिर्मतिरिव कमला,
तनुरिव विभा, विभेव तनुः।
धरणीव धृतिर्धृतिरिव धरणी
सततं विभाति बत यस्य॥

**सम्भावनमथोत्प्रेक्षा प्रकृतस्य समेन यत् (३४)।**

---

पूनः शब्देनोच्यमानं तेन धर्म्मेण तयोः सदृशं तृतीयं वस्तु व्यवच्छिनत्तीति उद्योतकृत् प्राह च। अत एव सविता विधवतीत्यादौ सत्यपि उपमानोपमेययोर्वाक्यद्वये विपर्य्यासे साधारणधर्म्मस्य भिन्नतया नोपमेयोपमा, तत्र हि सविता विधवतीत्यत्र शीतकरत्वादिः साधारणो धर्म्मः, विधुरपि सवितरतीत्यत्र तु उष्णकिरणत्वादिः साधारणो धर्म्मः इति। अयमत्र निष्कर्षः, पूर्व्ववाक्योक्तसाधारणधर्म्ममेव साधारणधर्म्मीकृत्य पूर्व्ववाक्योक्तेन उपमेयेन पूर्व्ववाक्योक्तस्य उपमानस्य उपमा उपमेयोपमेति।

(३४) उत्कटैककोटिः संशयः सम्भावनं। संशये हि कोटिद्वयं (पक्षद्वयं) वर्त्तते यथा 'अयं पुरुषो न वा ?' इत्यत्र एका कोटिः पुरुषस्य विधिः अपरा च 'न वा' इति पुरुषस्य निषेधः। यस्मिन् संशये कोटिद्वयमध्ये एकस्याः कोटेः उत्कटत्वं (निश्चितप्रायत्वम्) स एव संशयः सम्भावनमित्युच्यते। यथोदाहरणे पद्मलक्ष्म्याः पादलग्नत्वं निश्चितप्रायमित्योक्तम्। प्रकृतस्य (उपमेयस्य)। समेन समानतया। उपमेयस्य उपमानत्वेन सम्भावना उत्प्रेक्षा इति तु निष्कर्षः, यथोदाहरणे उपमेयभूता पादशोभा उपमानभूत-यथोक्तहर्षहेतुक-पादपतित-पद्मशोभात्वेन सम्भाविता। अलङ्कारत्वे प्रतीतिविशेषणं प्रकरणप्राप्तमस्त्येव, तेन प्रतिभानुत्थापितायाः वास्तविकसम्भावनायाः असुन्दरसाधारणधर्म्ममूलायाः सम्भावनायाश्च चमत्काराजनकतया अलङ्कारत्वाभावेन नोत्प्रेक्षात्वप्रसङ्गः, रमणीयधर्म्मनिबन्धना प्रतिभोत्थापितैव हि सम्भावना चमत्करोतीति सैवालङ्कारः। तद्वाचकाश्च ध्रुवम्-प्रायो-नूनम्-मन्ये-शङ्के-अवैमि-ऊहे-तर्कयामि-जाने-उत्प्रेक्षे-इत्येवमादयो बहवः, एवं 'उपमानस्य अलोकसिद्धत्वे इवशब्दोऽपि' -इति चक्रवर्त्ती। 'तिङन्तसमभिव्याहृत इवशब्दः सर्व्वत्रैवोत्प्रेक्षावाचकः, नामसमभिव्याहृतस्तु इवशब्दस्तत्रैव उत्प्रेक्षाबोधकः, यत्र सम्भावनोपयुक्तविशेषणदानं।

समेन उपमानेन । उदाहरणम्,-

उन्मेषं यो मम न सहते जातिवैरी निशायाम्,
इन्दोरिन्दीवरदलदृशा तस्य सौन्दर्यदर्पः ।
नीतः शान्तिं प्रसभमनया वक्त्रकान्त्येति हर्षात्
लग्नां मन्ये ललिततनु, ते पादयोः पद्मलक्ष्मीः ॥
लिम्पतीव तमोऽङ्गानि, वर्षतीवाञ्जनं नभः (३५) ।

-इत्यादौ व्यापनादि लेपनादिरूपतया सम्भावितम् (३६) ।

---

* यथा,-

बालेन्दुवक्राण्यविकासभावात् बभुः पलाशान्यतिलोहितानि ।
सद्योवसन्तेन समागतानां नखक्षतानीव वनस्थलीनाम् ॥

-इत्यादौ यत्र-क्वचित् स्थितैरपि नखक्षतैर्वक्रत्वलौहित्यादिना उपमाया वक्तुं शक्यत्वेऽपि सद्योवसन्तनायकसमागत-वनस्थलीसम्बन्धित्व-रूपविशेषणकल्पनम् उत्प्रेक्षागमकं । तदन्यस्थले इवशब्दः उपमाबोधकः' इति तु उद्योतकृत् । दर्पणकृतस्तु,-नुशब्दोऽपि उत्प्रेक्षावाचक इति, एवम् उत्प्रेक्षावाचकानामेषां सम्भावनाबोधकत्वाभावे नायमलङ्कारः, यथा,-

यदेतच्चन्द्रान्तर्जलदलवलीलां वितनुते,
तदाचष्टे लोकः शशक इति नो मां प्रति तथा ।
अहं त्विन्दुं मन्ये त्वदरिविरहाक्रान्ततरुणी-
कटाक्षोल्कापातव्रणकिणकलङ्काङ्किततनुम् ॥

इत्यादौ ( निश्चयार्थकतया ) नायमलङ्कार इति, तथा 'उत्प्रेक्षाबोधकेव-शब्दस्य क्वचित् प्रतीयमानोऽपि भवति, यथा,

तन्वङ्ग्याः स्तनयुग्मेन मुखं न प्रकटीकृतम् ।
हाराय गुणिने स्थानं न दत्तमिति लज्जया ॥

इत्यत्र लज्जयेवेत्युत्प्रेक्षाबोधक इवशब्दो झटिति प्रतीयते, स्तनयोर्लज्जाया असम्भवात्, इवशब्दं विना वाक्यार्थस्याप्रतीतेः'-इति च आहुः ।

(३५) असत्पुरुषसेवेव दृष्टिर्निष्फलतां गतेति [illegible] । अत्रार्धे उपमा ।

(३६) न तु, 'तमसो० लेपनकर्तृत्वमत्रोत्प्रेक्ष्यम्'-इत्यलङ्कारसर्वस्वकारोक्तम् युक्तम्, व्यापनस्य लेपनतयोत्प्रेक्षणेनैव चमत्कारपर्यवसानात् तत्कर्तृत्वपर्यन्तोत्प्रेक्षणे प्रयोजनविरहेण तस्याविवक्षितत्वादिति ध्येयः ।

**ससन्देहस्तु (भेदोक्तौ तदनुक्तौ च) संशयः(२७)॥६॥**

भेदोक्तौ यथा,-

अयं मार्त्तण्डः किं ? स खलु तुरगैः सप्तभिरितः,
कृशानुः किं ? सर्व्वाः प्रसरति दिशो नैष नियतम्।
कृतान्तः किं ? साक्षान्महिषवहनोऽसाविति चिरं
समालोक्याजौ त्वां विदधति विकल्पान् प्रतिभटाः॥

---

(२७) अत्र प्रकृतस्य समेनेति पूर्व्वस्मादनुवर्त्तते, तेन, उपमेयस्य उपमानरूपतया संशयः ससन्देहालङ्कार इति लक्षणम्। अत्रापि अलङ्कारत्वे सतीति विशेषणस्य सत्त्वात् प्रतिभानुत्थापितेऽचमत्कारिणि 'स्थाणुर्वा पुरुषो वा' इति संशये न संशयालङ्कारत्वप्रसङ्गः। संशयश्च उभयस्मिन् पक्षे तुल्यरूपो ग्राह्यः, तेन सम्भावनाया अपि संशयविशेषरूपतया नोत्प्रेक्षालङ्कारे ससन्देहालङ्कारत्वप्रसङ्गः, सम्भावनाया एकस्मिन् पक्षे आधिक्येन उभयत्र तुल्यरूपत्वाभावादिति। अस्य च ससन्देह इति नाम महेश्वरं विना प्रायः सर्व्व एवाङ्गीचक्रुः, ततश्च (बहूनां सन्देहानां प्रायशः सत्त्वात्) सन्देहेन सह वर्त्तमानः सन्देहः ससन्देह इति यथाकथञ्चित् व्युत्पत्तिः कार्य्या। अयमेव सन्देहालङ्कारसंशयालङ्कारशब्दाभ्यां व्यवह्रियते।

स चायं भेदोक्त्यनुक्तिभ्यां द्विविधः। भेदो वैधर्म्म्यम्, तच्च उपमानोपमेययोरेकस्मिन् अवर्त्तमानमपरस्मिन् वर्त्तमानं धर्मविशेषरूपम् ग्राह्यं, यथोदाहरणद्वये, यथाक्रमं सप्ताश्वसम्बन्ध उपमेये राजनि अवर्त्तमानः उपमाने सूर्य्ये एव वर्त्तते, एवं चलितपवित्रमस्तुपनं उपमाने चन्द्रादाववर्त्तमानं उपमेये मुखे एव वर्त्तते इति तयोरुक्तिरत्र वैधर्म्म्योक्तिरिति। अयमाद्यः प्रभेदोऽपि द्विविधः, निश्चयगर्भो निश्चयान्तश्चेति। निश्चयः गर्भे (मध्ये) यस्येति व्युत्पत्त्या आद्यसंशयानन्तरं निश्चये जातेऽपि पुनः संशयः, स निश्चयगर्भः। निश्चयश्चात्र उपमानभिन्नत्वेन उपमेयावधारणरूपो ग्राह्यः, एकोपमानभिन्नत्वेनावधारणेऽपि उपमानान्तररूपेण संशयोदयसम्भवात्, संशयस्य निश्चयगर्भत्वं नासम्भवि। यथोदाहरणे, सूर्य्ये सप्ताश्वसम्बन्ध-

भेदोक्ताविित्यनेन न केवलमयं निश्चयगर्भो, यावन्निश्चयान्तोऽपि सन्देहः स्वीकृतः । यथा,-

इन्दुः किं ? क्व कलङ्कः, सरसिजमेतत् किमम्बु कुत्र गतम् ।
ललितसविलासवचनैर्मुखमिति, हरिणाक्षि, निश्चितं परतः ॥

किन्तु निश्चयगर्भ इव नात्र निश्चयः प्रतीयमान इति उपेक्षितो भट्टोद्भटेन । तदनुक्तौ यथा,-

अस्याः सर्गविधौ प्रजापतिरभूच्चन्द्रो नु कान्तिप्रदः ?
शृङ्गारैकरसः स्वयं नु मदनो? मासो नु पुष्पाकरः ? ।
वेदाभ्यासजडः कथं नु (२८) विषयव्यावृत्तकौतूहलो
निर्म्मातुं प्रभवेन्मनोहरमिदं रूपं पुराणो मुनिः ? ॥

---

रूपवैधर्म्यादर्शनेन राज्ञः सूर्यभिन्नत्वावधारणेऽपि कथान्तुत्वरूपेणापि पुनः संशयः संभवत्येव, इत्यमेव निश्चयगर्भत्वमुपपद्यते । निश्चयः अन्ते (समाप्तौ) यस्येति व्युत्पत्त्या यादृशसंशयानन्तरं निश्चये जाते (निश्चयस्यैव संशयनिवर्त्तकतया) पुनः संशयानुदयः स निश्चयान्तः । उपमेयस्वरूपेण उपमेयावधारणमेव उपमेये उपमानसंशयनिवर्त्तकमिति तदेवात्र निश्चयपदेनोच्यते, तादृशनिश्चयानन्तरमेव हि संशयानुदयेन निश्चयान्तत्वमुपपद्यते, यथोदाहरणे, ललितसविलासवचनादिरूपवैधर्म्यादर्शनात् मुखत्वरूपेण मुखस्य निश्चये पुनः केनापि उपमान-रूपेण न संशयः । परन्तु 'वाच्यस्य संशयस्य वाच्येनैव निश्चयेन निवृत्तिवर्णनमुचितमिति निश्चयान्तस्थले निश्चयस्य वाच्यत्वमावश्यकम्, तस्य वाच्यत्वे च न तादृशचमत्कारित्वम्'-इति मन्यमानेन भट्टोद्भटेनायं निश्चयान्तप्रभेद उपेक्षितः, [illegible] चमत्कृतत्वमतः; ततश्च निश्चयगर्भस्थले निश्चयपदेन पूर्व्वोक्तोपमानभिन्नत्वेन निश्चयः वाच्यो वा प्रतीयमानो वा ग्राह्यः । निश्चयान्तस्थले तु निश्चयपदेन उपमेयरूपेणैव निश्चयो ग्राह्यः, स च वाच्य एव नियतः इति । एतत्सर्वं वृत्तौ स्पष्टम् ।

(२८) कथं नु प्रभवेत्, नैव प्रभवेदित्यर्थः, एवञ्चात्र उत्तरार्द्धे सम्बन्धेऽसम्बन्धरूपा अतिशयोक्तिः ।

**तद्रूपकमभेदो य उपमानोपमेययोः।**

**अतिसाम्यात् (अनपह्नुतभेदयोः) अभेदः (३९)।**

**समस्तवस्तुविषयम्, श्रौता आरोपिता यदा ॥७॥**

**आरोपविषया इव(४०)आरोप्यमाणा यदा शब्दोपात्ताः,**

---

(३९) परस्परविरुद्धधर्म्मवत्त्वेन उपस्थिततया प्रकाशितविभिन्नस्वरूपयोरपि उपमानोपमेययोरतिसाम्यप्रदर्शनाय काल्पनिकोऽभेदारोपो रूपकमिति निष्कर्षः, यथा 'मुखचन्द्रं पश्य'-इत्यादौ मुखत्व-चन्द्रत्वरूपपरस्परविरुद्धधर्म्मवत्तया उपस्थितयोर्मुखचन्द्रयोरभेदारोप इति। अतिशयोक्तौ उपमेयस्य न उपमेयगतधर्म्मवत्तया उपस्थितिरिति ततो भेदः, अपह्नुतौ तु उपमेयगोपनेन भेदस्याप्यपह्नवः, अत्र तु न स इति ततोऽपि भेदः। सारोपलक्षणासम्भवस्थले रूपकम्, साध्यवसानलक्षणासम्भवस्थले तु अतिशयोक्तिः। एवं मुखपद्मेत्यादिसमासस्थले विशेषणस्य मुख्यतया, उपमानगतत्वे रूपकम्, उपमेयगतत्वे उपमा, उभयत्र तुल्यरूपत्वे त्वनयोः सङ्करः, अत्र यथाक्रममुदाहरणत्रयम्, विकसितं मुखपद्ममिति, सहास्यं मुखपद्ममिति, रमणीयं मुखपद्ममिति चेति।

तत्र रूपकं तावत् त्रिविधं, साङ्गं, निरङ्गं, परम्परितञ्चेति। तत्रापि साङ्गं समस्तवस्तुविषयम्, एकदेशविवर्त्ति चेति द्विविधम्। निरङ्गञ्च केवलं मालारूपञ्चेति द्विविधम्। परम्परितन्तु श्लिष्टाश्लिष्टशब्दनिबन्धनतया द्विविधं सत् प्रत्येकं केवलं मालारूपञ्चेति चतुर्व्विधमिति मिलित्वा रूपकस्याष्टौ भेदाः। अत्र प्रथमं समस्तेत्यादिना साङ्गमेतदित्यन्तेन साङ्गस्य प्रभेदद्वयं क्रमेण प्रदर्शयता साङ्गं निरूपितम्।

(४०) आरोपविषयाः आरोपाधिकरणानि उपमेयाः। आरोपविषयस्यानुपादानेऽतिशयोक्तेरेव प्रसङ्गः, अतः रूपके आरोपविषयस्योपादानं नियतमेवेति आरोपविषया इवेति दृष्टान्ततया उक्तम्। आरोप्यमाणाः उपमानानि।



तदा (समस्तानि वस्तूनि (४१) विषयोऽस्येति) समस्तवस्तुविषयम्। आरोपिता इति-बहुवचनमविवक्षितम्। यथा,-

ज्योत्स्नाभस्मच्छुरणधवला बिभ्रती तारकास्थी-
न्यन्तर्धानव्यसनरसिका रात्रिकापालिकीयम्।
द्वीपाद् द्वीपं भ्रमति दधती चन्द्रमुद्राकपाले
न्यस्तं सिद्धाञ्जनपरिमलं लाञ्छनस्य छलेन (४२)॥

अत्र (४३) पादत्रये, अन्तर्धानव्यसनरसिकत्वमारोपितधर्म्म एवेति रूपकपरिग्रहे साधकमस्तीति तत्सङ्कराशङ्का न कार्य्या।

---

(४१) वस्तूनि आरोप्यमाणानि। विषयः शब्दप्रतिपाद्यः। अविवक्षितमिति अन्यथा आरोप्यमाणस्य एकत्वे द्वित्वे वाऽस्यासम्भवः स्यादिति शेषः।

(४२) छुरणमनुलेपः। व्यसनं कौतुकम् क्रीड़ा वा। कापालिकी तत्स्वरूपा विशेषयोगिनी। मुद्राकपालं दीक्षाकालगृहीतोपकरणम्। परिमलश्चूर्णम्। अत्र आरोप्याणां भस्मादीनां सर्व्वेषां शब्दोपात्तत्वात् समस्तवस्तुविषयरूपकम्, एवं कापालिक्या आरोप इव तदङ्गानां (तदुपकरणानां तदानुषङ्गिकाणां) भस्मादीनामप्यारोपात्तस्य साङ्गत्वम्। 'भस्माभिन्ना ज्योत्स्ना इत्यादिरीत्या उपमानविशेषणक एव मयूरव्यंसकादित्वात् समासः कार्य्य इति नोपमानपदस्य प्रागभावनियमः, मयूरव्यंसकादिपदेन सर्व्वाण्येव रूपकोदाहरणानि गृह्यन्ते'-इत्युद्योतकृतामाशयः। अस्य तु पद्यस्य [illegible]।

(४३) ननु ज्योत्स्ना भस्मेवेत्यादिरीत्या उपमितसमासस्यापि सम्भवेन अत्र उपमा वा स्यात् रूपकं वेति संशयोदयेन उपमया रूपकस्य सन्देहसङ्कर एव स्यात्, न तु रूपकमित्याशङ्कां निराकरोति अत्रेति। इदमत्र निराकरणम्, अन्तर्धानव्यसनरसिकत्वं हि कापालिक्या एव सम्भवति, न तु रात्रेः, उपमापरिकल्पने तु उपमेयभूताया रात्रेरेव प्राधान्येन तत्र नान्तर्धानव्यसनरसिकत्वस्य मुख्यतयाऽन्वयः स्यादिति रूपकमेवाश्रीयते। अत्र

**श्रौता आर्थाश्च ते यस्मिन्नेकदेशविवर्त्ति तत्।**

केचिदारोप्यमाणाः शब्दोपात्ताः, केचिदर्थसामर्थ्या-दवसेयाः-इत्येकदेशविवर्त्तनात् (४४) एकदेशविवर्त्ति। यथा,-

जस्स रणंतउरए करे कुणंतस्स मण्डलग्गलअं।
रससंमुही वि सहसा परंमुही होइ रिउसेणा (४५)॥

अत्र रणस्यान्तःपुरत्वमारोप्यमाणं शब्दोपात्तं, मण्डलाग्र-लतायाः नायिकात्वं, रिपुसेनायाश्च प्रतिनायिकात्वम् अर्थ-सामर्थ्यात् (४६) अवसीयते-इत्येकदेशे विशेषेण वर्त्तनात् एकदेशविवर्त्ति।

**साङ्गमेतत्,**

उक्तद्विभेदं सावयवम् (४७)॥

---

'न कार्य्या'-इत्यनन्तरम् "अथ वा न्यस्तं लाञ्छनमञ्जनं कुमुदिनीप्रोल्लास-विधिमिदमिति चतुर्थः पादः, एवं रूपकेणैव निर्व्वाहः"-इति क्वचित् पाठः। स च बहुभिष्टीकाकृद्भिरदृष्टतया अनाकर इवाभाति।

(४४) 'एकदेशविवर्त्तनात्' एकस्मिन् देशे एकस्मिन् अंशे विवर्त्तनात् विशेषेण वर्त्तनात्। अर्थात् आरोप्यमाणस्य सर्व्वत्र वाच्यत्वे एकांशे प्रतीय-मानत्वरूपस्य विशेषस्य सत्त्वात् एकदेशविवर्त्ति इति नाम सार्थकं।

(४५) यस्य रणान्तःपुरे करे कुर्व्वतो मण्डलाग्रलताम्।
रससम्मुख्यपि सहसा पराङ्मुखी भवति रिपुसेनेति सं०।
मण्डलाग्रः खड्गः।

(४६) पाणिग्रहीतुरपि बोधकं करे-कुर्व्वतः-इति विशेषणं, रससम्मुखी-त्यादिस्त्रीलिङ्गं, रणेऽन्तःपुरत्वारोपश्चेति त्रयमत्र अर्थसामर्थ्यम्।

(४७) स्वत एव वर्णनीयतया अङ्गिनः (प्रधानस्य) अवयवानां (स्वतन्त्रतया अवर्णनीयतया अप्रधानानां तत्सम्बन्धिनां) रूपणैः सहितं यत् अङ्गिनः

निरङ्गन्तु ।

शुद्धम् (४८),

यथा,-

कुरङ्गीवाङ्गानि स्तिमितयति गीतध्वनिषु यत्,
सखीं कान्तोदन्तं श्रुतमपि पुनः प्रश्नयति यत् ।
अनिद्रं यच्चान्तः स्वपिति, तदहो वेद्म्यभिनवां
प्रवृत्तोऽस्याः सेक्तुं हृदि मनसिजः प्रेमलतिकाम् ॥

माला तु पूर्व्ववत् (४९) ॥ ८ ॥

मालोपमायामिवैकस्मिन् बहव आरोपिताः । यथा, -

सौन्दर्य्यस्य तरङ्गिणी, तरुणिमोत्कर्षस्य हर्षोद्गमः,
कान्तेः कार्म्मणकर्म्म, नर्म्मरहसामुल्लासनावासभूः ।
विद्या वक्रगिरां, विधेरनवधिप्रावीण्यसाक्षात्क्रिया,
बाणाः पञ्चशिलीमुखस्य, ललनाचूडामणिः सा प्रिया(५०)॥

नियतारोपणोपायः स्यादारोपः परस्य यः ।
तत् परम्परितं श्लिष्टे वाचके भेदभाजि वा(५१) ॥९॥

---

रूपणं, तत् सावयवं रूपकम्, अङ्गरूपकरहितम् अङ्गिनो, रूपणमिति यावत् ।

(४८) निरङ्गम् अङ्गानामारोपरहितं केवलस्याङ्गिनो यद्रूपणम् ।

(४९) पूर्व्ववत् पूर्व्वोक्तमालोपमायामिव । एतेन य एव कारिकाकारः स एव वृत्तिकार इत्यायाति, अन्यथा कारिकाकृता, वृत्तिकृत्प्रदर्शितायाः मालोपमाया अकथितत्वेन, अत्र कारिकायां पूर्व्ववदिति तस्या दृष्टान्ततयोद्भावनमनुपपन्नं स्यादिति ।

(५०) कार्म्मणकर्म्म वशीकरणक्रिया । नर्म्मरहसाम् रहःपरिहासानाम् । उल्लासना विजृम्भणम् ।

(५१) नियतं वर्णनीयतया अवश्यापेक्षणीयं यत् आरोपणम्, तस्य उपायः ( साधारणधर्मसम्पादकतया ) निमित्तं यः परस्य ( अन्यस्य )

यथा,-

विद्वन्मानसहंस, वैरिकमलासङ्कोचदीप्तद्युते,
दुर्गामार्गणनीललोहित, समित्स्वीकारवैश्वानर ।
सत्यप्रीतिविधानदक्ष, विजयप्राग्भावभीम, प्रभो,
साम्राज्यं वरवीर, वत्सरशतं वैरिञ्चमुच्चैः क्रियाः (५२) ॥

[सा॰ द॰]

अत्र, मानसमेव मानसम्, कमलायाः सङ्कोच एव कमलानामसङ्कोचः, दुर्गाणाम् अमार्गणमेव दुर्गाया मार्गणं, समितां स्वीकार एव समिधां स्वीकारः, सत्ये प्रीतिरेव सत्यामप्रीतिः, विजयः (परपराभवः) एव विजयः (अर्जुनः)-एवमारोपणानिमित्तो हंसादेरारोपः ।

---

आरोपः तत् परम्परितम्, (कार्य्यकारणभावरूपा आरोपपरम्परा जाता अत्रेति व्युत्पत्तेः)। यत्र वर्णनीयारोपणं प्रति अन्यारोपणमेव केवलं कारणतया विवक्षितं, तत् परम्परितमिति तु निष्कर्षः । तच्च द्विविधम्, उपायभूते रूपके आरोप्यारोपविषययोर्वाचकस्य श्लिष्टत्वात् भिन्नशब्दत्वाच्चेति। साङ्गरूपके तु वर्णनीयस्य अङ्गिनः रूपणं सुप्रसिद्धसाधर्म्यनिमित्तकमेव, न तु तत्र अङ्गरूपणमेव निमित्तं, तस्य तद् विनापि उपपत्तेः, तत्र अङ्गरूपकन्तु सुप्रसिद्धसाधर्म्यनिमित्तकस्य अङ्गिरूपकस्य परिपोषकमात्रमिति साङ्गरूपकादस्य भेदः ।

(५२) मानसमेव मानसं मानससरः । कमलायाः लक्ष्म्याः । दुर्गाणां कोट्टानां (गड़ Fort) अमार्गणं अनन्वेषणम्, समितां युद्धानां । समिधां काष्ठानां । सत्यां दुर्गायां ।

यद्यपि शब्दार्थालङ्कारोऽयमित्युक्तं (५३) वक्ष्यते च, तथापि प्रसिद्ध्यनुरोधादत्रोक्तः । एकदेशविवर्त्ति हीदमन्यैरभिधीयते (५४) ।

भेदभाजि यथा,

आलानं जयकुञ्जरस्य (५५), दृषदां सेतुर्विपद्वारिधेः,
पूर्व्वाद्रिः करवालचण्डमहसो, लीलोपधानं श्रियः ।
संग्रामामृत--सागर--प्रमथन--क्रीडा--विधौ मन्दरः,
राजन्, राजति वीरवैरिवनितावैधव्यदस्ते भुजः ॥[अलं॰ प॰ मा॰]

---

(५३) मानसादिपदस्य परिवृत्त्यसहत्वात् हंसादिपदस्य च तत्सहत्वादुभयालङ्कारत्वमिति। 'उक्तं' श्लेषनिरूपणप्रस्तावे (२०७।४ प०)'इह दोषगुणालङ्काराणाम्'इत्यादिना) उक्तप्रायम् । 'वक्ष्यते'सङ्करालङ्कारनिरूपणप्रस्तावे 'उक्तमत्र यथा काव्ये'-इत्यादिना, 'एवञ्च यथा पुनरुक्तवदाभासः परम्परितरूपकञ्चोभयोर्भावाभावानुविधायितया उभयालङ्कारौ'-इत्यन्तेन, व्यवस्थाप्यते । प्रसिद्धिरत्र अन्येषामालङ्कारिकाणामर्थालङ्कारमध्ये गणनरूपा ग्राह्या ।

(५४) 'यथा रणेऽन्तःपुरत्वारोपे तद्विशिष्टसम्बन्धस्य खड्गलतादौ अयोग्यतया तद्बलादेव नायिकात्वारोपः, तथा राजनि हंसत्वारोपे तद्विशिष्टस्यान्तःकरणसम्बन्धायोग्यतया तद्बलात् मानसे मानससरस्त्वारोप इत्येकदेशविवर्त्ति'-इति परैरुच्यते,, यदीदम् अर्थालङ्कार एव न स्यात् तदा अर्थालङ्कारविशेषस्य एकदेशवर्त्तिरूपकस्य इदमुदाहरणमेव न स्यादिति तेषामुक्तिरसङ्गता स्यादिति भावः ।

(५५) अत्र जये कुञ्जरत्वारोपे भुजे आलानत्वारोपो निमित्तम्, भुजे च आलानत्वारोपे जये कुञ्जरत्वारोपो निमित्तमिति परस्परसापेक्षसिद्धिरपि परस्परावष्टम्भमात्राधीनस्थितिकाभिरिष्टकाभिर्गेहविशेषनिर्माणमिव न दोषाय इत्युद्योतकृत् ।

अत्र जयादेर्भिन्नशब्दवाच्यस्य कुञ्जरत्वाद्यारोपे भुजस्य आलानत्वाद्यारोपो युज्यते ।

अलौकिक-महालोक-प्रकाशित-जगत्त्रयः ।
स्तूयते देव सद्वंशमुक्तारत्नं न कैर्भवान्(५८)॥ [श्लि०प०के०]

निरवधि च निराश्रयञ्च यस्य
स्थितमनिवर्त्तितकौतुकप्रपञ्चम् ।
प्रथम इह भवान् स कूर्ममूर्त्ति-
र्जयति चतुर्दशलोकवल्लिकन्दः (५९) ॥ [अश्लि०प०के०]

-इति च मालारूपकमपि ( ६० ) परम्परितं द्रष्टव्यम् ॥

---

(५८) अलौकिकस्य महतः (उज्ज्वलस्य) आलोकः(प्रदर्शनम्)इव अलौकिको महान् आलोकस्तेन प्रकाशितं ( प्रकृतपक्षे सन्तोषितम् ) जगत्त्रयं येन स भवान् । मुक्तारत्नप्रभया जगत्त्रयप्रकाशासम्भवात्, नेदं राजनि मुक्तारत्नत्वारोपे निमित्ततयोपात्तम्, किन्तु तदपेक्षया उत्कर्षप्रदर्शनार्थमेवोक्तमिति, सत्कुले वेणुत्वारोप एव तन्निमित्तमिति ।

(५९) निरवधि कालपरिच्छेदशून्यम् । निराश्रयञ्च अधोऽधःस्थितत्वात् आश्रयशून्यञ्च । स्थितम् अवस्थानम् । अतएव अनिवर्त्तितः कौतुकस्य आश्चर्यस्य प्रपञ्चो विस्तारो यस्मात् सः । विष्णुं प्रति भक्तस्योक्तिरियमिति चन्द्रिका ।

(६०) अत्र मालारूपकमपीति पाठं मन्यमानेन, 'प्रकृतारोपं प्रति यदि बहवोऽप्यारोपाः साक्षात् परम्परया वा निमित्ततया उपात्तास्तदापि मालारूपकम्'-इत्यङ्गीकुर्व्वाणेन महेश्वरेण उक्तोदाहरणद्वयमेतादृशमालारूपकविषयमिति प्रतिपादितम्, तच्च तत एवावगन्तव्यम् ।

उदाहरणम्,-

उदयमयते, दिङ्मालिन्यं निराकुरुतेतराम्,
नयति निधनं निद्रामुद्रां, प्रवर्तयति क्रियाः।
रचयतितरां स्वैराचार-प्रवर्तन-कर्त्तनम्
बत बत लसत्तेजःपुञ्जो विभाति विभाकरः (६५)॥

अत्राभिधाया अनियन्त्रणात् द्वावप्यर्कभूपौ वाच्यौ।

परोक्तिर्भेदकैः श्लिष्टैः समासोक्तिः,

प्रकृतार्थप्रतिपादकवाक्येन श्लिष्टविशेषणमाहात्म्यात् (६६) (न तु विशेष्यस्य सामर्थ्यादपि) यत् अप्रकृतस्य अर्थस्य अभिधानं, सा (समासेन सङ्क्षेपेणार्थद्वयकथनात्) समासोक्तिः।

---

वाचकानाम्। अनेकोऽर्थः विशेषरूपो नाना अर्थः। यथोदाहरणे उदयरूपेण सामान्योदयवाचकादुदयपदादर्कोदयराजोदययोरुदयविशेषरूपयोरर्थयोः प्रतीतिरिति प्राहुः।

(६५) राजपक्षे दिङ्मालिन्यं दारिद्र्येण। निद्रामुद्रा निद्रा इव मुद्रा (निरुत्साहता)। स्वैराचारो यथेष्टाचारः। विभाकरस्तन्नामकभूपः। एतत्तु विभाकरशब्दस्य परिवृत्त्यसहतया अभिमतो शब्दश्लेष एव। अन्यत्र तु सर्वत्रार्थश्लेषः इति विभावनीयम्। केचित्तु विभां नीत्वा राज्यस्य प्रकाशं ख्यातिं, उन्नतिम्, करोतीति व्युत्पत्तिमवलम्ब्य विभाकरपदमपि परिवृत्तिसहं [illegible]मिति सर्वत्रैव अर्थश्लेष इति प्राहुः।

(६६) श्लिष्टम् प्रकृताप्रकृतार्थोभयसङ्गतम्। प्रकृतार्थगतविशेषणमाहात्म्यमहिम्ना यदप्रकृतार्थस्य बोधनं, सा समासोक्तिरिति। विशेष्यस्यापि उभयार्थसङ्गतत्वे तु श्लेष इति। तत्रायं विशेषः,-प्रकरणादिभिर्नियमे श्लेषो व्यङ्ग्यः, अनियमे वाच्य इति।

उदाहरणम्,-

लड्डिअइ तुम्ह बाहुप्फसं जीए स को वि उल्लासो।
जअलच्छी तुह विरहे ण हुज्जला दुब्बलाणं सा (९७)॥

अत्र जयलक्ष्मीशब्दस्य केवलं कान्तावाचकत्वं नास्ति।

निदर्शना।

**अभवन् वस्तुसम्बन्ध उपमापरिकल्पकः [९८] ॥११॥**

निदर्शनं दृष्टान्तकरणम्। उदाहरणम्,-

क्व सूर्य्यप्रभवो वंशः, क्व चाल्पविषया मतिः।
तितीर्षुर्दुस्तरं मोहादुडुपेनास्मि सागरम्॥ [वा०नि०]

अत्र उडुपेन सागरतरणमिव मन्मत्या सूर्य्यवंशवर्णनमित्युपमायां पर्य्यवस्यति। यथा वा,-

उदयति विततोर्द्ध्वरश्मिरज्जा-
वहिमरुचौ, हिमधाम्नि याति चास्तम्।
वहति गिरिरयं (९९) विलम्बिघण्टा-
द्वयपरिवारितवारणेन्द्रलीलाम्॥ [प०मि०]

---

(९७) लब्ध्वा तव बाहुस्पर्शं, यस्याः स कोऽप्युल्लासः।
जयलक्ष्मीस्तव विरहे न खलूज्ज्वला दुर्बलानां सेति स०।

(९८) 'अभवन्' असम्भवन्, अनुपपद्यमानः, तात्पर्य्यविषय इति यावत्। वस्तुनोर्वाक्यार्थयोः पदार्थयोर्वा सम्बन्धोऽन्वयः। यथोदाहरणे सूर्य्यवंशवर्णनेऽहं सागरं तितीर्षुरस्मीति सम्बन्धोऽनुपपन्नो बलादुपमां कल्पयति।

(९९) गिरिः रैवतपर्वतः। अत्र समस्तैकपदेनोक्तेन वारणेन्द्रलीला-पदार्थेन गिरिपदार्थस्यान्वयोऽनुपपन्न इति तयोरुपमायाः कल्पनम्।

अत्र कथमन्यस्य लीलामन्यो वहतीति तत्सदृशीमित्युपमायां पर्यवसानम् ।

दोर्भ्यां तितीर्षति तरङ्गवतीभुजङ्गम्,
आदातुमिच्छति करे हरिणाङ्कबिम्बम् ।
मेरुं विलङ्घयिषति ध्रुवमेष देव,
यस्ते गुणान् गदितुमुद्यममादधाति ॥

-इत्यादौ मालारूपाप्येषा द्रष्टव्या ॥

**स्वस्वहेत्वन्वयस्योक्तिः क्रिययैव च साऽपरा ।**

क्रिययैव स्वस्वरूप-स्वकारणयोः सम्बन्धो यदवगम्यते, सा अपरा निदर्शना (७०) । यथा,-

उन्नतं पदमवाप्य यो लघुः, हेलयैव स पतेदिति ब्रुवन् ।
शैलशेखरगतो दृषत्कणश्चारुमारुतधुतः पतत्यधः (७१) ॥

अत्र पातक्रियया पतनस्य, लाघवे सति उन्नतपदप्राप्तिरूपस्य च सम्बन्धः ख्याप्यते ।

---

(७०) क्रियारूपेण स्वेनैव कार्येण स्वस्य (क्रियारूपस्य कार्यस्य) स्वकारणेन सम्बन्धस्य (कार्यकारणभावरूपस्य) यत् प्रतिपादनं, सा अपरा निदर्शनेत्यर्थः ।

(७१) ब्रुवन् प्रतिपादयन् । अत्र हि पततीति पतनक्रियारूपेण कार्येण स्वेनैव, पतेदिति प्रतिपाद्यस्य स्वस्य (पतनरूपकार्यस्य) स्वकारणेन (लघीयस उन्नतपदप्राप्तिरूपेण) सम्बन्धः (कार्यकारणभावात्मकः) प्रतिपाद्यते । तथा च लाघवे सति उन्नतपदप्राप्तिः पाते हेतुः, यथा दृषत्कणस्येति दृष्टान्तपर्यवसानादिदमपि निदर्शनम् ।

अप्रस्तुतप्रशंसा सा, या सैव प्रस्तुताश्रया [७२] ॥१२॥

अप्राकरणिकस्याभिधानेन प्राकरणिकस्याक्षेपोऽप्रस्तुतप्रशंसा ।

कार्य्ये निमित्ते सामान्ये विशेषे प्रस्तुते सति ।
तदन्यस्य वचस्तुल्ये तुल्यस्येति च पञ्चधा [७३]॥१३॥

तदन्यस्य कारणादेः । क्रमेणोदाहरणम्,-

याताः, किं न मिलन्ति सुन्दरि पुनश्चिन्ता त्वया मत्कृते
नो कार्य्या, नितरां कृशासि, कथयत्येवं सबाष्पे मयि ।
लज्जामन्थरतारकेण निपतत्पीताश्रुणा चक्षुषा
दृष्ट्वा मां, हसितेन भाविमरणोत्साहस्तया सूचितः ॥

अत्र प्रस्थानात् किमिति (७४) निवृत्तोऽसीति कार्य्ये पृष्टे कारणमभिहितम् ।

राजन्, राजसुता न पाठयति मां, देव्योऽपि तूष्णीं स्थिताः,
कुब्जे, भोजय मां, कुमारसचिवैर्नाद्यापि किं भुज्यते ? ।

---

(७२) सैव अप्रस्तुतप्रशंसैव । प्रस्तुताश्रया प्राकरणिकार्थप्रतिपत्तिपरा । प्राकरणिकेनाप्राकरणिकाक्षेपः समासोक्तिः, इयन्तु अप्राकरणिकेन प्राकरणिकार्थस्याक्षेप इति भेदः ।

(७३) निमित्ते कारणे । कार्य्ये प्रस्तुते कारणस्य अप्रस्तुतस्य, कारणे कार्य्यस्य, सामान्ये विशेषस्य, विशेषे सामान्यस्य, एवं तुल्ये तुल्यस्येति पञ्च ।

(७४) किमिति प्रश्ने, किं प्रस्थानात् निवृत्तोऽसि ? इति प्रश्नः । ततश्च प्रस्थाननिवृत्तिप्रश्ने, अथ किं, प्रस्थानात् निवृत्तोऽस्मि इत्युत्तरं युक्तं । अत्र तु प्रस्थाननिवृत्तिकारणमभिहितं, तेनापि च प्रस्थानात् निवृत्तोऽस्मि इत्युत्तरं स्फुटमेव प्रतीयते ।

इत्थं नाथ, शुकस्तवारिभवने मुक्तोऽध्वगैः पञ्जरात्
चित्रस्थानवलोक्य शून्यवलभावेकैकमाभाषते ॥

अत्र प्रस्थानोद्यतं भवन्तं ज्ञात्वा सहसैव त्वदरयः पलाय्य गता इति कारणे (७५) प्रस्तुते कार्यमुक्तम् ।

एतत् तस्य मुखात् कियत्, कमलिनीपत्रे कणं वारिणो
यन्मुक्तामणिरित्यमंस्त स जडः, शृण्वन्यदस्मादपि ।
अङ्गुल्यग्र-लघु-क्रिया-प्रविलयिन्यादीयमाने शनैः
कुत्रोड्डीय गतो ममेत्यनुदिनं निद्राति नान्तः शुचा (७६) ॥

अत्रास्थाने जडानां ममत्वसम्भावना भवतीति सामान्ये प्रस्तुते विशेषः कथितः ।

सुहृद्वधू-बाष्प-जल-प्रमार्जनं
करोति वैर प्रतियातनेन यः ।
स एव पूज्यः, स पुमान्, स नीतिमान्,
सुजीवितं तस्य, स भाजनं श्रियः ॥

अत्र कृष्णं निहत्य नरकासुरवधूनां यदि दुःखं प्रशमयसि, तत् त्वमेव श्लाघ्यः-इति विशेषे प्रकृते सामान्यमभिहितम् ।

तुल्ये प्रस्तुते तुल्याभिधाने त्रयः प्रकाराः,-श्लेषः, समासोक्तिः, सादृश्यमात्रं वा तुल्यात् तुल्यस्य हि आक्षेपे हेतुः (७७) ।

---

(७५) कारणे शत्रुपलायनरूपे । कार्यं पञ्जरस्थशुकाभाषणरूपम् ।

(७६) मुखादिति श्रुतमिति शेषः । अत्र जडसामान्यप्रस्तावे जड़विशेषकथनमुक्तम् ।

(७७) अप्रस्तुतेन प्रस्तुताक्षेपस्थले उभयोः श्लेषसमासोक्तिसादृश्यो-रन्यतमात् अत्र श्लेषपदम् विशेषणविशेष्यवाचिशब्दानां सर्वेषामेव उभयार्थबोधकपरम्, समासोक्तिपदञ्च विशेषणमात्रस्य उभयार्थबोधकपरमिति ।

क्रमेणोदाहरणम्,-

पुंस्त्वादपि प्रविचलेत् यदि, यद्यधोऽपि
यायात्, यदि प्रणयने न महानपि स्यात्।
अभ्युद्धरेत्तदपि विश्वमितीदृशीयं
केनापि दिक् प्रकटिता पुरुषोत्तमेन (७८)॥ [श्लो०श्लो०]

येनास्यभ्युदितेन चन्द्र, गमितः क्लान्तिं, रवौ तत्र ते
युज्येत प्रतिकर्त्तुमेव, न पुनस्तस्यैव पादग्रहः।

---

(७८) अप्रस्तुतविष्णुपक्षे पुंस्त्वं पुंचिह्नं, (नारीभूयामृतहरणात्)। अधः पातालं, (पृथ्वीरक्षणाय कूर्म्ममूर्त्त्या पातालगमनात्)। प्रणयने याचने, 'न महान्' वामनः, (बलिलक्षायात् प्रार्थनसमये तथाभावात्)। पुरुषोत्तमः नारायणः। राजपक्षे पुंस्त्वं पौरुषम्। अधः स्वपदभ्रंशः। अन्यत् सुगमम्। उभयपक्षे दिक् पन्थाः रीतिरिति यावत्। ननु 'प्रकरणेन राजरूपः प्रस्तुतोऽर्थ एव प्रथममुपस्थीयते,-इति कथमत्र अप्रस्तुतप्रशंसा, अप्रस्तुतार्थस्य प्रथमत उपस्थितावेव तत्सम्भवात्'। उच्यते, पुरुषोत्तमादिशब्दानां सत्पुरुषादिरूपे प्रस्तुतेऽर्थे यौगिकी (प्रकृतिप्रत्ययलभ्या) शक्तिरिति प्रकरणादिसहितामपि तां बाधित्वा अभिधाशक्तिर्नारायणादिरूपमप्रस्तुतमर्थं प्रथममेवोपस्थापयति, ततश्च प्रस्तुतार्थबोध इति। यत्र हि उभयस्मिन्नपि अर्थे अभिधावृत्तेः सम्भवस्तत्रैव प्रकरणादिकं नियामकम्, यत्र पुनरेकस्मिन् अभिधा, अपरस्मिन् यौगिकी शक्तिः, तत्र अभिधैव बलवती अपरां प्रकरणादिसहितामपि बाधते, अत्र च मूलं "अवयवशक्तेः समुदायशक्तिर्बली-यसी" इति नियमः। अतएव नात्र श्लेषोऽपि उभयार्थस्यानभिधेयत्वात्, प्रकरणाद्यनियमाभावाच्चेति।

धीरेणैतदनुष्ठितं यदि, ततः किं लज्जसे नो मनाक्?
अस्त्येवं जड़धामता तु भवतो यद्व्योम्नि विस्फुर्जसे(७९)॥[स०हे०]

आदाय वारि परितः सरितां मुखेभ्यः,
किं तावदर्जितमनेन दुरर्णवेन।
क्षारीकृतं च, वड़वादहने हुतञ्च
पातालकुक्षिकुहरे विनिवेशितञ्च॥ [सा०हे०]

इयञ्च क्वचित् वाच्ये प्रतीयमानार्थानध्यारोपेणैव भवति(८०)।

यथा,-

अम्भोरम्भः-स्थगित-भुवनाभोग-पातालकुक्षेः
पोतोपाया इह हि बहवो लङ्घनेऽपि क्षमन्ते।
आहो! रिक्तः कथमपि भवेदेष दैवात्, तदानीं
को नाम स्यादवटकुहरालोकनेऽप्यस्य कल्पः! (८१)॥

---

(७९) पादो रश्मिः चरणश्च (सूर्य्यकिरणपातेनैव चन्द्रस्य तेजस्वित्वमिति)। जडं जलं जड़धामता हिमाश्रयता, मूर्खता च (जड़पदस्य भावप्राधान्येन निर्द्देशात्) इति चन्द्रिका।

(८०) वाच्यस्य अप्राकरणिकार्थस्य सम्भवित्वे न तत्र प्रतीयमानस्य प्राकरणिकार्थस्य आरोपः, तस्य असम्भवित्वे तु तदारोप आवश्यक एव, अन्यथा अयोग्यत्वबुद्ध्या अर्थबोध एव न स्यात्। एतच्च उदाहरणेन स्फुटीभविष्यति।

(८१) अम्भसा स्थगितो भुवनस्य आभोगः (विस्तारः) पातालस्य कुक्षिः(मध्यम्)च येन, तस्य। अवटो गर्त्तः खातः। कुहरः छिद्रं गभीरभागः। अत्र उपमर्द्दनशीलस्य प्रभोः पूर्णतैव वरम्, न निःस्वता, अत्यल्पोपमर्द्दनापत्तेरिति प्रस्तुतम् प्रतीयमानम्। अत्र वाच्यार्थस्य स्वत एव सम्भवितया न तत्र प्रतीयमानार्थाध्यारोपः आवश्यकः।

क्वचिदध्यारोपेणैव । यथा,-

कस्त्वं भोः ? कथयामि,-दैवहतकं मां विद्धि शाकोटकम्,
वैराग्यादिव वक्षि ? साधु विदितं, कस्मादिदं ? कथ्यते ।
वामेनात्र वटस्तमध्वगजनः सर्वात्मना सेवते,
न च्छायापि परोपकारकरणी मार्गस्थितस्यापि मे (८२)॥

क्वचित्तु अंशेष्वध्यारोपेण । यथा,-

सोऽपूर्व्वो रसनाविपर्य्ययविधिस्तत्कर्णयोश्चापलम्,
दृष्टिः सा मदविस्मृतस्वपरदिक्, किं भूयसोक्तेन वा ।
सर्व्वं विस्मृतवानसि भ्रमर हे, यद्वारणोऽद्याप्यसौ
अन्तःशून्यकरो निषेव्यत इति भ्रातः, क एष ग्रहः ?(८३) ॥

अत्र रसनाविपर्य्यासः शून्यकरत्वञ्च भ्रमरस्यासेवने न हेतुः, कर्णचापलन्तु हेतुः, मदः प्रत्युत सेवने निमित्तम् (८४) ॥

---

(८२) अत्र सत्पात्रेण सदसत्पात्रानङ्गीकारात् अतीवनिर्विण्णः अधमजातिहिंस्रः कश्चित् पुरुषः प्रस्तुतः प्रतीयते । अचेतनेन वाच्यार्थेन शाकोटकेन सह उक्तिप्रत्युक्त्यसम्भवात् वाक्यार्थे शाकोटकादिरूपे प्रतीयमानार्थस्य अधमजाति-हिंस्र-प्रभृतेः आरोपः आवश्यकः ।

(८३) रसनाविपर्य्यासः जिह्वापरिवृत्तिः, (अग्निशापात् करीणाम् उपजातं रसनायाम् इति), पूर्व्वविपरीताभिधानञ्च । चापलं चाञ्चल्यं अस्थिरता, श्रवणमात्रेण मतपरिवर्त्तनञ्च । स्वपरदिक् निज-परमार्गः, आत्मीयानात्मीयविभागश्च । शून्यकरः सच्छिद्रशुण्डादण्डः, धनशून्यहस्तश्च । ग्रहः आग्रहः ।

(८४) तथाच कर्णचापलांशे न प्रतीयमानार्थस्य अध्यारोपः आवश्यकः, तदन्यत्र तु रसनाविपर्य्ययादिरूपांशत्रये आरोपः आवश्यक एव इति ।

निगीर्य्याध्यवसानन्तु प्रकृतस्य परेण यत् ।
प्रस्तुतस्य यदन्यत्वं, यद्यर्थोक्तौ च कल्पनम् ॥१३॥
कार्य्यकारणयोर्यश्च पौर्वापर्य्यविपर्य्ययः ।
विज्ञेयातिशयोक्तिः सा, (८५)

उपमानेनान्तर्निगीर्णस्य (८६) उपमेयस्य यदध्यवसानं सैका । यथा,-

कमलमनम्भसि, कमले च कुवलये, तानि कनकलतिकायाम् ।
सा च सुकुमारसुभगेत्युत्पातपरम्परा केयम् ॥

अत्र मुखादि कमलादिरूपतया अध्यवसितम् ।

---

(८५) अतिशयः अतिशयिता प्रसिद्धिमतिक्रान्ता लोकातीता उक्तिः अतिशयोक्तिः, सा च एतेषु परस्परमत्यन्त-विलक्षणेष्वपि चतुर्षु प्रभेदेषु अस्तीति एतेषां प्रभेदानामतिशयोक्तिरिति साधारणं नाम कासङ्गतम् । कमलानामेव यथा पङ्कजनाम, तथा एतेषामेव अतिशयोक्तिरिति नाम योगरूढमिति न कोऽपि दोषः ।

(८६) अन्तर्निगीर्णस्य अन्तर्गिलितस्येव स्वस्वरूपेणानुपस्थितस्य (स्ववाचकशब्देन अनुपात्तस्य) । अध्यवसानम् (स्वस्वरूपेणानुपस्थिततया) सर्व्वथैव अभेदप्रतीतिरूप उत्कटारोपः । अयञ्च प्रभेदः साध्यवसानालक्षणा-सम्भवस्थल एव भवतीत्युक्तम् प्राक् । दर्पणकृतस्तु, अन्तर्निगीर्णपदस्य अप्रधानीकृतस्य-इत्यर्थं मन्यमानः 'मुखं द्वितीयश्चन्द्रः' इत्यादौ विषयस्य रूपस्योपादानेऽपि एनमतिशयोक्तेः प्रभेदमाह ।

यत्र तदेवान्यत्वेनाध्यवसीयते, सा अपरा। यथा,-

अखं लडहत्तणअं अखम्म च काइ वत्तणच्छाआ।

सामा सामासपआवइणो रेहम्भि अ ण होइ॥ (८७)

'यद्यर्थस्य' यदिशब्देन चेच्छब्देन वा उक्तौ यत् कल्पनम्, (अर्थात् असम्भविनोऽर्थस्य), सा तृतीया। यथा,-

राकायामकलङ्कं चेदमृतांशोर्भवेद्वपुः।

तस्या मुखं तदा साम्यपराभवमवाप्नुयात्॥

कारणस्य शीघ्रकारितां वक्तुं कार्य्यस्य पूर्व्वमुक्तौ (८८) चतुर्थी। यथा,-

हृदयमधिष्ठितमादौ मालत्याः कुसुमचापबाणेन।

चरमं रमणीवल्लभ, लोचनविषयं त्वया भजता॥

प्रतिवस्तूपमा तु सा॥ १५॥

सामान्यस्य द्विरेकस्य यत्र वाक्यद्वये स्थितिः।

---

(८७) अन्यत् सौकुमार्य्यम् अन्यैव च कापि वर्त्तनच्छाया।
श्यामा सामान्यप्रजापतेः रेखैव च न भवतीति स०।

लडहत्तणअ-शब्दः सौकुमार्य्ये देशी। वर्त्तनं शरीरम्।

'शीतकाले भवेदुष्णा ग्रीष्मे च सुखशीतला।

सर्व्वावयवशोभाढ्या सा श्यामा परिकीर्त्तिता'॥

रेखा निर्म्माणपरिपाटीलेशसम्बद्धा निर्म्माणार्थं प्रथमं कठिनीप्रहतो वा।

(८८) पूर्व्वं कार्य्योत्पत्त्यपयुक्तकालात् पूर्व्वम्, तत्र कार्य्यस्य कारण-सहभावेन वर्णनेऽपि भवति। यथा-

सममेव समाक्रान्तं द्वयं द्विरदगामिना।

तेन सिंहासनं पित्र्यं मण्डलञ्च महीक्षिताम्॥-इति दर्पणकृत्।

साधारणो धर्म्म उपमेयवाक्ये, उपमानवाक्ये च (कथितपदस्य दुष्टतयाऽभिहितत्वात्) (८९) शब्दभेदेन यत् उपादीयते, सा (वस्तुनो वाक्यार्थस्योपमानत्वात्) प्रतिवस्तूपमा। यथा,-

देवीभावङ्गमिता परिवारपदं कथं भजत्येषा।
न खलु परिभोगयोग्यं दैवतरूपाङ्कितं रत्नम्॥

यदि दहत्यनलोऽत्र किमद्भुतम्, यदि च गौरवमद्रिषु किं ततः।
लवणमम्बु सदैव महोदधेः, प्रकृतिरेव सतामविषादिता॥

-इत्यादि मालाप्रतिवस्तूपमा द्रष्टव्या। एवमन्यत्रापि अनुसर्त्तव्यम् (९०)।

---

(८९) तथाच शब्दभेदेनेति विशेषणमनुक्तमपि अर्थवशलभ्यम् बोध्यम्। "अत्र (कारिकायाम्) द्विरिति द्वये इति च पदे अनेकोपलक्षणे, मालानुरोधात्"-इति प्रदीपः। तेन वाक्यार्थयोर्वाक्यार्थानां वा उपमासम्पादकस्य एकस्यैव धर्म्मस्य विभिन्नशब्दोपात्तत्वं प्रतिवस्तूपमा इति फलितम्। उपमायान्तु पदार्थयोः साम्यं, तच्च वाच्यं, अत्र तु वाक्यार्थयोः, तदपि गम्यमेवेति ततो भेदः। साम्यप्रतिपादकानामिवादीनाम् पदत्वेन तैः पदार्थयोरेव साम्यं बोध्यते, 'पदार्थः पदार्थेन अन्वेति'-इति नियमात्, वाक्यार्थयोः साम्यं गम्यमेव नियतमिति अत्र दर्पणकृतो वाच्यसाम्यव्यावर्त्तकं गम्यसाम्येति विशेषणादानं किमर्थमिति न जानीमहे।

(९०) अन्यत्रापि वैधर्म्म्यस्थलेऽपि। यथा,

चकोर्य्य एव चतुराश्चन्द्रिकापानकर्म्मणि।
विनावन्तीर्न निपुणाः सुदृशो रतकर्म्मणि॥-इति। दर्पणेऽप्येवम्।

दृष्टान्तः पुनरेतेषां सर्व्वेषां प्रतिबिम्बनम् (९१)॥१६॥

एतेषां साधारणधर्म्मादीनां। दृष्टोऽन्तः (निश्चयः) यत्र स दृष्टान्तः (९२)।

त्वयि दृष्ट एव तस्या निर्वाति मनो मनोभवज्वलितम्।
आलोके हि हिमांशोर्विकसति कुसुमं कुमुद्वत्याः॥

एष साधर्म्म्येण (९३)। वैधर्म्म्येण तु,-

तवाहवे साहसकर्म्मशर्म्मणः
करं कृपाणान्तिकमानिनीषतः।

---

(९१) अत्र वाक्यद्वये इति पूर्व्वस्मादनुवर्त्तते। एतेषां साधारणधर्म्मोपमानोपमेयानां। प्रतिबिम्बनं बिम्बप्रतिबिम्बभावः, उपमानोपमेयभाव इति यावत्। प्रतिवाक्यं विभिन्नस्यापि साधारणधर्म्मस्य तुल्यरूपतया वाक्यार्थयोरुपमासम्पादकत्वे दृष्टान्त इति फलितम्। प्रतिवस्तूपमायां धर्म्मस्य ऐक्यम्, अत्र तु विभिन्नता इति प्रतिवस्तूपमातो भेदः। यथा, प्रथमोदाहरणे, एकदा उच्चपदाधिरूढस्यावनतिरनुचितेति उच्चपदाधिरूढस्यावनतेरनौचित्यं साधारणो धर्म्मः। एवं द्वितीयोदाहरणे स्वाभाविककार्य्यदर्शनं न विस्मयकरमिति स्वाभाविककार्य्यदर्शनस्य विस्मयाजनकत्वं साधारणो धर्म्मः शब्दभेदेन निर्द्दिष्टः।

(९२) निश्चयः प्रस्तुतस्य अर्थस्य निःसन्देहा (निश्चितप्रामाण्या) प्रतीतिः, सोदाहरणवाक्येन प्रतिपाद्यमानो ह्यर्थः हेत्वाकाङ्क्षानिवृत्त्या असंशयमेव प्रतीयते। तदियं संज्ञा योगरूढिः।

(९३) मनोविकारनिर्व्वाणस्य कुसुमविकासस्य च धर्म्मस्य परस्परं भेदः। तथापि मनःकुसुमयोर्म्मुकुलितत्वनिवारणादिरूपः साधारणो धर्म्मोऽस्तीति तमवलम्ब्य वाक्यार्थयोः साद्दश्यम्। अत्र दृष्टान्तो न व्यतिरेकेण दत्त इति साधर्म्म्योदाहरणम्।

भटाः परेषां विशरारुतामगुः
दधत्यवाते स्थिरतां हि पांशवः (६४) ॥

सकृद्वृत्तिस्तु धर्म्मस्य प्रकृताप्रकृतात्मनाम् ।
सैव(६५)क्रियासु बह्वीषु कारकस्येति दीपकम् ॥१७॥

प्राकरणिकाप्राकरणिकानाम् (अर्थात् (६६) उपमानोपमेयानां) धर्म्मः क्रियादिः, एकवारमेव यदुपादीयते, तत् (एकस्थस्यैव समस्तवाक्यदीपनात्) दीपकम् । यथा,-

किवणाणं धणं णाआणं फणमणी केसराइं सीहाणम् ।
कुलवालिआणं थणा कत्तो छिप्पन्ति अमुआणं ॥ (६७)

---

(६४) विशरारुतां विशीर्णताम् पलायमानतां । वाते ते स्थिरतां न दधतीतिव्यतिरेकेण साधर्म्म्य पर्य्यवसानात् दृष्टान्ततोपपत्तिरिति चन्द्रिका । पलायमानास्थिरत्वयो धर्म्मयोर्भेदः । परन्तु देशान्तरसंयोगजनकत्वरूपस्य साधारणधर्म्मस्य सत्त्वात् अनयोरुपमा, ततश्च प्रकृतवाक्यार्थयोरुपमेति ।

(६५) सैव सकृद्वृत्तिरेव । तथाच दीपकं द्विविधं, एकस्य धर्म्मस्य एकवारं प्रस्तुताप्रस्तुतोभयवृत्तित्वे एकम्, अपरन्तु एकस्य कारकस्य एकवारमेवानेकासु क्रियासु सम्बन्धे इति । अत्र प्रथमप्रभेदस्थले उपमाप्रतीतिं विनापि वाक्यार्थस्य पर्य्यवसानात् नोपमा प्रथमं बोध्यते, किन्तु व्यज्यते इति नात्रोपमा । एकस्यापि धर्मस्य द्विरनुक्तेः वाक्यद्वयस्याभावेन च न प्रतिवस्तूपमादृष्टान्तौ ।

(६६) यस्य धर्मस्य प्राकरणिकाप्राकरणिकोभयवृत्तित्वम्, तमेव साधारणधर्ममाश्रित्य तयोरुपमानोमेयभावः प्राप्नोतीत्यर्थादित्युक्तम् ।

(६७) कृपणानां धनं नागानां फणमणिः केशराः सिंहानाम् ।
कुलबालिकानाञ्च स्तनाः कुतः स्पृश्यन्तेऽमृतानामिति सं० ।
कुलपालिकानामित्यपि भवति ।

कारकस्य च बह्वीषु क्रियासु सकृद्वृत्तिर्दीपकम् । यथा,-

खिद्यति कूणति वेल्लति विचलति
निमिषति विलोकयति तिर्य्यक् ।
अन्तर्नन्दति चुम्बितुमिच्छति
नवपरिणाया वधूः शयने (९८) ॥

मालादीपकमाद्यञ्चेद् यथोत्तरगुणावहम् ।

पूर्व्वेण पूर्व्वेण (९९) वस्तुना उत्तरमुत्तरं चेदुपक्रियते, तत् मालादीपकम् । यथा,-

सङ्ग्रामाङ्गनमागतेन भवता चापे समारोपिते,
देवाकर्णय, येन येन सहसा यत् यत् समासादितम् ।
कोदण्डेन शराः, शरैररिशिरस्तेनापि भूमण्डलम्,
तेन त्वं, भवता च कीर्त्तिरतुला, कीर्त्त्या च लोकत्रयम् ॥

नियतानां सकृद्धर्मः (१००), सा पुनस्तुल्ययोगिता ॥ १८ ॥

---

(९८) कूणति सङ्कुचति । वेल्लति परिवृत्य शेते । विचलति विशेषतः चपलायते । खिद्यते इति पाठो भवितुं युक्तः ।

(९९) कारिकायां यथोत्तरमिति वीप्साश्रुतेराद्यमित्यत्रापि वीप्सा वक्तव्येति प्रतिपादयति पूर्व्वेण पूर्व्वेणेति । उपक्रियते उपरज्यते, विशेष्यते, सविशेषणीक्रियते । यथोदाहरणे पूर्व्वोक्तेन कोदण्डेन समासादनक्रियाद्वारा परोक्ताः शराः सविशेषणीक्रियन्ते, तैश्चारिशिरः एवं परत्रापि । 'तत्' तदा । मालादीपकमिदन्तु न मालोपमादीनामिवेति पृथगुक्तम् ।

(१००) सकृदुपादीयते इति शेषः । सा धर्मस्य सकृदुपादानरूपा । प्रकृताप्रकृतयोरुभयोरेव एकदा सकृद्धर्मसम्बन्धे दीपकम्, तयोरेकस्य (प्रकृतस्यैव अप्रकृतस्यैव वा) तथात्वे तुल्ययोगितेत्यनयोर्भेदः ।

नियतानां प्राकरणिकानामेव, अप्राकरणिकानामेव वा ।

क्रमेणोदाहरणम्,-

पाण्डु क्षामं वदनं, हृदयं सरसं, तवालसञ्च वपुः ।
आवेदयति नितान्तं क्षेत्रियरोगं सखि, हृदन्तः ॥ [ प्रा० ]

कुमुद-कमल-नीलनीरजालिर्ललितविलासजुषोर्दृशोः पुरः का ।
अमृतममृतरश्मिरम्बुजन्म प्रतिहतमेकपदे तवाननस्य ॥ [ अप्रा० ]

उपमानाद्यदन्यस्य व्यतिरेकः स एव सः (१०१) ।

अन्यस्य उपमेयस्य व्यतिरेक आधिक्यम् ।

क्षीणः क्षीणोऽपि शशी भूयोभूयोऽभिवर्द्धते सत्यम् ।
विरम प्रसीद सुन्दरि, यौवनमनिवर्त्ति यातन्तु ॥

इत्यादावुपमानस्योपमेयादाधिक्यमिति यत्केनचिदुक्तम् (१०२), तदयुक्तम्, अत्र यौवनगतास्थैर्य्याधिक्यं हि विवक्षितम् (१०३)।

---

(१०१) यदित्यव्ययं व्यतिरेकपदान्वयि । व्यतिरेकः आधिक्यम् उत्कर्षः । स एव व्यतिरेक एव । स व्यतिरेकः व्यतिरेकनामालङ्कारः ।

(१०२) अत्र हि उपमानस्य शशिनः क्षीणस्यापि पुनर्वृद्धिरित्युत्कर्षः, उपमेयं यौवनन्तु न पुनरावर्त्तते इत्यपकर्षम् । केनचित्, 'उपमानात् उपमेयस्य आधिक्ये विपर्य्यये वा व्यतिरेकः' इत्यङ्गीकुर्व्वता अलङ्कार-सर्व्वस्वोपजीव्येन । एतन्मते उपमानात् उपमेयस्य न्यूनतायामपि व्यतिरेकः ।

(१०३) अयमभिसन्धिः, उत्कर्षापकर्षौ हि प्रकरणानुसारिणौ न त्वनुगतौ, तथाहि यदेव क्वचिदपकर्षकं तदेवान्यत्र उत्कर्षकमपि भवति, यथा, ग्लानिविवेचने वर्णनानरहितत्वमपकर्षकं भवदपि चूर्णनिरूपणे तदेवोत्कर्षकं भवति । ततश्च प्रकृते मानापनोदनानुकूलतया यौवनास्थैर्य्यांशस्यैव उत्कर्षो

हेत्वोरुक्तावनुक्तीनां त्रये, साम्ये निवेदिते ॥१९॥

शब्दार्थाभ्यामथाक्षिप्ते, श्लिष्टे तद्वत्त्रिरष्ट तत् ।

व्यतिरेकस्य हेतुः उपमेयगतमुत्कर्षनिमित्तम्, उपमानगतमपकर्षनिमित्तं, तयोर्द्वयोरुक्तिः, एकतरस्य द्वयोर्वा अनुक्तिरित्यनुक्तित्रयम् (१०४), एतद्भेदचतुष्टयमुपमानोपमेयभावे शब्देन प्रतिपादिते ; आर्थेन च क्रमेणोक्तौ चत्वार एव भेदाः ; आक्षिप्ते चौपम्ये तावन्त एव ; एवं द्वादश । एते श्लेषेऽपि भवन्तीति चतुर्विंशतिर्भेदाः । क्रमेणोदाहरणम्,-

असिमात्रसहायस्य प्रभूतारिपराभवे ।
अन्यतुच्छजनस्येव न स्मयोऽस्य महाधृतेः ॥ [अलं०भा०]

अत्रैव तुच्छेति महाधृतेरित्यनयोः पर्य्यायेण युगपद्वा.

---

वक्तव्यः, अस्थैर्य्यस्योत्कर्षस्तु पुनरागच्छतोऽरागेत्यमेव, अपकर्षश्च तत्त्वाहित्यमिति, यौवनस्यास्थैर्य्यमपुनरावृत्तमित्युत्कृष्टम् । एवं

हनूमदाद्यैर्यशसा मया पुनर्द्विषां हसैर्दूतपथः सितीकृतः ॥

-इत्यपि नव्याक्षेपो नोपमेयस्य न्यूनतोदाहरणम्, अत्र हि आत्माव-मानस्यैव प्रकृततया आत्मनो दूतापसदत्वमेव विवक्षितम्, तदुत्कर्षश्च आत्मनः शत्रुपहसनीयत्वेनेति । वस्तुतः उपमानात् उपमेयस्य न्यूनत्वं मण्डापथवत् सार्व्वजनीनमेवेति न तत्कृतम् चमत्कारान्तरमिति तत्सद्भावे उपमादिरेव अलङ्कारः ।

(१०४) एकतरस्य उत्कर्षनिमित्तमात्रस्य, अपकर्षनिमित्तमात्रस्य वा, एतयोर्द्वयोर्वानुक्तिरित्यनुक्तित्रयम् । शब्देन इवादिना । आर्थेन क्रमेण तुल्यादिपदेन । चत्वार इति पूर्व्ववत् हेतोरुक्त्यनुक्तित्रययुक्ता इति शेषः । तावन्तश्चत्वारः । एते द्वादश । श्लेषेऽपीत्यपिना अश्लेषसमुच्चयः ।

अनुपादानेऽन्यत् भेदत्रयम्; एवमन्यत्रापि द्रष्टव्यम् । अत्र इवशब्दस्य सद्भावाच्छाब्दमौपम्यम् ।

अस्तिमात्रसहायोऽपि प्रभूतारिपराभवे ।
नैवान्यतुच्छजनवत्सगर्वोऽयं महाद्युतिः ॥ [अस्ते आ०]

अत्र तुल्यार्थे वतिरित्यार्थमौपम्यम् ।

इयं सुनयना दासीकृत-तामरसश्रिया ।
आननेनाकलङ्केन जयतीन्दुं कलङ्किनम् ॥ [अस्ते आक्षि०]

अत्रेवादि-तुल्यादिपदविरहेण आक्षिप्तैवोपमा ।

जितेन्द्रियतया सम्यग्विद्यावृद्धनिषेविणः ।
अतिगाढगुणस्यास्य नाब्जवद्भङ्गुरा गुणाः ॥ [स्ले शा०]

अत्रेवार्थे वतिः, गुणशब्दः श्लिष्टः, शाब्दमौपम्यम् ।

अखण्डमण्डलः श्रीमान् पश्यैष पृथिवीपतिः ।
न निशाकरवज्जातु कलावैकल्यमागतः ॥ [स्ले आ०]

अत्र तुल्यार्थे वतिः, कलाशब्दः श्लिष्टः ।

मालाप्रतिवस्तूपमावन्मालाव्यतिरेकोऽपि सम्भवति, तस्यापि भेदा एवमूह्याः (१०५) । दिङ्मात्रमुदाह्रियते,

---

(१०५) इयञ्च पाठप्रणाली विस्तारिकाप्रदीपकृत्कमलेश्वरादिबहुवादिसम्मततया अङ्गीकृता । निदर्शनकृतस्तु क्रमप्राप्ततया स्लेषे आक्षिप्तौपम्यप्रदर्शनमेव प्रथमसमुचितमिति मन्यमानाः, 'मालाप्रतिवस्तूपमावत्' इत्यादिं 'शिशमादयश्च शब्दाः श्लिष्टाः' इत्यन्तं सन्दर्भं, 'श्लिष्टविशेषणाक्षिप्तैवोपमा प्रतीयते' इत्यनन्तरं साधु पठन्ति । अस्मत्पाठान्त्वविधं पाठमङ्गीचकार ।

यथा,-

हरवन्न विषमदृष्टिर्हरिवन्न, विभो, विधूतविततवृषः।
रविवन्न चातिदुःसह-कर-तापितभूः कदाचिदसि॥

[सं॰ आ॰ भा॰]

अत्र तुल्यार्थे वतिः, विषमादयश्च शब्दाः श्लिष्टाः (१०६)।

नित्योदितप्रतापेन त्रियामामीलितप्रभः।
भास्वतानेन भूपेन भास्वानेष विनिर्जितः॥ [सं॰ आवि॰]

अत्र हि आक्षिप्तैवोपमा। भास्वतेति श्लिष्टः। यथा वा,-

स्वच्छात्मतागुणसमुल्लसितेन्दुबिम्ब
बिम्बप्रभाधरमकृत्रिमहृद्यगन्धम्।
यूनामतीव पिबतां रजनीषु यत्र
तृष्णां जहार मधु, नाननमङ्गनानाम् (१०७)॥

अत्रेवादीनां तुल्यादीनाञ्च पदानामभावेऽपि श्लिष्टविशेषणमाक्षिप्तैवोपमा प्रतीयते। एवञ्जातीयकाः श्लिष्टोक्तियोग्यस्य पदस्य पृथक् (१०८) उपादानेऽन्येऽपि भेदाः सम्भवन्ति, तेऽपि अनयैव दिशा द्रष्टव्याः॥

---

(१०६) एतत्र विषम-वृष-करशब्दाः यथाक्रमम् अयुग्म-वृषनामासुर-किरणार्थकाः, अपरत्र असम-धर्म-राजग्राह्यांशपराः।

(१०७) मधुपाने वितृष्णा आसन्, नत्वङ्गनाननपाने इति भावः। अत्र उत्कर्षापकर्षहेतू उपभोगेऽपि वैरस्यातृष्णाभावकृत्वे इति महेश्वरः।

(१०८) पृथक् स्थानद्वयेण उपमानविशेषणतया उपमेयविशेषणतया च।

**निषेधो वक्तुमिष्टस्य यो विशेषाभिधित्सया(१०९)॥२०।**
**वक्ष्यमाणोक्तविषयः स आक्षेपो द्विधा मतः ।**

विवक्षितस्य प्राकरणिकत्वादनुपसर्ज्जनीकार्य्यस्य (११०), अशक्य-वक्तव्यत्वमतिप्रसिद्धत्वं वा विशेषं वक्तुं निषेधो (निषेध इव) यः, स वक्ष्यमाणविषय उक्तविषयश्चेति द्विधा आक्षेपः । क्रमेणोदाहरणम्,-

ए, एहि किं वि कीए वि कए
णिक्किय, भणामि अलमह वा ।
अ-विआरिअ-कज्जारम्भ-
आरिणी मरउ ण भणिस्सं (१११) ॥ [व०अश०]

---

(१०९) अग्रवक्तव्यस्यार्थस्य विधितात्पर्य्यकं विशेषप्रतिपत्तये निषेधाभिधानम् आक्षेपः । 'केचित्तु, वक्तुमित्युपलक्षणं करिष्यमाणस्यापि निषेध आक्षेपः । यथा,-

तां सुन्दरीं वर्णयितुं न मे वाणी प्रवर्त्तते ।

-इत्यत्र करिष्यमाणवाणीप्रवृत्तेर्निषेधो वर्णनीयस्यानिर्वाच्यतां व्यनक्तीति आहुः' इति उद्योतकृत् । 'अनिष्टस्यार्थस्य निषेधतात्पर्य्यकं विशेषप्रतिपत्तये विधाननपर आक्षेपः । यथा,-'

गच्छ गच्छसि चेत् कान्त पन्थानः सन्तु ते शुभाः ।
ममापि जन्म तत्रैव भूयाद्‌ यत्र गतो भवान् ॥' इति दर्पणकृत् ।

(११०) अनुपसर्ज्जनीकार्य्यस्य अनुपेक्षणीयस्य । अनुपेक्षणीयस्यापि निषेधो विशेषबोधनायैव भवतीति ज्ञापनार्थं विशेषणमिदं । अतिप्रसिद्धत्वमिति इदमुपलक्षणं, दर्पणकृतस्य अन्यस्यापि विशेषस्य सम्भवात् ।

(१११) ए, एहि किमपि कस्या अपि कृते निष्कृप, भणामि अलमथवा ।
अविचारितकार्य्यारम्भकारिणी म्रियतां न भणिष्यामीति स० ।

ज्योत्स्ना मौक्तिकदाम चन्दनरसः शीतांशुकान्तद्रवः
कर्पूरं कदली मृणालवलयान्यम्भोजिनीपल्लवाः।
अन्तर्मानसमास्त्वया प्रभवता तस्याः स्फुलिङ्गोत्कर-
व्यापाराय भवन्ति, हन्त, किमनेनोक्तेन न ब्रूमहे॥ [उ०प्रति०]

**क्रियायाः प्रतिषेधेऽपि फलव्यक्तिर्विभावना(११२)॥२१॥**

हेतुरूपक्रियाया निषेधेऽपि तत्फलप्रकाशनं विभावना। यथा,-

कुसुमितलताभिरहता-प्यधत्त रुजमलिकुलैरदष्टापि।
परिवर्त्तते स्म, नलिनी-लहरीभिरलोलिताप्यघूर्णत सा॥

**विशेषोक्तिरखण्डेषु कारणेषु फलावचः।**

मिलितेष्वपि कारणेषु (११३) कार्य्यस्याकथनं विशेषोक्तिः।

---

(११२) क्रियतेऽनयेति क्रियाशब्दः प्रसिद्धहेतुपरः। विभावयति कारणान्तरं कल्पयतीति विभावना कारणान्तरकल्पना, प्रसिद्धकारणाभावेऽपि कार्य्योत्पत्तिर्हि कार्य्यस्य कारणान्तरं कल्पयति। विरोधाभासे उभयमेव परस्परं बाध्यतया प्रतीयते, इह तु कारणाभावेन कार्य्यमेव बाध्यतया प्रतीयते, न तु कार्य्येण प्रमाणनिश्चितः कारणाभावोऽपि बाध्यतया प्रतीयते इति भेदः। इत्यमेव उद्योतकृत्। कारणाभावश्च क्वचित् नञादिना साक्षात् क्वचिच्च कारणाभावविरोधिन उक्त्या परम्परया प्रतिपाद्यते, यथा 'यः कौमारहरः' (४४०) इत्यादौ उत्कण्ठाकारणविरोधिनामुक्तिः।

(११३) कारणेषु प्रसिद्धहेतुषु। अत्र बहुत्वमविवक्षितम्। अकथनम् अभावप्रतिपादनमिति यावत्, तच्च क्वचित् नञादिना साक्षात्, क्वचिच्च कार्य्यविरोधिन उक्त्या परम्परया, यथा द्वितीयोदाहरणे शक्तिध्वंसरूपकार्य्यस्य विरोधिनी शक्तिर्निर्दिष्टा। साक्षादुक्तौ स्फुटत्वम् परम्परयोक्तौ अस्फुटत्वमिति

सा अनुक्तनिमित्ता, उक्तनिमित्ता, अचिन्त्यनिमित्ता च (११४)।

क्रमेणोदाहरणम्,-

निद्रानिवृत्तावुदिते द्युरत्ने सखीजने द्वारपदं पराप्ते।
श्लथीकृताश्लेषरसे भुजङ्गे चचाल नालिङ्गनतोऽङ्गना सा॥ [अ० नि०]

कर्पूर इव दग्धोऽपि शक्तिमान् यो जने जने।
नमोऽस्त्ववार्य्यवीर्य्याय तस्मै मकरकेतवे॥ [उ० नि०]

स एकस्त्रीणि जयति जगन्ति कुसुमायुधः।
हरतापि तनुं यस्य शम्भुना न बलं हृतम्॥ [अचि० नि०]

यथासङ्ख्यं क्रमेणैव क्रमिकाणां समन्वयः(११५)॥२२॥

यथा,-

एकस्त्रिधा वससि चेतसि चित्रमत्र
देव, द्विषाञ्च विदुषाञ्च मृगीदृशाञ्च।
तापञ्च सम्मदभरञ्च रतिञ्च पुष्णन्
शौर्य्योष्मणा च विनयेन च लीलया च॥

---

विशेषः। यथा, 'यः कौमारहरः' इत्यादौ अनुत्कण्ठाविरोधिन्या उत्कण्ठाया उक्तिः। कारणप्रतिषेध-फलावचनयोः साक्षादुक्तौ यथाक्रमं विभावनाविशेषोक्ती स्फुटे भवतः, परम्परया उक्तिस्थले तु ते अस्फुटे। अतएव 'यः कौमारहरः' इत्यादौ उभयोरेव अस्फुटत्वम्। अतएव ग्रन्थकृतैव उक्तम् (४पृ०) "अत्र स्फुटो न कश्चिदलङ्कारः" इति।

(११४) प्रकरणादिना ज्ञातस्य निमित्तस्यावचने अनुक्तनिमित्तता, दुरधिगमस्य तस्य अवचने अचिन्त्यनिमित्तता, यथा अन्त्योदाहरणे तनुं हरता हरेण कथं बलं न हृतमित्यत्र हेतुः सहसा चिन्तयितुं न शक्यते इति उद्योतप्रदीपौ।

(११५) येन क्रमेण यावत्सङ्ख्यका ये प्रथममुद्दिष्टास्तेनैव क्रमेण पश्चादपि तेषां तावत्सङ्ख्यकेषु पदार्थेषु सम्बन्धो यथासङ्ख्यमलङ्कारः।

सामान्यं वा विशेषो वा तदन्येन समर्थ्यते ।
.यत्तु, सोऽर्थान्तरन्यासः साधर्म्म्येणेतरेण वा ॥२१॥

साधर्म्म्येण वैधर्म्म्येण वा सामान्यं विशेषेण यत्समर्थ्यते(११६), विशेषो वा सामान्येन, सोऽर्थान्तरन्यासः । क्रमेणोदाहरणम्,-

निजदोषावृतमनसामतिसुन्दरमेव भाति विपरीतम् ।
पश्यति पित्तोपहतः शशिशुभ्रं शङ्खमपि पीतम् ॥ [सा०सा०वि०]

सुचितवसनालङ्कारायां कदाचन कौमुदी-
महसि सुदृशि स्वैरं यान्त्यां गतोऽस्तमभूद्विधुः ।
तदनु भवतः कीर्त्तिः केनाप्यगीयत, येन सा
प्रियगृहमगान्मुक्ताशङ्का, क्व नासि शुभप्रदः ॥ [सा०वि०सा०]

गुणानामेव दौरात्म्यात् धुरि धुर्य्यो नियुज्यते ।
असञ्जातकिणस्कन्धः सुखं स्वपिति गौर्गलिः (११७) ॥
[वै०सा०वि०]

---

(११६) समर्थ्यते सोपपत्तीक्रियते निःसन्देहं प्रताय्यते । अनुपपद्यमानतया सम्भाव्यमानयोः सामान्यविशेषयोरुपपादनार्थं तयोरन्यतरस्योदाहरणोपन्यास अर्थान्तरन्यासः । कार्य्यकारणयोः परस्परं दृष्टान्तदार्ष्टान्तिकभावविरहात् नैव तयोः समर्थ्यसमर्थकभावः सम्भवतीति न तद्कृतप्रभेदः शोक्तः ।

(११७) गलिः कुत्सित इति चन्द्रिका । समर्थोऽप्यधुर्य्यको दुष्ट इति महेश्वरः । अलसः (गड़े) इति तु वयं । गुणाभावात् गलिर्गौर्न धुरि नियुज्यते इति वैधर्म्म्यम् ।

अहो हि मे बह्वपराद्धमायुषा
यदप्रियं वाच्यमिदं मयेदृशम् ।
त एव धन्याः सुहृदः पराभवं
जगत्यदृष्ट्वैव हि ये क्षयं गताः (११८)॥[वे॰सं॰ना॰]

**विरोधः सोऽविरोधेऽपि विरुद्धत्वेन यद्वचः ।**

वस्तुवृत्तेन (११९) अविरोधेऽपि विरुद्धयोरिव यदभिधानं, स विरोधः ।

---

(११८) पूर्व्वार्द्धप्रदर्शितस्य बह्वपराद्धदर्शनस्य विपरीतं बह्वपराद्धा-दर्शनमिति वैधर्म्यम् ।

(११९) वस्तुवृत्तेन वस्तुगत्या याथार्थ्येन । विरुद्धार्थप्रतिपादकस्य पदादेरर्थान्तरपरत्वादिना वस्तुतो विरोधाभावेऽपि आपाततः विरोध-प्रतीतिर्विरोधनामा अलङ्कारः, अयमेव विरोधाभास इत्युच्यते । विरोधश्च भिन्नदेशतया प्रसिद्धयोरेकदेशसम्बन्धादिरूपः पर्य्यवस्यति, यथोदाहरणे, नलिनीकिसलयादि दवदहनराशिरिति कथनात् नलिनीकिसलयत्वादि-जात्या दवदहनत्वजातेर्विरोधः । एकदेशस्थयोर्भिन्नदेशतायाम् असङ्गतिः अलङ्कारो वक्ष्यते । प्रकृतस्य वाक्यार्थस्य विरोधे एव विरोधालङ्कारः, व्यङ्ग्यार्थस्य विरोधे तु नायमलङ्कारः किन्तु विरोधालङ्कारध्वनिः, यथा "तिग्मरुचिरप्रतापः" (५१ पृ॰) इत्यादौ ।

विरोधश्च तत्रैव स्फुटं प्रतीयते यत्र विरोधद्योतकोऽपियत्नः, यथा द्वितीयादिषु उदाहरणेषु; यत्र वा क्रिययोर्विरोधे तयोः समुच्चयोपस्कारः, यथा अष्टमे उदाहरणे; यत्र वा, 'अभूत् भवति भविष्यति' इत्यादिभिः क्रियापदैः विरुद्धयोरैक्यं साध्यतया प्रतीयते, यथा प्रथम-पञ्चम-सप्तमेषु उदाहरणेषु । सप्तमे अभूत् इति क्रियापदमस्ति, अन्ययोस्तु वाक्यसमाप्तौ कयोश्चिदपि क्रियापदयोरध्याहार्यत्वम् । अत एव प्रथमपञ्चमयोरुदाहरणयोर्न

जातिश्चतुर्भिर्जात्याद्यैर्विरुद्धा स्याद्गुणस्त्रिभिः ॥२४॥
क्रिया द्वाभ्यामपि द्रव्यं द्रव्येणैवेति ते दश(१२०)।

अभिनवनलिनीकिसलय-
मृणालवलयादि दवदहनराशिः ।
सुभग, कुरङ्गदृशोऽस्याः
विधिवशतस्त्वद्वियोगपविपाते ॥ (१) [जा० जा०]

गिरयोऽप्यनुन्नतियुजो मरुदप्यचलोऽब्धयोऽप्यगम्भीराः ।
विश्वम्भराप्यतिलघुर्नरनाथ, तवान्तिके नियतम् ॥ (२)[जा० गु०]

येषां कण्ठपरिग्रहप्रणयितां सम्प्राप्य धाराधरः
तीक्ष्णः सोऽप्यनुरज्यते च कमपि स्नेहं पराप्नोति च (१२१)।
तेषां सङ्गरसङ्गसक्तमनसां राज्ञां त्वया भूपते,
पांसूनां पटलैः प्रसाधनविधिर्निर्वर्त्यते कौतुकम् ॥ (३)[जा० क्रि०]

---

रूपकम्, आरोपस्य बाध्यत्वात्, तस्य सिद्धत्वे एव रूपकातिशयोक्तेः स्वीकारात्, सच्चन्द्रमित्याद्युदाहरणेषु तथैव दर्शनात् । अतएव दर्पणकृता "सिद्धत्वेऽध्यवसायस्यातिशयोक्तिर्निगद्यते" इत्युक्तम् । अपि मन्त्राद्देरभावे विरोधस्यास्फुटत्वं, यथा नवमोदाहरणे इति ।

(१२०) जात्याद्यैः जातिगुणक्रियाद्रव्यैः । त्रिभिः गुणक्रियाद्रव्यैः । गुणेन जातेर्विरोध एव जात्या गुणस्य विरोध इति न पृथगुक्तिः । परत्वापेक्षम् । जात्यादयो द्वितीयोल्लासे दर्शिताः ।

(१२१) 'अत्र धाराधरत्व-(खड्गत्व)-जातेरनुरागस्नेहप्राप्तिक्रियाभ्यां विरोधः, कौटिल्य-चिक्कणत्वार्थकत्वादविरोधः' इति प्रदीपः । 'तीक्ष्णः सोऽपि' इत्यत्र तीक्ष्णत्वगुणेनापि विरोधः स्फुटं प्रतीयते इति विभाव्यम् ।

सृजति च जगदिदमवति च
संहरति च हेलयैव यो नियतम्।
अवसरवशतः शफरो
जनार्दनः सोऽपि चित्रमिदम् (१२२)॥ (४) [जा०द्र०]

सततं मुसलासक्ता
बहुतरगृहकर्मघटनया नृपते।
द्विजपत्नीनां कठिनाः
सति भवति कराः सरोजसुकुमाराः॥ (५) [गु०गु०]

पेशलमपि खलवचनं दहतितरां मानसं सुतत्त्वविदाम्।
परुषमपि सुजनवाक्यं मलयजरसवत्प्रमोदयति॥(६)[गु०क्रि०]

क्रौञ्चाद्रिरुद्दामदृषद्दृढोऽयं
यन्मार्गणानर्गलघातपाते।
अभून्नवाम्भोजदलाभिजातः,
स भार्गवः सत्यमपूर्वसर्गः (१२३)॥ (७) [गु०द्र०]

परिच्छेदातीतः सकलवचनानामविषयः
पुनर्जन्मन्यस्मिन्ननुभवपथं यो न गतवान्।

---

(१२२) अत्र शफरत्वजातेर्जनार्दनेन द्रव्येण विरोधः।

(१२३) नवाम्भोजदलस्य अभिजातः नूतनकमलवंशीयः, तज्जातीयः, तत्सदृशः, तद्वत्कोमल इति फलितार्थः। कोमलत्वेन गुणेन क्रौञ्चाद्रिद्रव्यस्य विरोधः।

विवेकप्रध्वंसादुपचितमहामोहगहनो
विकारः कोऽप्यन्तर्जडयति च तापञ्च कुरुते (१२४) ॥(८)
[वि॰वि॰]

अयं वारामेको निलय इति रत्नाकर इति
श्रितोऽस्माभिस्तृष्णातरलितमनोभिर्जलनिधिः ।
क एवं जानीते निजकरपुटीकोटरगतं
क्षणादेनं ताम्यत्तिमिमकरमापास्यति मुनिः (१२५) ॥(९) [वि॰इ॰]

समद-मतङ्गज-मदजल-
निस्यन्दतरङ्गिणीपरिष्वङ्गात् ।
क्षितितिलक, त्वयि तटजुषि
शङ्करचूडापगापि कालिन्दी (१२६) ॥(१०) [इ॰इ॰]

स्वभावोक्तिस्तु डिम्भादेः स्वक्रियारूपवर्णनम् ॥२५॥(१२७)

---

(१२४) ड-लयोरैक्यात् जडयति जलयति, शीतलयति ।

(१२५) मुनिरगस्त्यः । पानक्रियायाः अगस्त्येन कर्त्रा, समुद्रेण कर्म्मणा च द्रव्येण विरोधः, नरविशेषस्य अगस्त्यस्य समुद्रपानासम्भवात् ।

(१२६) शङ्करचूडापगा गङ्गा । कालिन्दी यमुना । मदजलमीलिता गङ्गाया नीलता, तेन इदं विरोधापादनम् ।

(१२७) डिम्भादेरित्यादिना विवेकशक्तिरहितानां तिर्य्यगादीनां ग्रहणमिति महेश्वरोद्योतौ ; वस्तुतः उपलक्षणमेतत्, एवं क्रियारूपेत्यपि उपलक्षणम्, तेन यस्य कस्यचित् वस्तुनोऽसाधारणधर्म्मवर्णनमेव स्वभावोक्तिः, यथा वस्तुनः स्वभावस्य तन्मात्रगतस्य प्रकृतिसिद्धस्य धर्म्मस्य प्रकाशो भवेत् तादृशी उक्तिरिति यावत् ।

स्वयोस्तदेकाश्रययोः। रूपं वर्णः संस्थानञ्च (१२८)।

उदाहरणम्,-

पश्चादङ्घ्री प्रसार्य त्रिक-नतिविततं द्राघयित्वाङ्गमुच्चैः,
आसज्याभुग्नकण्ठो मुखमुरसि सटां धूलिधूम्रां विधूय।
घासग्रासाभिलाषादनवरतचलत्प्रोथतुण्डस्तुरङ्गो
मन्दं शब्दायमानो विलिखति शयनादुत्थितः क्ष्मां खुरेण(१२९)॥

व्याजस्तुतिर्मुखे निन्दा स्तुतिर्वा रूढिरन्यथा (१३०)।

व्याजरूपा व्याजेन वा स्तुतिः। क्रमेणोदाहरणम्,-

हित्वा त्वामुपरोधवन्ध्यमनसां मन्ये न मौलिः परः,
लज्जावर्जनमन्तरेण न रमामन्यत्र सन्दृश्यते।
यस्त्यागं तनुतेतरां मुखशतैरेत्याश्रितायाः श्रियः,
प्राप्य त्यागकृतावमाननमपि त्वय्येव यस्याः स्थितिः॥ [स्तु॰]

---

(१२८) तदेकाश्रययोः तन्मात्रगतयोः। संस्थानं अङ्गप्रत्यङ्ग-विन्यासः, आकारो वा।

(१२९) त्रिकस्य कोटिप्रदेशस्य नतिर्नमनं, विततं विस्तारश्च यथा स्यात् तथा अङ्गम् उच्चैः द्राघयित्वा दीर्घं कृत्वा, मुखं उरसि आसज्य संयुज्य आभुग्नकण्ठः नम्रीकृतकण्ठः। अनवरतं चलन् प्रोथो नासिका यत्र तादृशं तुण्डं मुखं यस्य सः।

(१३०) मुखे आपाततः। रूढिः पर्यवसाने प्रतीतिः। अन्यथा (यथाक्रमं) स्तुत्या निन्दया वा। स्तुतिपर्यवसायिनी निन्दा, निन्दापर्यवसायिनी वा स्तुतिर्व्याजस्तुतिरिति फलितम्। व्याजस्तुतिपदद्वयं एतदर्थद्वयं द्योतकम्।

हे हेलाजित-बोधिसत्त्व, वचसां किं विस्तरैस्तोयधे,
नास्ति त्वत्सदृशः परः परहिताधाने गृहीतव्रतः ।
तृष्यत्पान्थजनोपकार-घटना-वैमुख्य-लब्धायशो-
भारप्रोद्वहने करोषि कृपया साहाय्यकं यन्मरोः ॥ [नि०]

सा सहोक्तिः सहार्थस्य बलादेकं द्विवाचकम् ॥२६॥

एकार्थाभिधायकमपि सहार्थबलात् यद् उभयस्यावगमकं सा सहोक्तिः (१२१) । यथा,-

सह दिअसणिसाहिं दीहरा सासदण्डा,
सह मणिवलएहिं बाप्पधारा गलन्ति ।
तुह सुहअ, विओए तीअ उव्वेअणीए
सह अ तणुलदाए दुब्बला जीविदासा (१२२) ॥

श्वासदण्डादिगतं दीर्घत्वादि शाब्दम्, दिवसनिशादिगतं तु सहार्थसामर्थ्यात्प्रतिपद्यते ।

---

(१२१) यथोदाहरणे 'दीर्घा श्वासदण्डा भवन्ति' इति वाक्यं श्वासदण्डगतमेवैकं दीर्घभवनमभिधत्ते । तथापि सहशब्दस्य एकक्रियान्वयित्वरूपसाहित्यबोधकतया 'दिवसनिशाभिः सह' इत्यत्र सहशब्देन प्रकृतायां एकस्यां दीर्घभवनक्रियायामन्वयबोध इति श्वासदण्डदीर्घभवनवत् दिवसनिशादीर्घभवनस्य अवगम इति । 'पुत्रेण सह पिता गच्छति' इत्यादौ चमत्काराभावात् अतिशयोक्तिमूलिका एव चमत्कारजनिका सहोक्तिरलङ्कारः ।

(१२२) सह दिवसनिशाभिर्दीर्घाः श्वासदण्डाः,
सह मणिवलयैर्बाष्पधारा गलन्ति ।
तव सुभग, वियोगे तस्या उद्वेजिन्याः
सह च तनुलतया दुर्बला जीविताशा ॥ इति सं० ।

**विनोक्तिः सा, विनान्येन, यत्रान्यः सन्न, नेतरः(१३३)।**

क्वचिदशोभनः, क्वचिच्छोभनः। क्रमेणोदाहरणम्,-

अरुचिर्निशया विना शशी,
शशिना सापि विना महत्तमः।
उभयेन विना मनोभव-
स्फुरितं नैव चकास्ति कामिनोः॥ [अशो०]

मृगलोचनया विना विचित्र-व्यवहार-प्रतिभा-प्रभा-प्रगल्भः।
अमृतद्युतिसुन्दराशयोऽयं सुहृदा तेन विना नरेन्द्रसूनुः॥
[शो०]

**परिवृत्तिर्विनिमयो योऽर्थानां स्यात्समासमैः॥२७॥**

परिवृत्तिरलङ्कारः (१३४)। उदाहरणम्,-

लतानामेतासामुदितकुसुमानां मरुदयं
मतं लास्यं दत्त्वा श्रयति भृशमामोदमसमम्।
लतास्वध्वन्यानामहह! दृशमादाय सहसा
ददात्याधिव्याधिभ्रमिरुदितमोहव्यतिकरम्॥

अत्र, प्रथमेऽर्द्धे समेन समस्य; द्वितीये उत्तमेन न्यूनस्य।

---

(१३३) यत्र शोभनः, इतरः अशोभनः। शोभन इति वक्तव्येऽपि 'अशोभनो न' इत्यभावरूपेणाभिधानमत्रायमभिप्रायः, यत्तु वर्णनीयवस्तुनो अशोभनत्वं प्रतीयते, तत् परवर्त्तिविरहदोषविजृम्भितमेव, वर्णनीयस्य वस्तुनः पुनः स्वाभाविकमेव शोभनत्वमिति दर्पणाभिप्रायः।

(१३४) कारिकायाम्, विनिमयः किञ्चित् वस्तु दत्त्वा कस्यचित् वस्तुन आदानम्। समासमयोरन्यतरस्य दानपूर्वकमन्यतरस्यादानं कविकल्पितम् परिवृत्तिरलङ्कारः। समत्वासमत्वे उपादेयत्वानुपादेयत्वाभ्यां बोध्ये।

नानाविधप्रहरणैर्नृप, सम्प्रहारे
स्वीकृत्य दारुणनिनादवतः प्रहारान्।
दृप्तारिवीरविसरेण वसुन्धरेयं
निर्विप्रलम्भपरिरम्भविधिर्वितीर्णा॥

अत्र न्यूनेनोत्तमस्य॥

प्रत्यक्षा इव यद्भावाः क्रियन्ते भूतभाविनः।
तद्भाविकम्,

भूताश्च भाविनश्चेति द्वन्द्वः। भावः कवेरभिप्रायः (१२५) अस्तीति भाविकम्। उदाहरणम्,-

आसीदञ्जनमत्रेति पश्यामि तव लोचने।
भाविभूषणसम्भारां साक्षात्कुर्वे तवाकृतिम्॥

अत्राद्ये भूतस्य, द्वितये भाविनो दर्शनम्॥

काव्यलिङ्गं हेतोर्वाक्यपदार्थता (१२६) ॥२८॥

---

(१२५) अभिप्रायः भूतभाविनोरपि प्रत्यक्षतयैव प्रतिपादनेच्छा। यथोदाहरणे, 'अत्र अञ्जनम् आसीत्' इति पश्यामि, 'भाविभूषणसम्भारां तवाकृतिं साक्षात् कुर्वे' इत्यनेन भूतस्यापि अञ्जनस्य भविष्यतोऽपि च भूषणसम्भारस्य दर्शनक्रिययाऽन्वयात् वर्त्तमानतया प्रतिपादनं, वर्त्तमानस्यैव दर्शनयोग्यत्वात्। भूतभविष्यतोरप्यनयोः कोऽपि सन्देहो नास्तीति प्रतिपत्त्यर्थं वर्त्तमानतयैव प्रतिपादनम्।

(१२६) हेतोः, प्रतिपाद्यमानं कमप्यर्थं प्रति कारणस्य। वाक्यपदार्थत्वे अल्पत एव (हेतुत्वप्रतिपादनं विनैव) वाक्यस्य पदस्य वा प्रतिपाद्यत्वे। हेतुत्वस्य तु त्रिपद-पञ्चमीविभक्त्यादिना वाच्यत्वेऽगूढत्वेन अचमत्कारितया

वाक्यार्थता यथा,-

वपुःप्रादुर्भावादनुमितमिदं, जन्मनि पुरा,
पुरारे, न प्रायः क्वचिदपि भवन्तं प्रणतवान् ।
नमन्मुक्तः सम्प्रत्यहमतनुरग्रेऽप्यनतिभाक्,
महेश, क्षन्तव्यं तदिदमपराधद्वयमपि (१३७) ॥

अनेकपदार्थता यथा,-

प्रणयसखीसलीलपरिहासरसाधिगतै-
र्ललितशिरीषपुष्पहननैरपि ताम्यति यत् ।
वपुषि वधाय तत्र तव शस्त्रमुपक्षिपतः
पततु शिरस्यकाण्डयमदण्ड इवैष भुजः (१३८) ॥

एकपदार्थता यथा,-

भस्मोद्धूलन, भद्रमस्तु भवते रुद्राक्षमाले, शुभम्,
हा सोपानपरम्परां गिरिसुताकान्तालयालङ्कृतिम् ।
अद्याराधनतोषितेन विभुना युष्मत्सपर्य्यासुखा-
लोकोच्छेदिनि मोक्षनामनि महामोहे निधीयामहे ॥

---

नायमलङ्कारः, किन्तु उपात्तयोः कार्य्यहेत्वोरनुपात्तापि हेतुता वाक्य-वैचित्र्यादिना वाच्यवत् यत्र स्फुटं प्रतीयते, तत्रैवायमलङ्कार इति बहवः । केचित्तु, हेतुत्वस्य वाच्यत्वेऽपि इममलङ्कारमङ्गीकुर्व्वन्ति एवमेव मल्लीनाथः ।

(१३७) अपराधः दण्डार्हत्वम् । अत्र भूतभाविजन्मनोरनमनरूपहेत्वोः, 'न प्रणतवान्' इति 'अनतिभाग्' इति च क्रियाद्वयेन समाप्तयोः वाक्ययो-रर्थता ।

(१३८) 'वपुषि शस्त्रमुपक्षिपतः' इति प्रातिपदिकानां क्रियासाकाङ्क्ष-तया वाक्यभावमनाप्तानामनेकपदानामर्थः शस्त्रोपक्षेपरूपो हेतुः ।

एषु, अपराधद्वये पूर्व्वापरजन्मनोरनमनं, भुजपाते शङ्खोपक्षेपः महाभोगे सुखालोकोच्छेदित्वञ्च यथाक्रममुक्तरूपो हेतुः ॥

पर्य्यायोक्तं विना वाच्यवाचकत्वेन, यद्वचः।

वाच्यवाचकभावव्यतिरिक्तेन अवगमनव्यापारेण (१३८) यत् प्रतिपादनं, तत् (पर्य्यायेण भङ्ग्यन्तरेण कथनात्) पर्य्यायोक्तम्। उदाहरणम्,-

यं प्रेक्ष्य चिररूढ़ापि निवासप्रीतिरुज्झिता।
मदेनैरावणमुखे मानेन हृदये हरेः॥

अत्र ऐरावणशक्रौ मदमानमुक्तौ जाताविति व्यङ्ग्यमपि शब्देन

---

(१३८) अवगमनं व्यञ्जना। प्रतिपादनम् बोधनम्, अर्थात् वक्तव्यस्य अर्थस्य। भङ्गिः प्रकारः। विवक्षितमर्थं साक्षात् (स्ववाचकपदेन) अकथयित्वा (वैचित्र्यविशेषाय) प्रकारान्तरेण कथनम् पर्य्यायोक्तमिति। तदुक्तं दण्डिना,-

'अर्थमिष्टमनाख्याय साक्षात्, तस्यैव सिद्धये।
यत्प्रकारान्तराख्यानं पर्य्यायोक्तं तदिष्यते'॥ इति।

यत्र वाक्यार्थव्यङ्ग्यार्थयोः पर्य्यवसाने ऐक्यम्, केवलं उक्तिप्रतीत्योः प्रकारभेदः, तत्र पर्य्यायोक्तमिति फलितार्थः, यथोदाहरणे, ऐरावणशक्रौ मदमानमुक्तौ जाताविति व्यङ्ग्यार्थ एव 'यं प्रेक्ष्य' इत्यादिना शब्देन प्रकारभेदेन उच्यते; यथा, 'जनो गच्छति' 'जनेन गम्यते' इति, 'अत्रागम्यतां', 'गमनेनालङ्क्रियतामिदं' इत्यादि। ततश्च य एवार्थः अभिधातुमभिप्रेयते, स एवार्थः व्यञ्जनया प्रतीयते, परन्तु येन प्रकारेणार्थो व्यज्यते, न तेन प्रकारेण उच्यते इति प्रकारभेद। वैचित्र्यविशेषाय साक्षादनुक्त्वा प्रकारान्तरेण कथनं न दोषायेति। अत्र सत्यपि व्यङ्ग्येऽर्थे अतिस्फुटतया न तथा चमत्कुरुते यथा उक्तिवैचित्र्यमिति न ध्वनित्वं, नापि गुणीभूतव्यङ्ग्यत्वमिति, किन्तु चित्रकाव्यत्वमिति विभावनीयम्।

ऽभ्यते, तेन, यदेवोच्यते, तदेव व्यङ्ग्यं, यथा तु व्यङ्ग्यं न तथोच्यते; यथा (१४०) गवि शुक्ले चलति दृष्टे, 'गौः शुक्लश्चलति'-इति विकल्पः, यदेव दृष्टं तदेव विकल्पयति, नतु यथा दृष्टं तथा, यतोऽभिन्नासंसृष्टत्वेन दृष्टम्, भेदसंसर्गाभ्यां विकल्पयति ॥

---

(१४०) एकेन प्रकारेण अवगतस्यापि अर्थस्य प्रकारान्तरेण प्रतिपत्तौ दृष्टान्तमाह, 'यथा गवि' इति। 'अस्तिदमिति इन्द्रियेण चक्षुरादिना सामान्यतः प्रथममालोकयति, ततश्च 'इदमेवं, इदं नैवं' इत्यादिरीत्या विशेषेण विशेषणविशेष्यभावसम्बन्धादिना मनसा सम्यक् कल्पयति, विवेचयति इति मनः विकल्पकं संकल्पकमिति चोच्यते' इति शास्त्रनियमेन चक्षुरादिना प्रथमत एव, गौः शुक्लश्चलतीतिरीत्या विशेषणविशेष्यभावेन गो-शुक्ल-चलनानां बोधो न जायते, किन्तु परस्परसम्बन्धानवगाहनेन तेषां ज्ञानं जायते, पश्चात् मनः विशेषणविशेष्यभावेन गोः शुक्लगुण-चलनक्रियाभ्यां सम्बन्धावधारणात्मकं 'गौः शुक्लश्चलति' इत्याकारकं विकल्पज्ञानं जनयति इति।

विकल्पे च ज्ञाने, गौः शुक्लगुण-चलनक्रियाभ्यां भिन्नत्वेन तयोः आधार-रूपसम्बन्धित्वेन च प्रकारेण भासते, (गौः शुक्लः चलतीति विशिष्टज्ञानानन्तरं गवि शुक्लगुणादेर्भेदसम्बन्धयोः संशयाद्यनुदयात्), प्राथमिके तु ज्ञाने भेदसम्बन्धौ न प्रकाराविति। यथा पूर्वं दृष्टानामपि गवादीनां विकल्पज्ञाने प्रकारान्तरेण पुनः-प्रतीतिः, तथा प्रकृते वाच्यस्यापि प्रकारभेदेन व्यञ्जनया पुनः-प्रतीतिरिति। यथा दृष्टं, येन प्रकारेण दृष्टम्। तथा तेनैव रूपेणेत्यर्थः। अभिन्नासंसृष्टत्वेन दृष्टमित्यस्य भेदेन सम्बन्धेन च प्रकारेण अदृष्टमिति फलितोऽर्थः।

प्राथमिके दर्शने गो-शुक्ल-चलनानामभेद एव प्रतीयते, न तु भेदः, परस्परं संसर्गो वा प्रतीयते, तेषां भेदसंसर्गौ तु मनसा पश्चात् कल्पयति इति तु यथाश्रुतानुसारिणः व्याचक्षिरे।

उदात्तं वस्तुनः सम्पत्,

सम्पत् समृद्धियोगः । यथा,—

मुक्ताः केलिविसूत्रहारगलिताः सम्मार्जनीभिर्हृताः
प्रातः प्राङ्गणसीम्नि मन्थरचलद्बालाङ्घ्रिलाक्षारुणाः ।
दूराद्दाडिमबीजशङ्कितधियः कर्षन्ति केलीशुकाः
यद्विद्वद्भवनेषु, भोजनृपतेस्तत् त्यागलीलायितम् ॥

महतां चोपलक्षणम् (१४१) ॥२६॥

उपलक्षणमङ्गभावः, अर्थादुपलक्षणीयेऽर्थे । उदाहरणम्,—

तदिदमरण्यं यस्मिन्दशरथवचनानुपालनव्यसनी ।
निवसन् बाहुसहायश्चकार रक्षः-क्षयं रामः ।

नचात्र वीरो रसः (१४२), तस्येहाङ्गत्वात् ॥

तत्सिद्धिहेतावेकस्मिन् यत्रान्यत्तत्करं भवेत् ।
समुच्चयोऽसौ (१४३),

---

(१४१) उपलक्षणीयेऽङ्गिनि वर्णनीये वर्णनीयस्यार्थस्य विशेषणतया महत उपादानेऽपरमुदात्तमित्यर्थः ।

(१४२) बाहुमात्रसहायात् रक्षःक्षयकरणरूपेण अनुभावेन अभिव्यक्तस्य उत्साहस्यैव चमत्कारित्वादिति शेषः । तथा च वीररसध्वनिरेवायं नतूदात्तचित्रध्वनिरिति पूर्व्वपक्षः । अङ्गत्वात् परम्परया उत्कर्षकत्वेन उपकारकत्वात्, उत्साहेन उत्कर्षितो हि रामः वर्णनीयमरण्यमुत्कर्षयति । अयमत्र सिद्धान्तः, नात्र वीरो रसो वर्णनीयः, किन्तु अरण्यम्, अतो न वीररसध्वनिरिति ।

(१४३) काव्यलिङ्गे हेतुत्वमात्रं विवक्षितम्, अस्मिन्समाध्यलङ्कारे एकेन हेतुना कार्य्ये निष्पाद्यमाने आगन्तुकेनापरेण कार्य्यस्य सौकर्य्यकरणं

तस्य (प्रस्तुतस्य कार्य्यस्य) एकस्मिन् साधके स्थिते साधकान्तराणि यत्र सम्भवन्ति, स समुच्चयः । उदाहरणम्,-

दुर्व्वाराः स्मरमार्गणाः, प्रियतमो दूरे, मनोऽत्युत्सुकं,
गाढ़म् प्रेम, नवं वयोऽतिकठिनाः प्राणाः, कुलं निर्मलम् ।
स्त्रीत्वं धैर्य्यविरोधि, मन्मथसुहृत्कालः, कृतान्तोऽक्षमी,
नो सख्यश्चतुराः, कथं नु विरहः सोढ़व्य इत्थं शठः॥ (अ॰गो॰)

अत्र विरहासहत्वं स्मरमार्गणा एव कुर्व्वन्ति, तदुपरि प्रियतमदूरस्थित्यादि उपात्तम् । एष एव समुच्चयः सद्योगेऽसद्योगे सदसद्योगे च पर्य्यवस्यतीति न पृथक् लक्ष्यते । तथाहि,

कुलममलिनं, भद्रा मूर्त्तिर्मतिः श्रुतशालिनी,
भुजबलमलं, स्फीता लक्ष्मीः, प्रभुत्वमखण्डितम् ।
प्रकृतिसुभगाः ह्येते भावाः, अमीभिरयं जनो
व्रजति सुतरां दर्पं, राजन्, त एव तवाङ्कुशाः ॥

अत्र सतां योगः । उक्तोदाहरणे तु असतां योगः ।

शशी दिवसधूसरो, गलितयौवना कामिनी,
सरो विगतवारिजं, मुखमनक्षरं स्वाकृतेः ।
प्रभुर्धनपरायणः, सततदुर्गतः सज्जनो,
नृपाङ्गनगतः खलो मनसि सप्त शल्यानि मे ॥

---

विवक्षितं, अत्र तु बहूनां कार्य्यकरणक्षमाणां साहित्यं विवक्षितमिति परस्परमेषां भेदः ।

अत्र, शशिनि धूसरे शल्येत्, मनसाऽन्तराणीति (१४४)। शोभनाशोभनयोगः (१४५)॥

**स त्वन्यो, युगपद् या गुणक्रियाः ॥३०॥**

गुणौ च क्रिये च गुणक्रिये च, गुणक्रियाः (१४६)। क्रमेणोदाहरणम्,-

विदलितसकलारिकुलं
तव बलमिदमभवदाशु विमलञ्च ।
प्रखलमुखानि नराधिप,
मलिनानि च यातानि ॥ [गु०गु०]

---

(१४४) धूसरशशिरूपशल्यमेव मर्मभेदं करोति, तदुपरि गलित-यौवनादीनि उपात्तानीति समुच्चयस्य सामान्यलक्षणसमन्वय इति शेषः ।

(१४५) शशिनः स्वतःशोभनस्यापि दिवसधूसरत्वाद् अशोभनत्वेन शोभनाशोभनरूपस्य, तादृशैरेव कामिनीप्रभृतिभिः स्वतःशोभनैः गलित-यौवनत्वादिना अशोभनैः समुच्चयः । 'नृपाङ्गनगतः खलः'-इत्यत्र तु नृपाङ्ग-गतत्वेन शोभनत्वम्, खलत्वेन तु अशोभनत्वमिति रीत्या सदसद्रूपतासमर्थ-नेऽपि अस्मिन्नंशे नायमलङ्कारः, किन्तु स्वतःशोभनस्य धर्मविशेषसम्पर्कात् अशोभनरूपस्य सदसतः प्रकरणे स्वतोऽशोभनरूपस्य खलस्य पाठात्, सहचर-भिन्नत्वप्रक्रमभङ्गत्वदोषावेव स्तः । इह सदसत्त्वम् उपादेयानुपादेयतया सङ्करभिप्रेतत्वम्, 'दुर्वारा' इत्यत्र प्रियतमादयः स्वतःशोभना अपि वस्तुः विरहिण्याः दुःखहेतुतया तदानीमनुपादेयतयैव विवक्षिता इत्यसत्त्वम् । इह तु शशिप्रभृतय उभयरूपतयैव विवक्षिता इति सदसत्त्वम् । एवमेव चन्द्रिकायाम् ।

(१४६) तथाच सूत्रस्य 'गुणक्रियाः' इति पदम् एकशेषनिष्पन्नम्, यथा, गुणौ च क्रिये च गुणक्रियाः, गुणश्च क्रिया च गुणक्रिये, गुणक्रियाः

अयमेकपदे तया वियोगः
प्रियया चोपनतः सुदुःसहो मे ।
नववारिधरोदयादहोभि-
र्भवितव्यञ्च निरातपत्व-रम्यैः ॥ [क्रि०क्रि०]
कलुषञ्च तवाहितेष्वकस्मात्
सितपङ्केरुहसोदरश्रि चक्षुः ।
पतितञ्च महीपतीन्द्र, तेषां
वपुषि प्रस्फुटमापदाङ्कटाक्षैः ॥ [गु०क्रि०]
'धुनोति चासिं तनुते च कीर्त्तिम्' इत्यादेः,
'कृपाणपाणिश्च भवान् रणक्षितौ
स-साधुवादाश्च सुराः सुरालये।'-

इत्यादेश्च दर्शनात्,(१४७) 'व्यधिकरणे' इति, 'एकस्मिन्देशे' इति च न वाच्यम् (१४८)।

---

गुणक्रिये च गुणक्रिया इति। गुणक्रियासाहित्यं समुच्चयः। दीपके तु सतीष्वपि बह्वीषु क्रियासु साहित्यं न विवक्षितमिति ततो भेदः।

(१४७) एतु कार्य्यकारणयोरेककालत्वविपर्य्ययरूपातिशयोक्तिमूलं न तु स एवालङ्कारः, तस्यैवाङ्गत्वात्।

(१४८) न वाच्यं समासे न निवेश्यम्, तथा निवेशे एवासंभवः स्यात्, यतः 'धुनोति, तनुते' इत्येतयोः एक एव कर्त्ता इति न क्रिययोः व्यधिकरणता, तथा 'रणक्षितौ भवान्, देवाः सुरालये' इति कथनात्, न पाणौ-कृपाणकरणस्याभावात्करणयोः क्रिययोरेकदेशता इति। तथाच गुणक्रियासाहित्यमात्रं 'समुच्चय इत्यङ्गीकार्य्यम्।

**एकं क्रमेणानेकस्मिन् पर्य्यायः**

एकं वस्तु क्रमेणानेकस्मिन् भवति क्रियते वा (१४९) स पर्य्यायः। क्रमेणोदाहरणम् (१५०),-

नन्वाश्रयस्थितिरियं तव कालकूट,
केनोत्तरोत्तरविशिष्टपदोपदिष्टा।
प्रागर्णवस्य हृदये, वृषलक्ष्मणोऽथ
कण्ठेऽधुना वससि वाचि पुनः खलानाम्॥ [भ०]

यथा वा,-

बिम्बौष्ठ एव रागस्ते तन्वि, पूर्व्वमदृश्यत।
अधुना हृदयेऽप्येष मृगशावाक्षि, लक्ष्यते॥ [भ०]

रागस्य वस्तुतो भेदेऽप्येकतया अध्यवसितत्वादेकत्वम् अविरुद्धम् (१५१)।

---

(१४९) एकस्य वस्तुनोऽनेकत्र सम्बन्धो यत्र, 'निवेशितः न्यस्तः समारोपितः' इत्यादिरूपेण नोक्तः, तत्र एकं वस्तु अनेकत्र भवति, यत्र तु तथा उक्तः तत्र क्रियते इति विशेषः।

(१५०) 'श्रोणीभारस्त्यजति तनुतां, सेवते मध्यभागः,
पद्भ्यां मुक्तास्तरलगतयः संश्रिता लोचनाभ्याम्।
धत्ते वक्षः कुचसचिवतामद्वितीयन्तु वक्त्रम्,
तद्गात्राणां गुणविनिमयः कल्पितो यौवनेन॥'

-इति पद्यम् प्रदीपोद्योतनिदर्शनलिङ्गैरत्र नोदाहृतम्, क्रमभङ्गभीरुणा महेश्वरेण च बिम्बौष्ठ एवेति पद्यस्यानन्तरं, 'क्रियते' इत्यस्य उदाहरणतया अधारि, चन्द्रिकायान्तु प्रथममेवेदमुदाहरणतया व्याख्यातम्। प्रयोजनाभावात् प्रदीपाद्यनुसरणमेव श्रेयः इति कृत्वा इदं नोद्धृतम्।

(१५१) तदत्र श्लेषमूलकातिशयोक्तिरेवात्रास्य मूलं बोध्यम्।

तत्ताणं सिरिसहोअररअणाहरणम्मि हिअअमेक्करसं ।
बिंबाहरे पिआणं णिवेसिअं कुसुमबाणेण(१५२) ॥ [कि०]

अन्यस्ततोऽन्यथा (१५३) ।

अनेकमेकस्मिन् क्रमेण भवति क्रियते वा सोऽन्यः । क्रमेण उदाहरणम्,-

मधुरिमरुचिरं वचः खलानाम्
अमृतमहो प्रथमं पृथु व्यनक्ति ।
अथ कथयति मोहहेतुमन्त-
र्गतमिव हालाहलं विषं तदेव ॥ [भ०]

तद्गेहं नतभित्ति, मन्दिरमिदं लब्धावकाशं दिवः,
सा धेनुर्जरती, नदन्ति करिणामेता घनाभा घटाः ।
स क्षुद्रो मुसलध्वनिः, कलमिदं सङ्गीतकं योषिताम्
आश्चर्यं दिवसैर्द्विजोऽयमियतीं भूमिं समारोपितः ॥ [कि०]

अनुमानं तदुक्तं यत्साध्यसाधनयोर्वचः ॥३१॥

पक्षधर्मान्वयव्यतिरेकित्वेन (१५४) त्रिरूपो हेतुः साधनं, धर्म्मिणि अयोगव्यवच्छेदो व्यापकस्य, साध्यत्वम् । यथा,-

---

(१५२) तासां श्रीसहोदररत्नाभरणे हृदयमेकरसम् ।
बिम्बाधरे प्रियाणां निवेशितम् कुसुमबाणेन ॥ इति सं० ।

श्रीसहोदररत्नम् कौस्तुभः, तदाभरणे हरौ इति उद्योतचन्द्रिका-प्रभृत्युदाहृताः । रअणाहरणम्मि इत्यस्य रत्नाहरणे इति केचिदनुवदन्ति ।

(१५३) "पर्यायोऽन्यस्ततोऽन्यथा" इति पाठे सत्त्वात् नात्र छन्दोभङ्गः ।

(१५४) पक्षधर्मत्वम्, पक्षे (यत्रानुमिनोति स पक्षः, 'पर्वतो वह्निमान् धूमात्' इत्यादौ पर्वतादिः) हेतोर्वर्त्तित्वम् । अन्वयित्वम्, सपक्षे

यत्रैता लहरीचलाचलदृशो व्यापारयन्ति भ्रुवं,
यत् तत्रैव पतन्ति सन्ततममी मर्मस्पृशो मार्गणाः।
तच्चक्रीकृत-चापमञ्चितशर-प्रेङ्खत्करः क्रोधनो
धावत्यग्रत एव शासनधरः सत्यं सदासां स्मरः॥

साध्यसाधनयोः पौर्व्वापर्य्यविकल्पे न किञ्चिद्वैचित्र्यमिति न तथा दर्शितम् (१५५)॥

विशेषणैर्यत्साकूतैरुक्तिः परिकरस्तु सः।

अर्थाद्विशेष्यस्य। उदाहरणम्,-

---

(निश्चितसाध्यवति महानसादौ) हेतोर्वृत्तित्वम्। व्यतिरेकित्वम्, विपक्षे (निश्चितसाध्यवह्निशून्ये जलादौ) हेतोरवृत्तित्वम्। धर्मिणि, हेतुमति पक्षे (पर्व्वतादौ) व्यापकस्य, हेत्वपेक्षया अन्यूनदेशस्थितस्य (वह्न्यादेः) अयोगव्यवच्छेदः नियतः सम्बन्धः। यथा 'पर्व्वतो वह्निमान् धूमात्' इत्यादौ पर्व्वते पक्षे धूमस्य हेतोर्वृत्तित्वमस्ति, एवं वह्निरूपसाध्यनिश्चयवति महानसेऽपि धूमस्य हेतोर्वृत्तित्वमस्ति, तथा वह्निरूपस्य साध्यस्याभावनिश्चयवति जलाधारे धूमस्य हेतोर्वृत्तित्वं नास्तीति लिङ्गरूपेण धूमेन हेतुना पर्व्वते पक्षे साध्यस्य वह्नेरनुमानं भवति। परन्तु 'पर्व्वतो वह्निमान् धूमात्'-इत्यादौ चमत्काराभावान्नायमलङ्कार इति कविप्रतिभाकल्पितम् यत् एकस्मिन् धर्म्मिणि साधनेन साध्यस्य उन्नयनम् तदनुमानमिति तु निष्कर्षः। यथोदाहरणे नारीकटाक्षपातप्रदेशे बाणप्रक्षेपणकर्तृत्वेन हेतुना एकस्मिन् धर्म्मिणि कन्दर्पे नारीणामग्रतो धावनमनुमीयते।

(१५५) ननु साध्यस्य पूर्व्वमुक्तौ एकः, साध्यस्य परमुक्तौ चैक इति भेदद्वयमादाय कथं विभागो न कृत इत्यत आह साध्यसाधनयोरिति।

महौजसो मानधना धनार्चिता
धनुर्भृतः संयति लब्धकीर्त्तयः।
न संहतास्तस्य न भेदवृत्तयः
प्रियाणि वाञ्छन्त्यसुभिः समीहितुम्॥

यद्यपि अपुष्टार्थस्य दोषताभिधानात्तन्निराकरणेन पुष्टार्थस्वीकारः कृतः, तथाप्येकनिष्ठत्वेन बहूनां विशेषणानामेवमुपन्यासे वैचित्र्यमित्यलङ्कारमध्ये गणितः (१५६)।

व्याजोक्तिश्छद्मनोद्भिन्न-वस्तु-रूपनिगूहनम् ॥३२॥

निगूढमपि (१५७) वस्तुनो रूपं कथमपि प्रभिन्नं केनापि व्यपदेशेन यदपह्नूयते, सा व्याजोक्तिः। न चैषा अपह्नुतिः, प्रकृताप्रकृतोभयनिष्ठस्य साम्यस्येहासम्भवात्।

---

(१५६) अपुष्टार्थः अपुष्टार्थता। पुष्टार्थः पुष्टार्थता। अत्रायं भावः, न अपुष्टार्थत्वदोषाभावेन परिकरस्य वैफल्यं। निर्विशेषणतास्थले सत्यपि अपुष्टार्थत्वदोषाभावे सार्थकबहुविशेषणोपादानकृतचमत्काराभावेन परिकराभावादिति। तथाच सार्थकबहुविशेषणैरर्थस्य परिपोषणं परिकर इति फलितम्। एकस्मिन्नपि सार्थके विशेषणे चमत्कारानुभवाच्च तत्राप्ययमलङ्कारः- इति तु प्रदीपः।

(१५७) निगूढमपि, गुप्तमपि परैः अनुन्नायनीयमपि अनुपलक्षितमपि। रूपं स्वभावः प्रकृतार्थस्य। कथमपि चिह्नविशेषादिना (हठात्)। प्रभिन्नं उद्भिन्नं स्फुटं परैरुन्नायनीयं उपलक्षितम्। केनापि व्यपदेशेन, येन केनचित् असत्यस्वकारणाद्युपन्यासेन। साम्यमूलकोऽपह्नवोऽपह्नुतिः, अत्र तु न साम्यविवक्षेति भेदः। इदमुपलक्षणम्; तत्रोपमाननिषेधपूर्वकमुपमेयस्य स्थापनम्, अत्र तु किञ्चिदनिर्दिश्यैव हठादुद्भिन्नस्य वस्तुनः निमित्तान्तरप्रयुक्तत्वस्थापनमित्यपि बोध्यमिति [illegible]।

उदाहरणम्,-

शैलेन्द्रप्रतिपाद्यमानगिरिजा-हस्तोपगूढोल्लसद्-
रोमाञ्चादिविसंष्ठुलाखिलविधिव्यासङ्गभङ्गाकुलः ।
आः शैत्यं तुहिनाचलस्य करयोरित्यूचिवान्, सस्मितं
शैलान्तःपुरमातृमण्डलगणैर्दृष्टोऽवताद्वः शिवः ॥

अत्र पुलकवेपथू सात्त्विकरूपतया प्रकृतौ शैत्यकारणतया प्रकाशितत्वादपह्नुतस्वरूपौ व्याजोक्तिं प्रयोजयतः ॥

**किञ्चित्पृष्टमपृष्टं वा कथितं यत्प्रकल्पते ।**
**तादृगन्यव्यपोहाय परिसङ्ख्या तु सा स्मृता ॥२३॥**

प्रमाणान्तरावगतमपि वस्तु शब्देन प्रतिपादितं (प्रयोजनान्तराभावात्) सदृशवस्त्वन्तरव्यवच्छेदाय यत् पर्यवस्यति, सा भवेत्परिसङ्ख्या (१५८)। अत्र च कथनं प्रश्नपूर्वकं तदन्यथा च परिदृष्टं, तथा उभयत्र व्यपोह्यमानस्य प्रतीयमानता, वाच्यत्वं चेति चत्वारो भेदाः । क्रमेणोदाहरणम्,-

किमासेव्यं पुंसां ? सविधमनवद्यं द्युसरितः,
किमेकान्ते ध्येयं ? चरणयुगलं कौस्तुभभृतः ।
किमाराध्यं ? पुण्यं, किमभिलषणीयं च ? करुणा,
यदासक्त्या चेतो निरवधि विमुक्त्यै प्रभवति ॥ [प्र०म०]

---

(१५८) तदन्यस्य निषेधाय तदुक्तिः परिसङ्ख्येति फलितम् । अस्योदाहरणे, गङ्गातीरादेः सेव्यत्वादि प्रमाणान्तरसिद्धमेवेति न तदंशमात्रप्रतिपादनमेव प्रयोजनम्, किन्तु गङ्गाभिन्ननदीतीरादेरसेव्यत्वादिप्रतिपादनाय गङ्गातीरस्य सेव्यत्वमुक्तमिति । उभयत्र प्रश्नपूर्वकाप्रश्नपूर्वकयोरुक्तत्वे ।

किं भूषणं ? सुदृढमत्र यशो, न रत्नं,
किं कार्यमार्यचरितं सुकृतं, न दोषः।
किं चक्षुरप्रतिहतं धिषणा, न नेत्रं,
जानाति कस्त्वदपरः सदसद्विवेकम्॥ [प्र०भा०]

कौटिल्यं कचनिचये, करचरणाधरदलेषु रागस्ते।
काठिन्यं कुचयुगले तरलत्वं नयनयोर्वसति (१५८)॥ [अ०प्र०]

भक्तिर्भवे, न विभवे, व्यसनं शास्त्रे, न युवति-कामास्त्रे।
चिन्ता यशसि, न वपुषि, प्रायः परिदृश्यते महताम्॥ [प्र०भा०]

**यथोत्तरं चेत् पूर्वस्य-पूर्वस्यार्थस्य हेतुता।**
**तदा कारणमाला स्यात्**

उत्तरम् उत्तरं प्रति यथोत्तरम्। उदाहरणम्,-

जितेन्द्रियत्वं विनयस्य कारणं,
गुणप्रकर्षो विनयादवाप्यते।
गुणप्रकर्षेण जनोऽनुरज्यते,
जनानुरागप्रभवा हि सम्पदः (१६०)॥

'हेतुमता सह हेतोरभिधानमभेदतो हेतुः' इति हेत्वलङ्कारो (१६१) न लक्षितः 'आयुर्घृतमित्यादिरूपो ह्येष न भूषणतां कदाचिदर्हति, वैचित्र्याभावात्।

(१५८) न हृदयादिषु इति व्यङ्ग्यम्। अत्र श्लेषमूलेयम्।

(१६०) 'जितेन्द्रियत्वं विनयस्य कारणम्' इत्युपक्रम्य 'विनयादवाप्यते' इत्युपसंहारादत्र भग्नप्रक्रमतादोषोऽस्तीति विभावनीयम्। अनवीकृतत्वदोषजिहीर्षया अतोऽपि प्रक्रमभङ्गो न दोषायेति कश्चित्।

(१६१) भट्टोद्भटप्रदर्शितः।

अविरलकमलविकासः सकलालिमदश्च कोकिलानन्दः ।
रम्योऽयमेति सम्प्रति लोकोत्कण्ठाकरः कालः ॥

इत्यत्र काव्यरूपतां कोमलानुप्रासमहिम्नैव समाम्नासिषुः न पुनर्हेत्वलङ्कारकल्पनयेति, पूर्वोक्तकाव्यलिङ्गमेव हेतुः(१६२)।

क्रियया तु परस्परम् ॥३४॥

वस्तुनोर्जननेऽन्योन्यम्,

अर्थयोरेकक्रियामुखेन (१६३) परस्परं कारणत्वे सति अन्योन्यनामा अलङ्कारः। उदाहरणम्,-

हंसाणं सरेहिं सिरी सारिज्जइ अह सराणं हंसेहिं ।
अण्णोण्णं विअ एए अप्पाणं णवर गरुअन्ति (१६४) ॥

अत्र उभयेषामपि परस्परजनकता मिथः-श्रीसारता-सम्पादनद्वारेण ॥

---

(१६२) अयं भावः, प्राचीना अस्य श्लोकस्य सालङ्कारतया यत् काव्यत्वमूचुः, तत् न उक्तहेत्वलङ्कारवत्तया, येन एतत्स्वीकार आवश्यकः, किन्तु अनुप्रासादिमत्तयेति । हेतुरिति नाम च काव्यलिङ्गस्यैवेति ।

(१६३) एकक्रियामुखेन एकजातीयक्रियाजननद्वारा । कारणत्वे कारणत्वकल्पने । परस्परं जन्यजनकभावाभावेऽपि परस्परगतक्रियाजननमादाय परस्परं जन्यजनकभावः कल्प्यते इत्यर्थः । परस्परं परस्परगतयोरेकजातीयक्रिययोर्जननेऽन्योन्यमिति फलितोऽर्थः । अत्र क्रिययेति गुणस्यापि उपलक्षणमिति उद्योतकृत् ।

(१६४) हंसानां सरोभिः श्रीः सार्य्यते, अथ सरसां हंसैः ।
अन्योन्यमेव एते आत्मानं केवलं गरयन्ति ॥ इति सं० ।
गरयन्ति, गुरूकुर्वन्ति ।

उत्तरश्रुतिमात्रतः।
प्रश्नस्योन्नयनं यत्र क्रियते, तत्र वा सति ॥१९५॥
असकृद् यदसम्भाव्यमुत्तरं स्यात्तदुत्तरम् (१६५)।

प्रतिवचनोपलम्भादेव पूर्व्ववाक्यं यत्र कल्प्यते, तदेकं तावदुत्तरम्। उदाहरणम्,-

वाणिअअ, हत्थिदन्ता कुतो अह्माणं वग्धकत्तीअ।
जाव ललिआलअमुही घरम्मि परिसक्कए सोण्हा(१६६)॥

हस्तिदन्तव्याघ्रकृत्तीनामहमर्थी, ताः मूल्येन प्रयच्छेति क्रेतुर्वचनम् (१६७) अमुना वाक्येन समुन्नीयते। न चैतत् काव्यलिङ्गम्, उत्तरस्य ताद्रूप्यानुपपत्तेः (१६८), न हि प्रश्नस्य प्रतिवचनं जनको हेतुः, नापीदमनुमानम्, एकधर्म्मिनिष्ठतया साध्यसाधनयोरनिर्देशादित्यलङ्कारान्तरमेवोत्तरं साधीयः।

---

(१६५) असम्भाव्यम् सर्व्वैरेव सम्भावयितुमशक्यं दुर्ल्लभम्।

(१६६) वाणिजक हस्तिदन्ताः कुतोऽस्माकं व्याघ्रकृत्तयश्च।
यावत् ललितालकमुखी गृहे परिष्वक्कते स्नुषा॥ इति सं०।
वधूःआसक्तो मे सुतः मृगयार्थं न गच्छतीति व्यज्यते।

(१६७) अत्र प्रश्नरूपत्वाभावेऽपि प्रश्नपदं पूर्व्ववाक्यमात्रपरमित्यदोषः। यद्वा हस्तिदन्तव्याघ्रकृत्तयः किं तव सन्तीति प्रश्नवाक्यमुन्नेयमिति प्रदीपः।

(१६८) उत्तरस्य उत्तरालङ्कारस्य। ताद्रूप्यं काव्यलिङ्गरूपता। प्रश्नस्य प्रतिवचनं न जनको हेतुः किन्तु ज्ञापकः ज्ञापकहेतोश्च न काव्यलिङ्गविषयतेति भावः। एकधर्म्मिनिष्ठतया एकव्यक्तिवृत्तितया। प्रकृते साध्यं प्रश्नः क्रेतृव्यक्तिगततया उन्नीयते, साधनम् उत्तरन्तु विक्रेतृव्यक्तिगतमिति नानयोरेकधर्म्मिनिष्ठतया निर्द्देशः।

प्रश्नादनन्तरं लोकातिक्रान्तगोचरतया यत् असम्भाव्यरूपं प्रतिवचनं स्यात् तत् अपरमुत्तरम् । अनयोश्च (१६९) सकृदुपादाने न चारुताप्रतीतिरित्यसकृदित्युक्तम् । उदाहरणम्,-
का विसमा ? देव्वगई, किं दुल्लहं ? जं जनो गुणग्गाही ।
किं सोक्खं ? सुकलत्तं, किं दुःखं ? जं खलो लोओ(१७०)॥

प्रश्नपरिसङ्ख्यायामन्यव्यपोह एव तात्पर्य्यम्, इह तु वाच्य एव विश्रान्तिरित्यनयोर्विवेकः (१७१) ।

कुतोऽपि लक्षितः सूक्ष्मोऽप्यर्थोऽन्यस्मै प्रकाश्यते ॥२६॥
धर्म्मेण केनचिद्यत्र तत् सूक्ष्मं परिचक्षते ।

कुतोऽपि आकारादिङ्गिताद्वा (१७२), सूक्ष्मस्तीक्ष्णमतिसंवेद्यः । उदाहरणम्,-

वक्त्रस्यन्दिस्वेदबिन्दुप्रबन्धै-
र्दृष्ट्वा भिन्नं कुङ्कुमं कापि कण्ठे ।

---

(१६९) अनयोश्च प्रश्नप्रतिवचनयोश्च । प्रश्नोत्तरयोरन्यतरस्याकूतगर्भत्वे सकृदुपादानेऽपि चमत्कारोऽस्त्येव, यथा,
'किमिति कृशासि कृशोदरि ? किं तव परकीयवचनैः ?' ।
-इत्यादौ प्रश्नेन प्रतिकारसामर्थ्यम्, उत्तरेण च पातिव्रत्यं व्यज्यते इति, तत्रचात्रापि उत्तरमलङ्कार इत्युद्योतकृत् ।

(१७०) का विषमा ? दैवगतिः, किं दुर्लभं ? यत् जनो गुणग्राही ।
किं सौख्यम् ? सुकलत्रम्, किं दुःखं ? यत् खलो लोकः॥ इति सं० ।

(१७१) विश्रान्तिः पर्य्यवसानं तात्पर्य्यम्, दैवगत्यादीनामुत्तराणां दुर्ज्ञेयत्वात् । तत्कथन एव तात्पर्य्यम् ।

(१७२) रूपादेरन्यथात्वमाकारः, चेष्टाविशेषः इङ्गितम् इति प्रदीपः ।

पुंस्त्वं तन्व्या व्यञ्जयन्ती वयस्या
स्मित्वा पाणौ खड्गलेखां लिलेख ॥ [आ०]

अत्राकृतिमालोक्य कयापि वितर्कितं पुरुषायितम् असिलतालेखनेन वैदग्ध्यादभिव्यक्तिमुपनीतं, पुंसामेव कृपाणपाणिता, योग्यत्वात् । यथा वा,-

सङ्केतकालमनसं विटं ज्ञात्वा विदग्धया ।
ईषन्नेत्रार्पिताकूतं लीलापद्मं निमीलितम् ॥ [दू०]

अत्र, जिज्ञासितः सङ्केतकालः कयाचिदिङ्गितमात्रेण विदितो निशासमयशंसिना कमलनिमीलनेन लीलया प्रतिपादितः ।

**उत्तरोत्तरमुत्कर्षो भवेत्सारः परावधिः ॥३७॥**

परः पर्य्यन्तभागः (१७३), अवधिर्यस्य धाराधिरोहितया तत्रैवोत्कर्षस्य विश्रान्तेः । उदाहरणम्,-

राज्ये सारं वसुधा, वसुधायां पुरं, पुरे सौधम् ।
सौधे तल्पं, तल्पे वराङ्गनाऽनङ्गसर्व्वस्वम् ॥

**भिन्नदेशतयाऽत्यन्तं कार्य्यकारणभूतयोः ।**
**युगपद्धर्म्मयोर्यत्र ख्यातिः सा स्यादसङ्गतिः ॥३८॥**

---

(१७३) पर्य्यन्तभागः (अर्थात् वाक्यानां) शेषांशः । अवधिः चरमसीमा, धाराधिरोहितया प्रवाहरूपेण । विश्रान्तेः पर्य्यवसानात् । उत्तरोत्तरम् अधिकतया वर्णनीयस्य उत्कर्षस्य वाक्यशेषांशे चरमसीमागामित्वे सार इति भावः । उत्कर्षश्च श्लाघ्यगुणानामश्लाघ्यगुणानाञ्च सम्भवति, तत्राद्यमुदाहृतम् । अन्त्यं यथा,

तृणाल्लघुतरस्तूलः, तूलादपि च याचकः ।
वायुना किं न नीतोऽसौ ? मामयं प्रार्थयिष्यते ॥ इति उद्योतः ।

इह यद्देशङ्कारणं, तद्देशमेव कार्य्यमुत्पद्यमानं दृष्टम्, यथा धूमादि, यत्र हेतुफलरूपयोरपि धर्म्मयोः केनाप्यतिशयेन (१७४) नानादेशतया युगपदवभासनं, सा अनयोः स्वभावोत्पन्नपरस्परसङ्गतित्यागादसङ्गतिः । उदाहरणम्,-

जस्सेअ वणो तस्सेअ वेअणा भणइ जणो तं अलिअं ।
दन्तक्खअं कवोले वहूए वेअणा सवत्तीणं (१७५) ॥

एषा (१७६) च विरोधबाधिनी न विरोधः, भिन्नाधरतयैव

---

(१७४) अतिशयेन विशेषेण । नानादेशतया भिन्नस्थानतया । युगपदिति स्वरूपकथनं, कार्य्यकारणयोः एकदा भिन्नदेशतया प्रतीतावेव असङ्गतिः स्फुटं प्रतीयते इति । विशेषप्रतिपत्तये कार्य्यकारणयोर्भिन्नस्थानस्थितत्वेन अभिधाने असङ्गतिः यथोदाहरणे सपत्न्याः कपोले स्वामिकृतदन्तक्षतादिः नारीणामतीवक्लेशदायकः-इत्यर्थं विशेषप्रतिपत्तये कार्य्यकारणयोः भिन्नदेशताभिधानमिति । स्वभावोत्पन्ना स्वाभाविकी । सङ्गतिः एकदेशत्वलक्षणः सम्बन्धः । कार्य्यकारणयोरित्युपलक्षणम्, एकदेशस्थितत्वेन प्रसिद्धयोः ययोः-कयोश्चिदपीति बोध्यम् । तेन,

'नेत्रे निरञ्जने तन्व्याः शून्यास्तु वयमङ्गनाम् ।'
इत्यत्रापि सङ्गतिः, इति केचित् प्राहुः ।

(१७५) यस्यैव व्रणः तस्यैव वेदना भणति जनस्तदलीकम् ।
दन्तक्षतं कपोले वध्वाः, वेदना सपत्नीनाम् ॥-इति सं० ।

अत्र क्षतस्य एकत्र व्रणपदेन अपरत्र क्षतपदेनोपादानात् प्रक्रमभङ्गश्चिन्त्यः ।

(१७६) नन्वत्र विरोधाभास एवास्तु, अनुपपत्तिर्हि विरोधः, सा च भिन्नदेशयोरेकदेशत्वे इव, एकदेशयोर्भिन्नदेशत्वेऽपि समानेति पूर्व्वपक्षं

द्वयोरिह विरोधितायाः प्रतिभासात्, विरोधे तु विरोधित्वम् एकाश्रयनिष्ठमनुक्तमपि पर्य्यवसितम्, अपवादविषयपरिहारेणोत्सर्गस्य व्यवस्थितेः, तथा चैवं निदर्शितम् ॥

**समाधिः सुकरं कार्य्यं कारणान्तरयोगतः ।**

साधनान्तरोपकृतेन (१७७) कर्त्रा यद् अक्लेशेन, कार्य्यम् आरब्धं, समाधीयते, स समाधिर्नाम । उदाहरणम्,-

मानमस्या निराकर्त्तुं पादयोर्मे पतिष्यतः ।
उपकाराय दिष्ट्येदमुदीर्णं घनगर्ज्जितम् ॥

**समं योग्यतया योगो यदि सम्भावितः क्वचित् ॥३६॥**

इदमनयोः श्लाघ्यमिति योग्यतया (१७८) सम्बन्धस्य नियत-

---

निराकरोति एषा चेति । इदमत्र निराकरणम्, एकदेशयोर्भिन्नदेशत्वे एव असङ्गतिः सम्भवति, विरोधस्तु अन्यत्रापीति, चमत्कारान्तरविधायिनी विशेषरूपा असङ्गतिः सामान्यविशेषन्यायेन विरोधं बाधते, सुतरां विरोधाभासो भिन्नदेशयोरेकदेशत्वे एव पर्य्यवस्यति, अत एव विरोधाभासोदाहरणानि पूर्व्वं तथैव दत्तानीति । एकाश्रयनिष्ठं भिन्नदेशयोरेकदेशत्वप्रयुक्तम् अनुक्तम् विरोधलक्षणे इति शेषः । अपवादो विशेषः । उत्सर्गः सामान्यम् । 'एवम्' भिन्नदेशयोरेकदेशत्वप्रयुक्त्या विरोधः । निदर्शितम् विरोधोदाहरणतयेति शेषः । 'विरोधवाधिनी' इत्यत्र विरोधबोधिनीति पाठः प्रदीपसम्मतः, तदर्थसङ्गतिश्च तत एव बोध्या ।

(१७७) तथाच यत्र एकमेव कारणं प्रधानतया विवक्षितम्, अपरञ्च सहकारितया, तत्रैवायमलङ्कारः । उभयोः प्राधान्ये विवक्षिते समुच्चय इति ।

(१७८) योग्यतया उपयुक्ततया, अस्य, अध्यवसानमित्यनेन अन्वयः । सम्बन्धस्य (अनुरूपयोः) मेलनस्य । नियतविषयं निश्चयरूपम् ।

विषयमध्यवसानं चेत्तदा समम् । तत् सद्योगेऽसद्योगे च ।

उदाहरणम्,-

धातुः शिल्पातिशयनिकषस्थानमेषा मृगाक्षी,
रूपे देवोऽप्ययमनुपमो दत्तपत्रः स्मरस्य ।
जातं दैवात्सदृशमनयोः सङ्गतं यत्, तदेतत्
शृङ्गारस्योपनतमधुना राज्यमेकातपत्रम् ॥ [स०]
चित्रं चित्रं बत बत महच्चित्रमेतद्विचित्रं,
जातो दैवादुचितरचनासंविधाता विधाता ।
यन्निम्बानां परिणतफलस्फीतिरास्वादनीया,
यच्चैतस्याः कवलनकलाकोविदः काकलोकः ॥ [अस०]

**क्वचिद्यदतिवैधर्म्यान्न श्लेषो घटनामियात्(१७९) ।**
**कर्त्तुः क्रियाफलावाप्तिर्नैवानर्थश्च यद्भवेत् ॥४०॥**
**गुणक्रियाभ्यां कार्य्यस्य कारणस्य गुणक्रिये ।**
**क्रमेण च विरुद्धे यत् स एष विषमो मतः ॥४१॥**

---

अध्यवसानं प्रतीतिः । समं समनामा अलङ्कारः । अनुरूपयोर्योगो हि श्लाघ्यः, स च सतोरिव असतोरपि सम्भवतीत्याह तदिति ।

(१७९) अतिवैधर्म्यात् अत्यन्तवैसादृश्यात् । श्लेषः सम्बन्धः । घटनाम् श्लाघ्यत्वरूपामुपपद्यमानताम् । क्रमेणेति कार्य्यस्य गुणेन कारणगुणो विरुद्धः-इत्येकः, कार्य्यस्य क्रियया कारणस्य क्रिया विरुद्धेत्यपर इति द्वौ । एतद्-भेदद्वये च कार्य्यकारणयोर्विरुद्धगुणक्रियायोग एव चमत्कारी, विरोधे तु भिन्नदेशयोरेकदेशत्वम्, असङ्गत्यलङ्कारे एकदेशयोर्भिन्नदेशत्वमेव चमत्कारीति विशेषः ।

द्वयोरत्यन्तविलक्षणतया यत् अनुपपद्यमानतयैव योगः प्रतीयते [१], यच्च किञ्चिदारभमाणः कर्त्ता क्रियायाः प्रणाशात् (१८०) न केवलमभीष्टं फलं न लभेत, यावदप्रार्थितमप्यनर्थं विषयमासादयेत् [२], तथा सत्यपि कार्य्यस्य कारणरूपानुकारे यत् तयोर्गुणौ क्रियेच परस्परविरुद्धतां व्रजतः [३।४।], स विपर्य्ययात्मा चतूरूपो विषमः। क्रमेण उदाहरणम्,

शिरीषादपि मृद्वङ्गी क्वेयमायतलोचना ।
अयं क्व च कुकूलाग्निकर्कशो मदनानलः ॥ [१]

सिंहिकासुतसन्त्रस्तः शशः शीतांशुमाश्रितः ।
जग्रसे साश्रयं तत्र तमन्यः सिंहिकासुतः ॥ [२]

सद्यःकरस्पर्शमवाप्य चित्रं !
रणे रणे यस्य कृपाणरेखा ।
तमालनीला शरदिन्दुपाण्डु
यशस्त्रिलोक्याभरणं प्रसूते ॥ [३]

आनन्दममन्दमिमं कुवलयदललोचने, ददासि त्वम् ।
विरहस्त्वयैव जनितस्तापयतितरां शरीरं मे ॥ [४]

अत्रानन्ददानं शरीरतापेन विरुध्यते। एवं,

विपुलेन सागरशयस्य कुक्षिणा
भुवनानि यस्य पपिरे युगक्षये ।

---

(१८०) प्रणाशात् उद्देश्यफलजननासामर्थ्यात् । कारणरूपानुकारे इति जनकानुरूपमेव जन्यमिति नियमात्, न हि कदाचिदपि भेकसुतो गगनोड्डयनाय प्रभवति, काकशिशुर्वा शुक्लीभवितुम् ।

मदविभ्रमासकलया पपे पुनः

स पुरस्त्रियैकतमयैकया दृशा ॥

-इत्यादावपि विषमत्वं यथायोगमवगन्तव्यम् (१८१) ॥

**महतोर्यन्महीयांसावाश्रिताश्रययोः क्रमात्(१८२)।**

**आश्रयाश्रयिणौ स्यातां तनुत्वेऽप्यधिकन्तु तत्॥४२॥**

आश्रितमाधेयम् आश्रयस्तदाधारः तयोर्महतोरपि विषये(१८३), तदपेक्षया तनू अप्याश्रयाश्रयिणौ प्रस्तुतवस्तुप्रकर्षविवक्षया यथाक्रमं यत् अधिकतरतां व्रजतः, तदिदं द्विविधम् अधिकं नाम। क्रमेणोदाहरणम्,

अहो विशालं भूपाल, भुवनत्रितयोदरम्।

माति मातुमशक्योऽपि यशोराशिर्यदत्र ते ॥ [आश्र०त०]

युगान्तकालप्रतिसंहृतात्मनो

जगन्ति यस्यां सविकाशमासत।

---

(१८१) जगत्पानकर्तुरवयवस्य कुक्षिणः असमयस्त्रीदृष्टिपीतेन अवय-विना (विष्णुना) अवयवावयविभावः सम्बन्धोऽनुपपद्यमान इति प्रथमप्रकारोऽत्र विषम इति प्रदीपाभिप्रायः। उपादानकारणरूपस्य कुक्षिणः जगत्पानक्रिया उपादेयस्य (विष्णुशरीरस्य) एकतमस्त्रीकर्तृकपानक्रियया विरुद्धेति चतुर्थप्रकारो विषम इति तु सुधेश्वरः।

(१८२) महतोर्बृहतोः। महीयांसौ महत्तया विवक्षितौ। क्रमादिति वस्तुतोऽमहानपि महतः आश्रितस्याश्रयत्वेन महत्तया विवक्षितः आश्रयः इत्येकः, वस्तुतोऽमहानपि महदाश्रयाश्रितत्वेन महत्तया विवक्षितः आश्रितः इत्यपर इति।

(१८३) विषये सम्बन्धे सतीति शेषः। अस्य अधिकतरतां व्रजत इत्यनेनान्वयः।

तमी ममुस्तत्र न कैटभद्विष-
स्तपोधनाभ्यागमसम्भवा मुदः ॥ [शिशु०व०]

**प्रतिपक्षमशक्तेन प्रतिकर्त्तुं तिरस्क्रिया ।**
**या तदीयस्य तत्स्तुत्यै प्रत्यनीकं तदुच्यते ॥४३॥**

व्यक्तिपरमपि विपक्षं साक्षान्निरसितुमशक्तेन केनापि यत्, तमेव प्रतिपक्षमुत्कर्षयितुं तदाश्रितस्य तिरस्करणं, तत् (अनीकप्रतिनिधितुल्यत्वात्) प्रत्यनीकमभिधीयते। यथाऽनीकेऽभियोज्ये तत्प्रतिनिधीभूतमपरं मूढतया केनचिदभियुज्यते तथेह प्रतियोगिनि विजेये तदीयोऽन्यो विजीयते इत्यर्थः। उदाहरणम्,

त्वं विनिर्जितमनोभवरूपः, सा च सुन्दर, भवत्यनुरक्ता ।
पञ्चभिर्युगपदेव शरैस्तां तापयत्यनुशयादिव कामः ॥

यथा वा,

यस्य किञ्चिदपकर्त्तुमक्षमः कायनिग्रहगृहीतविग्रहः (१८४)।
कान्तवक्त्रसदृशाकृतिं कृती राहुरिन्दुमधुनापि बाधते ॥

इन्दोरत्र तदीयता सम्बन्धिसम्बन्धात् (१८५) ॥

---

(१८४) यस्य श्रीकृष्णस्य। कायनिग्रहगृहीतविग्रहः, कायस्य शिरसः निग्रहेण निराकरणेन गृहीतोऽङ्गीकृतः विग्रहः युद्धं शत्रुता येन सः। कान्तवक्त्रसदृशाकृतिं, कान्तं कमनीयं यत् वक्त्रं (अर्थात् श्रीकृष्णस्य) तेन सदृशी आकृतिर्यस्य (इन्दोः) तम्। कृती क्षमतावान्। विष्णुः राहु-शिरश्छेदेति पुराणगाथा ।

(१८५) श्रीकृष्णसम्बन्धिनो मुखस्य सादृश्यसम्बन्धात् ।

समेन लक्ष्मणा वस्तु वस्तुना यत् निगूह्यते।
निजेनागन्तुना वापि तन्मीलितमिति स्मृतम्॥४४॥

सहजम् (१८६) आगन्तुकं वा किमपि साधारणं यत् लक्षणं, तद्द्वारेण, यत्, किञ्चित्केनचिद्वस्तु वस्तुस्थित्यैव बलीयस्तया तिरोधीयते, तत् मीलितमिति द्विधा स्मरन्ति। क्रमेण उदाहरणम्,

अपाङ्ग-तरले दृशौ, मधुर-वक्र-वर्णा गिरः,
विलासभरमन्थरा गतिरतीव कान्तं मुखम्।
इति स्फुरितमङ्गके मृगदृशः स्वतो लीलया
तदत्र न मदोदयः कृतपदोऽपि संलक्ष्यते॥ [व०]

अत्र दृक्तरलतादिकमङ्गस्य लिङ्गं स्वाभाविकं, साधारणञ्च मदोदयेन, तत्राप्येतस्य दर्शनात्।

ये कन्दरासु निवसन्ति सदा हिमाद्रे-
स्त्वत्पातशङ्कितधियो विवशा द्विषस्ते।
अप्यङ्ग-मुत्पुलक-मुद्वहतां सकम्पं
तेषामहो बत भियां न बुधोऽप्यभिज्ञः॥ [प्रा०]

---

(१८६) सहजं वस्तुस्वभावसिद्धम्। आगन्तुकं निमित्तविशेषसम्पर्कजनितम्। साधारणम् तिरोधीयमानतिरोधायकयोरुभयोरेवानुगतम्। लक्षणम् चिह्नम्। वस्तुस्थित्या वस्तुगत्या, स्वभावतः। समानलक्षणयोरपि वस्तुनोरेकस्य स्वभावतः प्रबलतया, तेन यदि अपरस्य तिरोधानम् अन्तर्धानं अनुद्बोधोऽप्रकाशो भवेत् तदा मिलितम्। व्याजोक्तौ तिरोधानं न वस्तुस्वभावजनितं किन्तु कयाचिदुक्त्या वस्तु कश्चित् तिरोधातुं यतते इति विवक्षितम्, इह तु वस्तु नोक्तिसमम्। तत्रापि च तिरोधानं वास्तविकतया विवक्षितमिति भेदः।

अत्र तु सामर्थ्यात् (१८७) अवसितस्य शैत्यस्यागन्तुकत्वात् तत्प्रभवयोरपि कम्पपुलकयोस्ताद्रूप्यं, समानता च, भयेऽपि तयोरुपलक्षितत्वात् ॥

**स्थाप्यतेऽपोह्यते वापि यथापूर्व्वं परम्परम् ।**

**विशेषणतया यत्र वस्तु, सैकावली द्विधा ॥४५॥**

पूर्व्वं पूर्व्वं प्रति यथोत्तरस्य वस्तुनो वीप्सया (१८८) विशेषण-भावेन यत् स्थापनं निषेधो वा सम्भवति, सा द्विधा बुधैः एकावली भण्यते । क्रमेणोदाहरणम्,-

पुराणि यस्यां सवराङ्गनानि,
वराङ्गना रूपपुरस्कृताङ्ग्यः ।
रूपं समुन्मीलितसद्विलासम्,
अस्त्रं विलासाः कुसुमायुधस्य ॥ [स्या०]

न तज्जलं, यन्न सुचारुपङ्कजं,
न पङ्कजं तत्, यदलीनषट्पदम् ।

---

(१८७) सामर्थ्यात् हिमाद्रिकन्दरनिवासबलात् । अवसितस्य अधिगतस्य । ताद्रूप्यम् आगन्तुकत्वम् । समानता शैत्यभयोभयसाधारणता । उपलक्षितत्वात् अनुभवात् ।

(१८८) वीप्सया बाहुल्येन । स्थापनं विधानम् । विशेषणतयेत्युपलक्षणम्, विशेष्यतयेत्यपि बोध्यम्, यथा,-

धर्म्मेण बुद्धिस्तव देव शुद्धा, बुद्ध्या निबद्धा सहसैव लक्ष्मीः ।
लक्ष्म्या च तुष्टा भुवि सर्व्वलोकाः, लोकैश्च नीता भुवनेषु कीर्त्तिः ॥
इति उद्योतः । दर्पणेऽप्येवम् ।

न षट्पदोऽसौ, कलगुञ्जितो न यः,
न गुञ्जितं तत्, न जहार यन्मनः ॥ [ नि० ]

पूर्व्वत्र, पुराणां वराङ्गनाः, तासाम् अङ्गविशेषणमुखेन (१८९) रूपं, तस्य विलासाः, तेषामप्यस्त्रमित्यमुना क्रमेण विशेषणं विधीयते । उत्तरत्र प्रतिषेधेऽप्येवं योज्यम् ॥

यथानुभवमर्थस्य दृष्टे तत्सदृशे स्मृतिः ।
स्मरणम्,

यः पदार्थः केनचिदाकारेण नियतः (१९०) यदा-कदाचित् अनुभूतोऽभूत्, स कालान्तरे स्मृतिप्रतिबोधाधायिनि तत्समाने वस्तुनि दृष्टे सति, यत्, तथैव स्मर्य्यते, तत् भवेत् स्मरणम् ।

---

(१८९) अङ्गस्य विशेषणभावद्वारा ।

(१९०) नियतः निर्धारितः विशेषितः । स्मृतिप्रतिबोधाधायिनि स्मृतेः स्मरणस्य अनुगुणः यः प्रतिबोधः (संस्कारोद्बोधः) तदाधायिनि (तज्जनके) तत्समाने तत्सदृशे । अत्रायं सारः, यादृशं वस्तु एकदा अनुभूयते, तादृशमेव तत् अन्यदा स्मर्य्यते इति नियमात् स्मृतौ अनुभवः कारणम् । अनुभवोऽपि न साक्षादेव कारणम्,(अन्यमनस्कस्य पथि दृष्टतृणादेरस्मरणात्) किन्तु संस्कारद्वारा, (ततश्च तत्रोपेक्षया तृणादेर्दर्शनात् न संस्कारः, अनुपेक्षात्मक एव अनुभवः संस्कारं जनयतीति न स्मृतिः), संस्कारश्च उद्बुद्ध एव स्मृतिं जनयति, न त्वनुद्बुद्धः (अतएव संस्कारस्य सर्व्वदा सत्त्वेऽपि न सर्व्वदा स्मृतिप्रसङ्गः) । उद्बोधकाश्च सम्बन्धिज्ञानादिरूपा नाना, यथा हस्तिदर्शनात् संस्कारोद्बोधद्वारा हस्तिपकस्य स्मरणमिति स्मृतिप्रणाली । एवञ्च सादृश्यसम्बन्धमूलकमेव सम्बन्धिनः स्मरणम् स्मरणालङ्कार इति ग्रन्थकाराभिप्रायः । वस्तुतः वैचित्र्यजनकं स्मरणमात्रमेव स्मरणालङ्कार इति युक्तम् ।

उदाहरणम्,-

निम्ननाभिकुहरेषु यदम्भः-

प्लावितं चलदृशां लहरीभिः।

तद्भवैः कुहरुतैः सुरनार्य्यः

स्मारिताः सुरतकण्ठरुतानाम्॥

यथा वा,

करजुअगहिअ-जसोआ-त्थणमुह-विणिवेसिआहरपुडस्स।

समरिअ-पञ्चजसस्स णमह कण्हस्स रोमञ्चम् (१८१)॥

भ्रान्तिमानन्य-संवित्तत्तुल्यदर्शने॥४६॥

तदिति (१८२) अन्यत् अप्राकरणिकं निर्दिश्यते, तेन समानम् (अर्थादिह) प्राकरणिकम् (आश्रीयते), तस्य तथाविधस्य दृष्टौ सत्यां, यत्, अप्राकरणिकतया संवेदनम्, स भ्रान्तिमान्, न चैष रूपकं प्रथमातिशयोक्तिर्वा (१८३), तत्र

---

(१८१) करयुगगृहीतयशोदास्तनमुखविनिवेशिताधरपुटस्य।

संस्मृतपञ्चजन्यस्य नमत कृष्णस्य रोमाञ्चम्॥ इति सं०।

(१८२) 'तत्तुल्यदर्शने' इत्यत्र तत्पदेन पूर्व्वोक्तम् अन्यपदबोध्यम् अप्राकरणिकमेव परामृश्यते इत्यर्थः। तेन अप्राकरणिकेन। तस्य प्राकरणिकस्य। तथाविधस्य अप्राकरणिकसमानस्य। दृष्टौ दर्शने। अप्राकरणिकतया अप्राकरणिकस्वरूपेण। संवेदनम् अवधारणम्। तथाच सादृश्यमूलः प्रकृतेऽर्थे अप्रकृतार्थस्य भ्रमो भ्रान्तिमानिति फलितम्। वस्तुतः, वस्तुस्वभावसिद्ध-रज्जुरजतादिभ्रमविलक्षणः चमत्कृतिमान् कविकल्पितः उपमेयस्य उपमानतया भ्रम एव तथेति युक्तम्।

(१८३) प्रथमातिशयोक्तिः निगीर्य्याध्यवसानरूपा। अर्थस्य भ्रान्तिमदितिशब्दार्थस्य भ्रमसम्बन्धस्य। अनुगमनेन अन्वयेन। संज्ञायाः भ्रान्तिमदितिनाम्नः। तस्य भ्रमस्य।

वस्तुतो भ्रमस्याभावात्, इह च (धर्मानुगमनेन संज्ञायाः प्रवृत्तेः) तस्य स्पष्टमेव प्रतिपन्नत्वात्। उदाहरणम्,-

कपाले मार्जारः पय इति करान् लेढि शशिनः,
तरुच्छिद्रप्रोतान् बिसमिति करी सङ्कलयति।
रतान्ते तल्पस्थान् हरति वनिताऽप्यंशुकमिति,
प्रभामत्तश्चन्द्रो जगदिदमहो विभ्रमयति॥

**आक्षेप उपमानस्य, प्रतीपमुपमेयता।**
**तस्यैव यदि वा कल्प्या तिरस्कारनिबन्धनम्॥४७॥**

अस्य (१९४) धुरं सुतरामुपमेयमेव वोढुं प्रौढमिति कैमर्थ्येन, यत्, उपमानमाक्षिप्यते, यदपि, तस्यैवोपमानतया प्रसिद्धस्योपमानान्तरविवक्षयाऽनादरार्थमुपमेयभावः कल्प्यते, तत् (उपमेयस्योपमानप्रतिकूलवर्त्तित्वात्) उभयरूपं प्रतीपम्। क्रमेणोदाहरणम्,—

लावण्यौकसि सप्रतापगरिमण्यग्रेसरे त्यागिनाम्,
देव, त्वय्यवनीभरक्षमभुजे निष्पादिते वेधसा।

---

(१९४) अस्य उपमानस्य। धुरम् प्रयोजनम्। प्रौढं समर्थम्। कैमर्थ्येन किमर्थमिदमिति न्यायेन प्रयोजनविरहेण वा। आक्षिप्यते निन्द्यते। उपमेयसत्त्वे उपमानस्य वैफल्येन निन्दा एकं प्रतीपमित्यर्थः। तस्यैव उपमानस्यैव। उपमानान्तरमत्र वर्णनीयम् उपमेयमेव। उपमाननिन्दार्थम् उपमानस्य उपमेयेन उपमाकल्पनम् अपरं प्रतीपमिति फलितम्। द्वितीये उपमानतिरस्कारस्य क्वचित् कल्पिताया उपमाया अभिव्यक्तिद्वारा, क्वचिच्च निमग्नया उपमयैवेति उदाहरणेनैतत् स्फुटीभविष्यति।

इन्दुः किं घटितः, किमेष विहितः पूषा, किमुत्पादितं
चिन्तारत्नमहो, मुधैव किममी सृष्टाः कुलक्ष्माभृतः(१९५)॥

ए एहि दाव सुंदरि, कण्णं दाऊण सुणसु वअणिज्जं ।
तुम्ह मुहेण किसोअरि, चंदो उअमिज्जइ जणेण (१९६) ॥

अत्र मुखेनोपमीयमानस्य शशिनः स्वल्पतरगुणत्वात् उपमित्यनिष्पत्त्या 'वअणिज्जम्'-इतिवचनीयपदाभिव्यङ्ग्यस्तिरस्कारः (१९७) । क्वचित्तु निष्पन्नैवोपमितिक्रिया अनादर-निबन्धनम् । यथा,

गर्वमसंवाह्यमिमं लोचनयुगलेन किं वहसि मुग्धे ।
सन्तीदृशानि दिशि-दिशि सरःसु ननु नील-नलिनानि ॥

इहोपमेयीकरणमेवोत्पलानामनादरः (१९८) । अनयैव रीत्या, यत्(१९९), असामान्यगुणयोगात्, न, उपमानभावमपि

---

(१९५) चिन्तारत्नम् चिन्तामणिनामा मणिः । अत्र यथासंख्यमप्यस्ति ।

(१९६) अयि एहि तावत् सुन्दरि, कर्णं दत्त्वा शृणुष्व वचनीयम् ।
तव मुखेन कृशोदरि, चन्द्र उपमीयते जनेन ॥ इति सं० ।
वचनीयम् निन्दाम् । तवेति वचनीयमित्यत्र मुखेनेत्यत्र च अन्वेति ।

(१९७) वअणिज्जमित्यनेन उपमित्यनिष्पत्तिः, तया च शशिनः स्वल्पगुणत्वरूपस्तिरस्कार इति तात्पर्य्यार्थः ।

(१९८) न्यूनगुणस्यैव उपमेयत्वात् ।

(१९९) अनुभूतपूर्व्वमपि उपमानभावं, यत्, असामान्यगुणयोगात् (असाधारणगुणसम्बन्धात् अर्थात् अभिहितात्) न सहते इत्यन्वयः । उपमानत्वेन प्रसिद्धस्यापि (अभिहितोपमानप्रतीतिविषयस्य) असाधारणगुणसम्बन्ध-

अनुभूतपूर्व्वं सहते, तस्य तत्कल्पनायामपि भवति प्रतीपमिति प्रत्येतव्यम्। यथा,

अहमेव गुरुः सुदारुणानाम् ,
-इति हालाहल, तात, मा स्म दृप्यः।
ननु सन्ति भवादृशानि भूयो
भुवनेऽस्मिन् वचनानि दुर्ज्जनानाम्॥

अत्र, हालाहलस्योपमानत्वमसम्भाव्यम् (२००)एवोपनिबद्धम्॥

**प्रस्तुतस्य यदन्येन(२०१) गुणसाम्यविवक्षया।**
**ऐकात्म्यं बध्यते योगात्तत्सामान्यमिति स्मृतम्॥४८॥**

अतादृशमपि (२०२) तादृशतया विवक्षितुं, यत्, अप्रस्तुतार्थेन संपृक्तमपरित्यक्तनिजगुणमेव (२०३) तदेकात्मतया निबध्यते, तत् (समानगुणनिबन्धनात्) सामान्यम्।

---

अभिधाय उपमानत्वकल्पनम् ( उपमेयस्यापि तादृशगुणसम्बन्धं, स्थापयत् तस्यासाधारण्यं व्याहन्तीति ) उपमानप्रतिकूलतया प्रतीपमिति तात्पर्य्यम्। तथाच कारिकायां 'उपमेयता'-इत्युपलक्षणम्, उपमानतापि बोध्या।

(२००) पूर्व्वम् अहमेवेत्यादिना असाधारण्याभिधानेन, सम्भाव्यमानत्वम्।

(२०१) अन्येन अप्रस्तुतेन। ऐकात्म्यम् ऐकरूप्यम्। बध्यते निबध्यते प्रतिपाद्यते। योगात् सम्बन्धात्। तुल्यतया विवक्षितयोर्वस्तुनोर्मेलनात् तयोरुभयोरेव एकतया प्रतीतौ सामान्यमिति फलितार्थः। मीलिते तु एकस्यैव प्रतीतिः अन्यस्य तु तिरोधानमिति ततो भेदः। रूपकातिशयोक्त्योश्च उपमेयस्य उपमानतया प्रतीतिः, अत्र तु न तथेति ततोऽपि भेद इति उद्योतः।

(२०२) अतादृशमपि वस्तुतोऽप्रस्तुतार्थासमानमपि।

(२०३) तेन सम्पर्कमात्रात् तद्गुणालङ्कारात् भेदः।

उदाहरणम्,-

मलयज-रस-विलिप्त-तनवो नव-हार-लता-विभूषिताः
सिततर-दन्तपत्र-क्षत-वक्त्र-रुचो रुचिरामलांशुकाः ।
शशभृति विततधाम्नि धवलयति धरामविभाव्यतां गताः
प्रियवसतिं प्रयान्ति सुखमेव निरस्तभियोऽभिसारिकाः ॥

अत्र प्रस्तुततदन्ययोः (२०४) अन्यूनानतिरिक्ततया निबद्धं धवलत्वमेकात्मताहेतुः, अत एव पृथग्भावेन न तयोः उपलक्षणम् । यथा वा (२०५),

वेत्रत्वचा तुल्यरुचां वधूनां कर्णाग्रतो गण्डतलागतानि ।
भृङ्गाः सहेलं यदि नापतिष्यन् को वेदयिष्यन्नवचम्पकानि ॥

अत्र निमित्तान्तरजनितापि (२०६) नानात्वप्रतीतिः प्रथमप्रतिपन्नमभेदं न व्युदसितुमुत्सहते, प्रतीतत्वात्तस्य, प्रतीतेश्च बाधायोगात् ।

**विना प्रसिद्धमाधारमाधेयस्य व्यवस्थितिः (२०७) ।**
**एकात्मा युगपद्वृत्तिरेकस्यानेकगोचरा ॥४६॥**

---

(२०४) प्रस्तुताप्रस्तुतयोः अभिसारिकाचन्द्रिकयोः । उपलक्षणम् प्रतीतिः ।

(२०५) उत्तरकालं भेदप्रतीत्या पूर्व्वकालिकाया ऐक्यप्रतीतेर्बाध्यमानत्वेऽपि एतत् सम्भवतीत्याह, यथा वेति ।

(२०६) निमित्तान्तरं भृङ्गपतनम् । 'प्रतीतेः' इत्यस्य उत्पन्नाया इति आदिः । अयं भावः, बाधोऽनुत्पादः उत्पन्नायाश्च नानुत्पादः सम्भवतीति पूर्व्वम् उत्पन्नया ऐक्यप्रतीत्या एव सामान्यालङ्कारस्य सम्भव इति ।

(२०७) आधारान्तरगतत्वेनाधेयवर्णनेऽप्ययं, यथा,-

गतेऽपि सूर्य्ये दीपस्थास्तमश्छिन्दन्ति तत्कराः । इति उद्योतः ।

अन्यत्प्रकुर्वतः कार्य्यमशक्यान्यस्य वस्तुनः।
तथैव करणं चेति विशेषस्त्रिविधः स्मृतः ॥५०॥

प्रसिद्धाधारपरिहारेण, यत्, आधेयस्य विशिष्टा स्थितिः अभिधीयते, स प्रथमो विशेषः। उदाहरणम्,-

दिवमप्युपयातानामाकल्पमनल्पगुणगणा येषाम्।
रमयन्ति जगन्ति गिरः कथमिह कवयो न ते वन्द्याः ॥

एकमपि वस्तु, यत्, एकेनैव स्वभावेन युगपदनेकत्र वर्त्तते, स द्वितीयः। उदाहरणम्,-

सा वसइ तुम्ह हिअए, सा चेअ अच्छीसु, सा अ वअणेसु।
अम्हारिसाणं सुन्दर, ओआसो णत्थि पावाणं (२०८) ॥

यदपि किञ्चिदारभमाणस्तेनैव यत्नेनाशक्यमपि कार्य्यान्तरमारभते, सोऽपरो विशेषः। उदाहरणम्,-

स्फुरदद्भुतरूपमुत्प्रताप-ज्वलनं त्वां सृजताऽनवद्यविद्यम्।
विधिना ससृजे नवो मनोभू-र्भुवि, सत्यं, सविता बृहस्पतिश्च ॥

यथा वा,

गृहिणी सचिवः सखी मिथः, प्रियशिष्या ललिते कलाविधौ।
करुणाविमुखेन मृत्युना हरता त्वां वद किन्न मे हृतम् ॥

---

एकात्मेति एक आत्मा स्वभावो यस्यां सा, तेन यथासङ्ख्यात् भेदः। युगपदिति पर्य्यायनिवारणाय। तथैवेति 'धुनोति चासिं तनुते च कीर्त्तिम्' इत्यादिसमुच्चयव्यावर्त्तनायेति प्रदीपः।

(२०८) सा वसति तव हृदये सा चैवाक्षिषु सा च वचनेषु।
अस्मादृशानां, सुन्दर, अवकाशो नास्ति पापानाम् ॥ इति सं०।

सर्व्वत्र (२०९) एवंविधविषयेऽतिशयोक्तिरेव प्राणत्वेन अवतिष्ठते, तां विना प्रायेणालङ्कारत्वायोगात्; अत एवोक्तं,

सैषा सर्व्वत्र वक्रोक्तिः, अनयाऽर्थो विभाव्यते (२१०)।
यत्नोऽस्यां कविना कार्य्यः, कोऽलङ्कारोऽनया विना॥-इति॥

**स्वमुत्सृज्य गुणं योगादत्युज्ज्वलगुणस्य यत्।**
**वस्तु तद्गुणतामेति, भण्यते स तु तद्गुणः॥५१॥**

वस्तु तिरस्कृतनिजरूपं केनापि समीपगतेन प्रगुणतया स्वगुणसम्पदोपरक्तं तत्प्रतिभासमेव(२११), यत् समासादयति, स तद्गुणः, (तस्य अप्रकृतस्य गुणोऽत्रास्तीति)। उदाहरणम्,-

विभिन्नवर्णा गरुड़ाग्रजेन सूर्य्यस्य रथ्याः, परितः स्फुरन्त्या।
रत्नैः पुनर्यत्र रुचा रुचं स्वामानिन्यिरे वंशकरीरनीलैः॥

---

(२०९) ननु आधारं विना आधेयस्यावस्थानम्, एकस्य एकदा अनेकत्रावस्थानम्, एकेन यत्नेन कार्य्यद्वयकरणञ्च वस्तुतो नोपपन्नमिति कथमेतेषामलङ्कारत्वमिति पूर्व्वपक्षे उत्तरम् सर्व्वत्रेति। अयमत्र उत्तराभिप्रायः, वास्तविकानामेतेषामनुपपद्यमानत्वमस्तु, वैचित्र्यविशेषप्रतिपत्तये प्रतिभाकल्पितानामेतेषामलङ्कारत्वे का हानिः, कविर्हि गिरां वास्तविको नाधारः, किन्तु आधारतया कविसमयसिद्ध इति तादृशाधारं विना आधेयानां गिरामवस्थितिर्नानुपपन्नेति। अतिशयोक्तिः अतिशयेन (वैचित्र्यविशेषप्रतिपत्तये) लोकसीमातिक्रमेण उक्तिः कथनम्। स्वभावोक्त्यादौ अस्या असम्भवात् प्रायेणेति उक्तम्।

(२१०) वक्रोक्तिः वक्रा वैचित्र्याधायिका लोकातिशायिनी उक्तिः कथनम्। विभाव्यते अलङ्क्रियते।

(२११) तत्प्रतिभासं तद्रूपताम्। मीलिते धर्म्मिणोऽपि तिरस्कारः, सामान्ये अपरित्यक्तनिजगुणस्यापृथक्प्रतिभासः, इह तु गुणमात्रस्यैव

अत्र रवितुरगापेक्षया गरुडाग्रजस्य, तदपेक्षया च हरिन्मणीनां अगुणवर्णता (२१२) ॥

तद्रूपाननुहारश्चेदस्य, तत् स्यादतद्गुणः।

यदि तु तदीयं (२१३) वर्णं सम्भवन्त्यामपि योग्यतायाम् इदं न्यूनगुणं न गृह्णीयात्, तदा भवेदतद्गुणो नाम। उदाहरणम्,-

धवलोऽसि जइवि सुंदर, तइवि तुए मज्झ रंजिअं हिअअं।
राअभरिए वि हिअए सुहअ, णिहितो ण रत्तोऽसि (२१४) ॥

अत्रातिरक्तेनापि मनसा संयुक्तो न रक्ततामुपगत इत्यतद्गुणः। किञ्च तदिति अप्रकृतम्, अस्येति च प्रकृतमत्र निर्दिश्यते, तेन, यत्, अप्रकृतस्य रूपं प्रकृतेन कुतोऽपि निमित्तात् न अनुविधीयते, सोऽतद्गुणः इत्यपि प्रतिपत्तव्यम् (२१५)।

---

तिरस्कारः, धर्मिणश्च पृथगवभास इति भेदः,-इति उद्योतः। गुणभेदादेव भेद इति तु वयम्।

(२१२) तथाचात्र गरुडाग्रजवर्णप्राप्तिः, नीलरत्नवर्णप्राप्तिश्चेति तद्गुणद्वयं बोध्यम्।

(२१३) तदीयं प्रस्तुतसम्बन्धि। योग्यतायां तद्वर्णग्रहणोपाये। इदम् अप्रस्तुतम् कर्तृ। गुणाग्रहणरूपविच्छित्तिविशेषाश्रयणात् विशेषोक्तेर्भेद इति दर्पणकृत्।

(२१४) धवलोऽसि यद्यपि सुन्दर, तथापि त्वया रञ्जितं मम हृदयम्।
रागभरितेऽपि हृदये, सुभग, निहितो न रक्तोऽसि॥-इति सं०।

उत्तरार्द्धमेवोदाहरणम्। तत्र स्वहृदयज्ञापनमेवाभिप्रेतमिति हृदयं प्रकृतम्। शेषोऽत्र सुगमम्।

(२१५) तथा च कारिकायां तद्रूपेत्यत्र तच्छब्दः, अस्येत्यत्र चेदंशब्दः प्रस्तुताप्रस्तुतोभयपरो बोध्यः।

यथा,

गाङ्गमम्बु सितमम्बु यामुनं कज्जलाभमुभयत्र मज्जतः ।
राजहंस, तव सैव शुभ्रता चीयते न च न चापचीयते ॥

**यद्यथा साधितं केनाप्यपरेण तदन्यथा ॥ ५२ ॥**
**तथैव यद्विधीयेत, स व्याघात इति स्मृतः ।**

येनोपायेन यत् एकेनोपकल्पितं, तस्यान्येन जिगीषुतया तदुपायकमेव, यत् अन्यथाकरणं, स (स्वसाधितवस्तुव्याहति-हेतुत्वात् (२१६) ) व्याघातः । उदाहरणम्,-

दृशा दग्धं मनसिजं जीवयन्ति दृशैव याः ।
विरूपाक्षस्य जयिनीस्ताः स्तुमो वामलोचनाः ॥

**सैषा संसृष्टिरेतेषां भेदेन यदिह स्थितिः ॥५३॥**

एतेषां समनन्तरमेवोक्तस्वरूपाणां यथासम्भवमन्योन्य-निरपेक्षतया, यत्, एकत्र (शब्दभागे एव, अर्थविषये एव, उभयत्रापि वा) अवस्थानं, सा एकार्थसमवायस्वभावा (२१७) संसृष्टिः। तत्र शब्दालङ्कारसंसृष्टिर्यथा,-

वदनसौरभ-लोभ-परिभ्रमद्भ्रमर-सम्भ्रम-सम्भृतशोभया ।
चलितया विदधे कल-मेखला-कलकलोऽलकलोलदृशाऽन्यया ॥

---

(२१६) अत्र स्वशब्दः उपायार्थः । हेतुत्वादिति उपायस्येति शेषः ।

(२१७) एकस्मिन् अर्थे शब्दभागादौ, समवायः (अर्थात् अलङ्कारयोः) सम्बन्धः एव स्वभावः स्वरूपं यस्याः सा, संसृष्टिरलङ्कार इत्यर्थः । अलङ्कारयोः समवधानं चमत्कारान्तरमादधदलङ्कारान्तरमेव भवतीत्यभिप्रायः।

अर्थालङ्कारसंसृष्टिस्तु,-

लिम्पतीव तमोऽङ्गानि वर्षतीवाञ्जनं नभः । [उत्०]

असत्पुरुषसेवेव दृष्टिर्निष्फलतां गता ॥ [उप०]

पूर्व्वत्र परस्परनिरपेक्षौ यमकानुप्रासौ संसृष्टिं प्रयोजयतः; उत्तरत्र तु तथाविधे उपमोत्प्रेक्षे । शब्दार्थालङ्कारयोस्तु संसृष्टिः,-

सो णत्थि एत्थ गामे जो एअं महमहन्तलाअण्णं ।

तरुणाणं हिअअलुडिं परिसक्कन्तीं णिवारेइ (२१८) ॥

अत्रानुप्रासो रूपकञ्चान्योन्यानपेक्षे, संसर्गश्च तयोरेकत्र वाक्ये छन्दसि वा समवेतत्वात् ।

अविश्रान्तिजुषामात्मन्यङ्गाङ्गित्वन्तु सङ्करः ।

एते एव(२१९)यत्रात्मनि अनासादितस्वतन्त्रभावाः परस्परम् अनुग्राह्यानुग्राहकतां दधति, स(एषां सङ्कीर्य्यमाणस्वरूपत्वात्) सङ्करः ।

---

(२१८) स नास्त्यत्र ग्रामे य एनां महमहायमानलावण्याम् ।

तरुणानां हृदयलुण्ठाकीं परिष्वक्कमाणाम् निवारयति ॥-इति सं०

महमहायमानम् उत्सर्पत्प्रशायमानम्० । परिष्वक्कमाणां सञ्चरन्तीम् । निवारयति उपभोगेच्छात इति शेषः । हृदयलुण्ठाकीमित्यत्र रूपकम् ।

(२१९) एते अलङ्काराः । स्वतन्त्रभावः इतरानपेक्षिता । परस्परम् अनुग्राह्यानुग्राहकता अन्योन्यमुपकार्य्योपकारकभावः, तेन यत्र एकः अलङ्कारः आसादितस्वतन्त्रभावः इतरमलङ्कारमुपकरोति तत्र नायं सङ्करः, यथा, "सद्वंशमुक्तामणिः" इत्यादौ वंशशब्दे श्लेषः शब्दसाम्यात् स्वतःसिद्धः रूपकमुपकरोतीति नायं सङ्करः, किन्तु रूपकमेव । ततश्चालङ्काराणां यथाकथञ्चित् परस्परमुपकार्य्योपकारकभावः सङ्करः एकस्य स्वतःसिद्धस्य अपरालङ्कारोपकारत्वे तु एकमूलकोऽपरोऽलङ्कार इति फलितम् ।

उदाहरणम्,-

आत्ते सीमन्तरत्ने मरकतिनि, हृते हेमताटङ्कपत्रे,
लुप्तायां मेखलायां, झटिति मणि-तुलाकोटियुग्मे गृहीते ।
शोणं बिम्बौष्ठकान्त्या, त्वदरिमृगदृशामित्वरीणामरण्ये,
राजन्, गुञ्जाफलानां स्रज इति शबरा नैव हारं हरन्ति ॥[इगोः]

अत्र तद्गुणमपेक्ष्य भ्रान्तिमता प्रादुर्भूतं, तदाश्रयेण च तद्गुणः सचेतसां प्रभूतचमत्कृतिनिमित्तमित्यनयोरङ्गाङ्गिभावः (२२०) । यथा वा,

जटाभाभिर्भाभिः करधृतकलङ्काक्षवलयो
वियोगिव्यापत्तेरिव कलितवैराग्यविशदः ।
परिप्रेङ्खत्तारापरिकर-कपालाङ्किततले
शशी भस्मापाण्डुः पितृवन इव व्योम्नि चरति (२२१)॥
[बङ्क०]

---

(२२०) बिम्बौष्ठकान्त्या शोणमिति तद्गुणः 'गुञ्जाफलानां स्रजः' इतिभ्रान्तिमन्तम् स्वरूपनिष्पत्तावनुगृह्णाति, तद्गुणस्य च भ्रमजनकतया भ्रान्तिमत्साहाय्येन चारुत्वातिशय इत्यभिप्रायः ।

(२२१) भाभिरुपलक्षितः । कर: किरणम् हस्तश्च । वियोगी विरही (वियोगः शीलमस्येति) विषयश्च । व्यापत्तिर्विनाशः । वैराग्यम् विगतरक्तता विषयस्पृहाराहित्यञ्च । विशदः शुभ्रः शुद्धश्च । पितृवनम् श्मशानम् । अत्र योगिधर्म्मसमारोपात् स्थितापि समासोक्तिरतिस्फुटत्वात् प्रकाशकता नोक्तेति प्रदीपः । वस्तुतः व्योम्नीति भाभिरिति च विशेषणम् योगिनि न सम्भवतीति नात्र समासोक्तिरिति । पितृवन इव व्योम्नीति आधारयोरुपमासत्त्वात् तारापरिकरकपालेत्यत्रापि आधेययोरुपमैव न तु रूपकम् । अत्र प्रथमचरणे उपमारूपकयोरुभयोरेवोपादानं न समीचीनमिति विभावनीयम् ।

उपमा, रूपकम्, उत्प्रेक्षा, श्लेषश्चेति चत्वारोऽत्र पूर्व्ववत् अङ्गाङ्गितया प्रतीयन्ते (२२२)। कलङ्क एवाक्षवलयमिति-रूपकपरिग्रहे (२२३)करधृतत्वमेव साधकप्रमाणतां प्रतिपद्यते, अस्य हि रूपकत्वे तिरोहितकलङ्करूपम् अक्षवलयमेव मुख्यतयाऽवगम्यते, तस्यैव च करग्रहणयोग्यतायां सार्व्वत्रिकी

(२२२) कलितवैराग्यविशद इति श्लेषः, वियोगिव्यापारे रिवेत्युत्प्रेक्षामुपकरोति, उक्तश्लेषसमधिगतविषयनिस्पृहत्वरूपद्वितीयार्थमवलम्ब्यैव उत्प्रेक्षायाः प्रवृत्तेः। तया च उत्प्रेक्षया स श्लेषः उपक्रियते, तया श्लेषस्य समर्थनेन श्लेषकृतचमत्कारस्यातिशायनात्। एवं जटाभाभिर्भाभिरिति पितृवन इव व्योम्नीति च उपमा, करधृतकलङ्काक्षवलय इति रूपकं, ते च श्लेषोत्प्रेक्षे इति चत्वार एवालङ्कारा चन्द्रस्य योगित्वप्रत्यायने परस्परमुपकुर्व्वन्ति, सकारणवैराग्यसहितेन जटादिधारणेन, जटादिधारणसहितेन वा सकारणेन वैराग्येण चन्द्रस्य योगित्वं सुष्ठु समर्थितं भवतीति। पितृवन इव व्योम्नीत्युपमायां तारापरिकरकपालेत्युपमा अङ्गमिति अत्र उपमामूलैवोपमा न सङ्कर इति। केचित्तु अत्रापि इममेव सङ्करमाहुः।

(२२३) कलङ्क एवाक्षवलयमिति कलङ्कोऽक्षवलयमिवेति चोभयरूपस्यापि समासस्य सम्भवेन किम् करधृतकलङ्काक्षवलयमित्यत्रांशे वक्ष्यमाणोऽनयोः सन्देहसङ्करः उत रूपकमेवेति संशयं निराकरोति कलङ्क इति। इदमत्र निराकरणम्, अलङ्काराणामेकतरसाधकबाधकप्रमाणाभावे एव सन्देहसङ्करो भवति, न चात्र तथा, करधृतेतिविशेषणस्यैव रूपकसाधकत्वात्, तथा हि उपमायाम् (चन्द्रसदृशं मुखम् इति रीत्या) सादृश्यांशे उपमानं विशेषणीकृत्य उपमेयमेव प्राधान्येन विशेष्यत्वेन निर्दिश्यते इति उपमेये मुख्यतया सम्भवदेव विशेषणमुपादीयते, रूपके तु (चन्द्र एव मुखमितिरीत्या) उपमेयाभेदेन उपमेयं तिरोधाय उपमानमेव प्राधान्येन विशेष्यतया निर्दिश्यते इति उपमाने मुख्यतया अन्वययोग्यमेव विशेषणमुपादीयते, तच्च विशेषणम् उपमेये कथञ्चिदुपपद्यते इति नियमः, एवञ्च प्रकृते

प्रसिद्धिः; श्लेषच्छायया तु कलङ्कस्य करधारणम् असदेव प्रत्यासत्त्या उपचर्य्य योज्यते, शशाङ्केन केवलं कलङ्कस्य मूर्त्त्यैव उद्वहनात्; 'कलङ्कोऽश्मवलयमिवेति तु उपमायां कलङ्कस्य उत्कटतया प्रतिपत्तिः, नचास्य करधृतत्वं तत्त्वतोऽस्तीति मुख्येऽप्युपचार एव शरणं स्यात्।

एवंरूपस्य सङ्करः शब्दालङ्कारयोरपि परिदृश्यते। यथा,—

राजति तटीयमभिहत-दानव-रासाऽतिपाति-साराव-नदा।
गजता च यूथमविरत-दान-वरा साऽतिपाति सारा वनदा॥(२२४)

---

करधृतत्वविशेषणम् उपमानीभूतेऽश्मवलये एव मुख्यतया सम्भवत् रूपकमेव साधयति। तथा सति हि अश्मवलये उपमाने मुख्ये अर्थे करधृतत्वं मुख्यतयैव अन्वेति। उपमाङ्गीकारे तु कलङ्कस्य मुख्यतया प्रतीतौ तस्य करधृतत्वं नासम्भवीति कदापि मुख्यतयाऽन्वयो न स्यात्। इत्येवम् अश्मवलये करधृतत्वस्य मुख्यतयान्वयसिद्धौ पश्चात् कलङ्के उपचारात् कथञ्चित् करधृतत्वमुपपादनीयं, तथाहि, करशब्दश्लेषवशादुपस्थितस्य किरणस्य कलङ्काधारमण्डलसान्निध्यसम्बन्धेन कलङ्काधारत्वमुपचर्य्यते इति। श्लेषच्छायेति, किरणधृतरूपद्वितीयार्थस्य असद्रूपतया शब्दश्लेषाभावात् वास्तविको नात्र श्लेष इति श्लेषच्छायेत्युक्तम्। प्रत्यासत्त्या कलङ्काधारमण्डलस्य सान्निध्यसम्बन्धेन। उपचर्य्य आरोप्य। मूर्त्त्या मण्डलात्मकेन शरीरेण। उत्कटतया मुख्यतया प्राधान्येन।

(२२४) अभिहतोऽभिघातं प्राप्तः दानवानां रासः सिंहनादशब्दो यस्याम् सा अभिहतदानवरासा। अतिपाती शीघ्रगामी सारावश्च (आरावेण शब्देन सहितः) नदो यस्याम् सा अतिपाति-साराव-नदा। सा गजता (गजसमूहः) यूथम् (स्वकुलम्) अतिपाति (अतिशयम् रक्षति) चेत्यन्वयः। अविरतेन दानेन (मदजलेन) वरा (श्रेष्ठा) अविरतदानवरा। सारा बलिष्ठा। वनदा (वनं द्यति खण्डयति) वनखण्डिका।

अत्र यमकमनुलोमप्रतिलोमश्च (२२५) चित्रभेदः पादद्वय-गते परस्परापेक्षे ॥

**एकस्य च ग्रहे न्यायदोषाभावादनिश्चयः ॥५४॥**

द्वयोर्बहूनां वा अलङ्काराणाम् एकत्र समावेशेऽपि विरोधात् न (२२६) यत्र युगपदवस्थानं, नचैकतरस्य परिग्रहे साधकं, तदितरस्य परिहारे बाधकमस्ति, येनैकतर एव परिगृह्येत, स निश्चयाभावरूपो द्वितीयः सङ्करः, समुच्चयेन सङ्करस्यैवाक्षेपात् । उदाहरणम्,-

जह गहिरो जह रअणणिब्भरो
जह अ णिम्मलच्छाओ ।

---

(२२५) अत्र द्वितीयचतुर्थपादयोः प्रथमाक्षरमारभ्य अनुलोमेन (अनुक्रमेण) पाठे यादृशी पदावली, तयोरन्त्याक्षरमादाय प्रतिलोमेन (व्युत्क्रमेण) पाठेऽपि तादृश्येवायातीति । पादद्वयगतञ्च पादद्वयगतश्चेति-रीत्या एकशेषे 'नपुंसकमनपुंसकेनैकवच्चास्यान्यतरस्याम्' (१।२।६९ पा० सू०) सूत्रेण क्लीबमेव शिष्यते, अतः पादद्वयगते इति नपुंसकतोपपत्तिः, एवं परत्र । पादयमकानुलोमप्रतिलोमयोः प्रत्येकमेव दुष्करतया विदग्धमनोऽनु-रञ्जकम्, तयोः साहित्यन्तु सुतरामतिशयेन विदग्धमनोऽनुरञ्जकमिति परस्परचारुत्वातिशये परस्परमपेक्षेते इत्यभिप्रायः ।

(२२६) विरोधात् अहिनकुलयोरिव एकत्रावस्थानासम्भवत्वात् । समुच्चयेन 'एकस्य च' इत्यत्र चकारेण । आक्षेपात् पूर्वकारिकातोऽनुवृत्तेः । तथाच 'एकस्य च' इत्यत्रस्थः चकारः 'अनिश्चयः' इत्यनेनान्वेति ।

तव किं विस्मिया एसो
सरसवाणिपव्वो अलणिही या किवो (२२७)॥

अत्र, समुद्रे प्रस्तुते (विशेषणसाम्यादप्रस्तुतार्थप्रतीतेः) किमसौ समासोक्तिः, किम् (अब्धेरप्रस्तुतस्य मुखेन, कस्यापि महापुरुषतया प्रस्तुतस्य प्रतीतेः) इयमप्रस्तुतप्रशंसा?—इति सन्देहः। यथा वा,

नयनानन्ददायीन्दोर्विम्बमेतत्प्रसीदति।
अधुना विनिरुद्धाशमविशीर्णमिदन्तमः? ॥

अत्र, किं, (कामस्योद्दीपकः कालो वर्त्तते इति भङ्ग्यन्तरेण अभिधानात् (२२८)) पर्य्यायोक्तम्, उत, (वदनस्येन्दुविम्बतया अध्यवसानात्) अतिशयोक्तिः, किं वा (एतदिति वक्त्रं निर्द्दिश्य तद्रूपारोपवशात्)रूपकं, अथवा(तयोः समुच्चयविवक्षायां(२२९))

(२२७) यथा गभीरो यथा रत्ननिर्भरो यथा च निर्मलच्छायः।
तथा किं विधिना एषः सरसपानीयको जलनिधिर्न कृतः? ॥
इति सं०। ईदृशपक्षे सरसपानीयपक्षेन परोपभोग्यरसुखत्वम् लक्ष्यते इति महेश्वरः।

(२२८) कामस्य उद्दीपकोऽयं कालः इत्यस्य अभिम् काले चन्द्रविम्बं नयनानन्ददायीत्यनेन भङ्ग्यन्तरेण कथनात्; नयनानन्ददायिचन्द्रविम्बत्वं कालोद्दीपकत्वनियतमिति एकतरस्य प्रतिपादने अन्यतरस्य प्रतीतिर्भवतीति। एतेन ईदृशमपि पर्य्यायोक्तं भवतीत्यावाशि।

(२२९) चन्द्रवाचक-चकारादिकलनया विम्बं प्रसीदति, एतद्वक्त्रञ्च प्रसीदतीति विवक्षायाम् एकतरस्यैव प्रकृतत्वे दीपकम्, उभयोरेव प्रकृतत्वे तुल्ययोगितेत्यर्थः। प्रकोपशमनं वर्णनीये इति भावः। विम्बपक्षे आशा दिक्, तमोऽन्धकारः। वक्त्रपक्षे आशा अभिलाषः, तमो विरहजन्यमूढता।

दीपकम्, अथवा तुल्ययोगिता, किन्तु (प्रकृतसमये विशेषण-साम्यादाननस्यावगतौ) समासोक्तिः, (आहोस्वित् मुख-[illegible]प्रस्तावात्) अप्रस्तुतप्रशंसा?—इति बहूनां सन्देहादयमेव सङ्करः।

यत्र तु न्यायदोषयोरन्यतरस्यावतारः, तत्र एकतरस्य निश्चयात् न संशयः। न्यायश्च साधकत्वम् (अनुकूलता)। दोषोऽपि बाधकत्वं (प्रतिकूलता)। तत्र

सौभाग्यं वितनोति वक्त्रशशिनो ज्योत्स्नेव हासद्युतिः।

-इत्यत्र मुख्यतया अवगम्यमाना हासद्युतिर्वक्त्रे (२२०) एवानुकूल्यं भजते इत्युपमायाः साधकं, शशिनि तु न तथा प्रतिकूलेति रूपकं प्रति तस्य अबाधकता।

वक्त्रेन्दौ तव सत्ययं यदपरः शीतांशुरभ्युद्यतः।

-इत्यत्रापरत्वमिन्दोरनुगुणं (२२१) न तु वक्त्रस्य प्रतिकूल-मिति रूपकस्य साधकतां प्रतिपद्यते, न तूपमाया बाधकताम्।

---

(२२०) वक्त्रे विशेष्यतया वक्त्रे प्रतीते, वक्त्रस्य प्रधानतया प्रतीता-विति यावत्, एवं 'शशिनि' इत्यत्रापि बोध्यं। तथा चानुकूल्यादरूपेण। हासद्युतेः वक्त्रे मुख्यतयैवान्वयसम्भवात् हासद्युतिर्वक्त्रस्य प्रतीतौ यथा अनुकूला, न तथा शशिनः प्रतीतौ प्रतिकूला, हासपदस्य विकासपरत्वं परिकल्प्य कथञ्चित् शशिन्यपि अन्वयसम्भवात्।

(२२१) यथा 'अपरः पण्डितः' इत्यत्र पण्डितस्य विशेषणम् अपरत्वं पण्डितान्तरस्य पूर्वोक्ततां प्रत्याययति, तथा 'अपरः शीतांशुः'-इत्यत्र चन्द्रस्य विशेषणतया उपात्तम् अपरत्वं चन्द्रान्तरस्य पूर्वोक्ततां प्रत्याय-यति; चन्द्रान्तरस्य पूर्वोक्तत्वञ्च 'वक्त्रेन्दौ' इत्यत्र रूपक एव भवति,

राजनारायणं लक्ष्मीस्त्वामालिङ्गति निर्भरम् ।

-इत्यत्र पुनरालिङ्गनमुपमां निरस्यति, सदृशं प्रति परस्त्रिया-प्रयुक्तस्यालिङ्गनस्यासम्भवात् ।

पादाम्बुजं भवतु नो विजयाय मञ्जु-
मञ्जीरशिञ्जितमनोहरमम्बिकायाः ।

-इत्यत्र मञ्जीरशिञ्जितम् अम्बुजे प्रतिकूलम्, असम्भवादिति रूपकस्य बाधकं, न तु (२३२), पादेऽनुकूलमित्युपमायाः साधकमभिधीयते, विध्युपमर्दिनो बाधकस्य तदपेक्षया उत्कट-त्वेन प्रतिपत्तेः । एवमन्यत्रापि सुधीभिः परीक्ष्यम् ॥

स्फुटमेकत्र विषये शब्दार्थालङ्कृतिद्वयम् ।
व्यवस्थितञ्च,

अभिन्ने एव पदे स्फुटतया, यत्, उभावपि शब्दार्था-

---

तथैव उपमानस्य चन्द्रस्य प्रधानतया प्रतीतिरिति । न तु अङ्कस्य प्रति-कूलमिति, सामान्यशब्दस्य विशेषपरत्वमभ्युपगम्य वक्तृपदसान्निध्यात् अपर-शब्दस्य वक्त्रापेक्षया अपर इति यदुदितस्यार्थस्यापि कल्पनसम्भवात् ।

(२३२) ननु मञ्जीरशिञ्जितं यथा अम्बुजप्रतिकूलत्वेन बाधकतया व्यपदिश्यते, तथा पादेऽनुकूलत्वेन साधकतयापि कथं न व्यपदिश्यते इति शङ्कां निराकरोति नत्विति । इदमत्र निराकरणम्, प्राधान्यं हि व्यपदेश-नियामकं,'प्राधान्येन व्यपदेशा भवन्ति' इति नियमात्, प्राधान्यञ्च बलवत्त्वम्, प्रकृते च (स्वपक्षरक्षणात् परपक्षनिराकरणस्यैव) उपमासाधकात् रूपक-बाधकस्यैव बलीयस्त्वमिति बाधकतयैव व्यपदेशो युक्त इति । विध्युपमर्दिनः विधानस्य (प्रकृते पादेऽम्बुजत्वविधानरूपस्य रूपकस्य) उपमर्दिनः निराकर्तुः । तदपेक्षया उपमासाधकापेक्षया । उत्कटत्वेन बलीयस्त्वेन ।

अलङ्कारौ (२३३) व्यवस्थां समासादयतः, सोऽप्यपरः सङ्करः।
उदाहरणम्,-

स्फुटोच्चलत्किरण-केसर-सूर्यबिम्ब-
विस्तीर्ण-कर्णिकमथो दिवसारविन्दम्।
श्लिष्टाष्टदिग्दल-कलाप-मुखावतार-
बद्धान्धकारमधुपावलि सञ्चुकोच॥

अत्रैकपदानुप्रविष्टौ रूपकानुप्रासौ।

तेनासौ त्रिरूपः परिकीर्त्तितः ॥५५॥

तदयमनुग्राह्यानुग्राहकतया, सन्देहेन, एकपदप्रतिपाद्यतया च व्यवस्थितत्वात्त्रिप्रकार एव सङ्करो व्याहृतः। प्रकारान्तरेण तु (२३४) न शक्यो व्याकर्त्तुम्, आनन्त्यात्तत्प्रभेदानामिति प्रतिपादिताः शब्दार्थोभयगतत्वेन त्रैविध्यजुषोऽलङ्काराः।

---

(२३३) शब्दार्थालङ्कारादित्युपलक्षणम्, 'अलकश्चोऽलसलोलवलयाऽस्या'-इत्यादौ शब्दालङ्कारयोरनुप्रासयमकयोः, 'वक्त्रारविन्दमधुलुब्धमधुव्रतानि धावन्त्यमी बकुलवञ्जुलकुञ्जमध्ये' इत्यादावर्थालङ्कारयोः रूपकातिशयोक्त्योरप्यन्यत्र सङ्करोऽवधेयः।

(२३४) "संसृष्टिरिति विज्ञेया नानालङ्कारसङ्करः।
सा तु व्यक्ता तथाऽव्यक्ता व्यक्ताव्यक्तेति च त्रिधा॥
तिलतण्डुलवद्व्यक्ता छायादर्शवदेव च।
अव्यक्ता क्षीरजलवत् पांशुपानीयवच्च सा॥
व्यक्ताव्यक्ता च संसृष्टिर्नरसिंहवदिष्यते।
चित्रवर्णवदन्यस्मिन् नानालङ्कारसङ्करे।"
-इति भोजराजोक्तप्रकारेण।

कुतः पुनरेष नियमो यदेतेषां तुल्येऽपि काव्यशोभातिशयहेतुत्वे कश्चिदलङ्कारः शब्दस्य, कश्चिदर्थस्य, कश्चिच्चोभयस्य ?—इति चेत् । उक्तम् [२०७४०] अत्र, यथा काव्ये दोषगुणालङ्काराणां शब्दार्थोभयगतत्वेन व्यवस्थायामन्वयव्यतिरेकावेव प्रभवतः, निमित्तान्तरस्याभावात्, ततश्च योऽलङ्कारो यदीयान्वयव्यतिरेकावनुविधत्ते, स तदलङ्कारो व्यवस्थाप्यते-इति, एवञ्च यथा पुनरुक्तवदाभासः परम्परितरूपकञ्च उभयो-र्भावाभावानुविधायितया उभयालङ्कारौ, तथा शब्दहेतुकार्थान्तरन्यासप्रभृतयोऽपि ( २३५ ) द्रष्टव्याः, अर्थस्य तु तत्र वैचित्र्यम् उत्कटतया प्रतिभासते इति वाच्यालङ्कारमध्ये वस्तुस्थितिमनपेक्ष्यैव लक्षिताः । 'योऽलङ्कारो यदाश्रितः स तदलङ्कारः' इत्यपि कल्पनायाम्(२३६) अन्वयव्यतिरेकावेव समाश्रयितव्यौ, तदाश्रयणमन्तरेण विशिष्टस्याश्रयाश्रयिभावस्याभावादित्यलङ्काराणां यथोक्तनिमित्त एव परस्परव्यतिरेको ज्यायान् ॥

---

(२३५) उत्पादयति लोकस्य प्रीतिं मलयमारुतः ।
ननु दाक्षिण्यसम्पन्नः सर्वस्य भवति प्रियः ॥ इति दाक्षिण्यपदहेतुकोऽर्थान्तरन्यासः । प्रभृतिपदात् 'सकलकलं पुरमेतत् जातम्'-इत्युपमादीनां संग्रहः ।

(२३६) अलङ्कारधर्मालङ्काराश्रयिभावायाम् । तदाश्रयणम्, तत् आश्रयं अन्वयव्यतिरेकरूपं यत् आश्रयणम् । विशिष्टस्य विशेषणतः नियमवत प्रतिनियतेति यावत् । आश्रयाश्रयिभावस्य आधाराधेयभावस्य । अभावा-दिति [illegible] [illegible] [illegible] । परस्परव्यतिरेकोऽन्योन्यभेदः ।

एषां दोषा यथायोगं सम्भवन्तोऽपि केचन ।
उक्तेष्वन्तर्भवन्तीति न पृथक् प्रतिपादिताः ॥५६॥

तथा हि अनुप्रासस्य प्रसिद्ध्यभावो वैफल्यं वृत्तिविरोधः (२३७) इति ये त्रयो दोषाः, ते प्रसिद्धिविरुद्धताम्, अपुष्टार्थत्वं, प्रतिकूलवर्णताञ्च यथाक्रमं न व्यतिक्रामन्ति, तत्स्वभावत्वात् ।

क्रमेणोदाहरणम्,-

चक्री चक्रारपङ्क्तिं, हरिरपि च हरीन्, धूर्जटिर्धूर्ध्वजान्तान्,
अक्षं नक्षत्रनाथोऽरुणमपि वरुणः, कूबराग्रं कुबेरः ।
रंहः सङ्घः सुराणां, जगदुपकृतये नित्ययुक्तस्य यस्य
स्तौति प्रीतिप्रसन्नोऽन्वहमहिमरुचेः सोऽवतात्स्यन्दनो वः (२३८)॥

अत्र कर्तृकर्मप्रतिनियमेन (२३९) स्तुतिः अनुप्रासानुरोधेनैव कृता, न पुराणेतिहासादिषु तथा प्रतीतेति प्रसिद्धिविरोधः ।

अयि, तरुणि, रमणमन्दिर,-मानन्दस्यन्दि-सुन्दरेन्दुमुखि ।
यदि सल्लीलोल्लापिनि, गच्छसि तत् किं त्वदीयं मे ॥
अनणुरणन्मणिमेखल,-मविरलशिञ्जान-मञ्जु-मञ्जीरम् ।
परिसरणमरुणचरणे, रणरणकमकारणं कुरुते (२४०) ॥

---

(२३७) वृत्तेः उपनागरिकादेः (१८५पृ०), विरोधः प्रतिकूलता ।

(२३८) अत्र आर-धुर्-अक्ष-कूबर-रंहः-शब्दाः क्रमेण [illegible]-[illegible]-चक्र-युगन्धर-वेगार्थकाः । हरिरिन्द्रः । हरीन् अश्वान् ।

(२३९) चक्री चक्रारपङ्क्तिं स्तौतीति रीत्या ।

(२४०) अनुरक्तजनगमनाय कृतावधारणां प्रति उपनायकस्योक्तिरियम् । युग्ममिदं । हे तरुणि, यदि रमणमन्दिरं गच्छसि, तत् (तदा) त्वदीयं

अत्र वाच्यस्य किञ्चिच्चमत्कारं न किञ्चिदपि चारुत्वं प्रतीयते -इत्यपुष्टार्थतयानुप्रासस्य वैफल्यम् (२४१) ।

अकुण्ठोत्कण्ठयेति [ १२६ पृ० ], अत्र शृङ्गारे परुष-वर्णाडम्बरः पूर्वोक्तरीत्या (२४२) विरुध्यते इति परुषानु-प्रासोऽत्र प्रतिकूलवर्णतैव वृत्तिविरोधः ।

यमकस्य पादत्रयगतत्वेन यमनमप्रयुक्तत्वं दोषः । यथा,
भुजङ्गमस्येव मणिः सदम्भाः, ग्राहावकीर्णेव नदी सदम्भाः ।
दुरन्ततां निश्चिततोऽपि जन्तोः कर्षन्ति चेतः प्रसभं स-दम्भाः (२४३)॥

उपमायाम्, उपमानस्य जाति-प्रमाण-गतन्यूनत्वम्, अधिकता वा तादृशी अनुचितार्थत्वं दोषः ; धर्म्माश्रये तु न्यूनाधिकत्वे यथाक्रमं हीनपदत्वमधिकपदत्वञ्च न व्यभिचरतः । क्रमेणोदाहरणम्,-

चाण्डालैरिव युष्माभिः साहसं परमं कृतम् । [जा० न्यू०]
वह्निस्फुलिङ्ग इव भानुरयं चकास्ति । [प्र० न्यू०]

---

परिसरणम् (गमनम्) मे (मम) अकारणं (निमित्तं विना) रणरणकम् (उत्कण्ठाम्) किम् (कथं) कुरुते, (तत्) भण (वद) इत्यन्वय इति चन्द्रिका ।

(२४१) अत्र परिसरणविशेषणानि अवगुरणत्वादीनि चित्रदीनि, 'त्वदीयं परिसरणमकारणं रणरणकं कुरुते'-इति-वाच्यार्थस्य, तेन व्यङ्ग्यस्य भावविरहस्य च न किञ्चिदुपकारे वर्त्तन्ते, केवलमनुप्रासार्थमेव तान्युपात्तानीति भावः ।

(२४२) अष्टमोल्लासोक्तानुसारेण ।

(२४३) सदम्भा इति पदत्रयस्य यथाक्रममर्थः,-तेजोविशेष-सहिताः, समीचीनजला, दुष्टाभिसन्धियुक्ताश्चेति ।

अयं पद्मासनासीनश्चक्रवाको विराजते ।
युगादौ भगवान् वेधा विनिर्मित्सुरिव प्रजाः ॥ [आ० अ०]

पातालमिव ते नाभिः स्तनौ क्षितिधरोपमौ ।
वेणीदण्डः पुनरयं कालिन्दीपातसन्निभः ॥ [प्र० अ०]

अत्र चाण्डालादिभिरुपमानैः प्रस्तुतोऽर्थोऽत्यर्थमेव कदर्थितः (२४४) इत्यनुचितार्थता ।

स मुनिर्लाञ्छितो मौञ्ज्या कृष्णाजिनपटं वहन् ।
व्यराजन्नीलजीमूतभागाश्लिष्ट इवांशुमान् ॥ [ध० न्यू०]

अत्रोपमानस्य मौञ्जीस्थानीयतडिल्लक्षणो धर्मः केनापि पदेन न प्रतिपादित इति हीनपदत्वम् ।

सपीतवासाः प्रगृहीतशार्ङ्गो
मनोज्ञभीमं वपुराप कृष्णः ।
शतह्रदेन्द्रायुधवान्निशायां
संसृज्यमानः शशिनेव मेघः ॥ [ध० अ०]

अत्रोपमेयस्य (२४५) शङ्खादेरनिर्देशे शशिनो ग्रहणमतिरिच्यते इत्यधिकपदत्वम् ।

लिङ्गवचनभेदोऽपि (२४६) उपमानोपमेययोः साधारणं चेत् धर्ममन्यरूपं कुर्य्यात्, तदा एकतरस्यैव तद्धर्मसमन्वया-

---

(२४४) निन्दोपहासादिप्रतीतेरिति प्रदीपः ।

(२४५) उपमेयस्य श्रीकृष्णस्य ।

(२४६) साधारणधर्मवाचकपदस्य, विभिन्नलिङ्गवचनयोरुपमानोपमेयवाचकपदयोरेकतरानुसारिलिङ्गवचनत्वे, भिन्नलिङ्गं भिन्नवचनञ्चेति दोषद्वयं भोजराजादिसम्मतम्, तद्दोषजन्यं, यद्वाचकलिङ्गवचनानुसारि

वगतेः सविशेषणस्यैव तस्योपमानत्वमुपमेयत्वं वा प्रतीयमानेन धर्म्मेण प्रतीयते इति प्रक्रान्तस्यार्थस्य स्फुटमनिर्वाहाद् अस्य भग्नप्रक्रमरूपत्वम् । यथा,

चिन्तारत्नमिव च्युतोऽपि करतो धिक् मन्दभाग्यस्य मे। [चि॰भ॰]

प्रभावो भविता देव, मुद्राः, कुलवधूरिव। [व॰भे॰]

यत्र तु नानात्वेऽपि लिङ्गवचनयोः, सामान्याभिधायि पदं स्वरूपभेदं नापद्यते, न तत्रैतद्दूषणावतारः, उभयथापि अस्य अनुगमक्षमस्वभावत्वात् (२४७)।

---

साधर्म्यवाचकं यत् पदं स्यात्, तेनैव तस्यान्वयः स्यात्, न तूभाभ्यामपि ; विशेषणविशेष्यभावान्वये समानलिङ्गवचनयोरावश्यकत्वात्, उभयत्र (उपमानोपमेययोः) अन्वयाभावे च तस्य साधर्म्यत्वमेव व्याहन्येत, तत्स्वरूपत्वात् तस्य, तदभावे च कथमुपमा ? उपात्तस्य साधारणधर्म्मस्य एकत्र (उपमेये उपमाने वा) अन्वयबलेन, अपरत्र च प्रतीतिबलेन सम्बन्धमङ्गीकृत्य उपमानिर्व्वाहस्तु न सम्यक्, सर्व्वत्र झटिति प्रतीत्यनुदयादिति । एतच्च दोषद्वयं भग्नप्रक्रमतायामेवान्तर्भवति, उक्तरीत्या उपमाने प्रतीयमानतया वाच्यतया वा उपक्रान्तस्य साधर्म्यस्य उपमेये तदन्यथा (वाच्यतया प्रतीयमानतया वा) उपसंहारादिति प्रकाशकाशयम् ।

(२४७) भोजराजादयस्तु, पर्य्यायान्तराभावे लिङ्गवचनभेदोऽपि न दोषाय इत्याहुः, यथा,

यस्य त्रिवर्गशून्यानि दिनान्यायान्ति यान्ति च ।
स लोहकारभस्त्रेव श्वसन्नपि न जीवति ॥

अत्र भस्त्रायाः पर्य्यायान्तराभावादिति । दण्डिनापि

"न लिङ्गवचने भिन्ने न हीनाधिकतापि वा ।
उपमादूषणायालं यत्रोद्वेगो न धीमताम् ॥
प्राणा इव प्रियोऽयं मे, विद्या धनमिवार्जिता ।

यथा,-

गुणैरनर्घैः प्रथितो रत्नैरिव महार्णवः । [वि० भे०]

तद्वेषोऽसदृशोऽन्याभिः स्त्रीभिर्मधुरताभृतः (२४८) ।

दधते स्म परां शोभां तदीया विभ्रमा इव ॥ [व० भे०]

कालपुरुषविध्यादिभेदेऽपि न तथा(२४९) प्रतीतिरस्खलित-रूपतया विश्रान्तिमासादयतीत्यसावपि भग्नप्रक्रमतयैव व्याप्तः । यथा,-

अतिथिं नाम काकुत्स्थात् पुत्रमाप कुमुद्वती ।

पश्चिमात् यामिनीयामात् प्रसादमिव चेतना ॥

अत्र चेतना प्रसादमाप्नोति न पुरा आपेति कालभेदः ।

प्रत्यग्रमज्जनविशेषविविक्तमूर्त्तिः

कौसुम्भरागरुचिरस्फुरदंशुकान्ता ।

विभ्राजसे मकरकेतनमर्चयन्ती

बालप्रवालविटपप्रभवा लतेव ॥

अत्र, लता विभ्राजते नतु विभ्राजसे इति सम्बोध्यमान-

भवानिव महीपाल, देवराजो विराजते ॥

अलमंशुमतः कक्षामारोढुं तेजसा नृप ।" इत्यनेनैषोऽर्थोऽङ्गीकृतः ।

(२४८) मधुरतया भृतः पूरितः, पक्षे मधुरतां धारयन्ति ये, ते मधुरताभृतः । दधते इति दध-धाञ्-धात्वोरेकवचनबहुवचनत्वेऽप्यसम् ।

(२४९) कालो भूतभविष्यद्वर्त्तमानरूपः । पुरुषः प्रथममध्यमोत्तम-रूपः । विधिः प्रवर्त्तनादिरूपः लिङादिप्रत्ययार्थः । तथा कालादीनामैक्यस्येव इव । अस्खलितरूपतया अपरिवर्त्तितस्वरूपेण । विश्रान्तिं परिसमाप्तिम् । प्रथमं यथा उपमानं प्रतीयते, चरमं तथा नोपमेयं प्रतीयते इति स्थूलार्थः ।

भिन्नस्य परभागस्य (२५०) असम्बोध्यमानविषयतया अत्यासात् पुरुषभेदः।

गङ्गेव प्रवहतु ते सदैव कीर्त्तिः।-इत्यादौ च गङ्गा प्रवहति न तु प्रवहतु इति अप्रवृत्तप्रवर्त्तनात्मनो विधेः। एवञ्जातीयकस्य च अन्यस्यार्थस्य (२५१) उपमानगतस्यासम्भवाद्विध्यादिभेदः॥

'ननु समानम् उच्चारितं प्रतीयमानं धर्म्मान्तरम् उपादाय पर्य्यवसितायाम् उपमायाम् उपमेयस्य प्रकृतधर्म्माभिसम्बन्धान्न कश्चित्कालभेदोऽस्ति (२५२)। यत्राप्युपात्तेनैव (२५३) सामान्यधर्म्मेण उपमा अवगम्यते, यथा, युधिष्ठिर इवायं सत्यं वदतीति, तत्र युधिष्ठिर इव सत्यवाद्ययं सत्यं वदतीति प्रतिपत्स्यामहे (२५४)। सत्यवादी सत्यं वदतीति च न पौनरुक्त्यम् आशङ्कनीयम्, रैपोषं पुष्णातीतिवत् युधिष्ठिर इव

(२५०) परभागस्य विभ्राजसे इति क्रियायोगांशभूतस्य से-प्रत्ययस्य अत्यासात् परिवर्त्तनात्।

(२५१) 'चिरं जीवतु ते पुत्रो मार्कण्डेयो मुनिर्यथा' इत्याशीर्वादादिरूपस्य।

(२५२) काम इव सुन्दरः स रराज इत्यादौ, काम इव स रराजेत्यादौ च यथाक्रमं उच्चारितं प्रतीयमानञ्च सौन्दर्य्यरूपं धर्म्मान्तरमवलम्ब्य उपमा प्रतीयते, रराजेति क्रिया च उपमेये तस्मिन्नेव अन्वेति, न तूपमानीभूते कामेऽपीति समुदायार्थः।

(२५३) यत्र साधारणधर्म्मान्तराभावस्तत्र। उपात्तेनैव भिन्नकालादितया प्रतिपादितेनैव।

(२५४) तथा च सत्यं वदतीति न साधारणधर्म्मवाचकम् किन्तु प्रतीयमानं सत्यवादीति पदम्।

सत्यवदनेन सत्ययाज्ञ्यमित्यर्थावगमात् (२५५)।' सत्यम् एतत्, किन्तु स्थितेषु प्रयोगेषु समर्थनमिदं नतु सर्व्वथा निरवद्यम्, प्रस्तुतवस्तुप्रतीतिविघातात् (२५६) इति, सचेतस एवात्र प्रमाणम्।

असादृश्यासम्भवावप्युपमायाम् अनुचितार्थतायामेव पर्य्यवस्यतः। यथा,-

ग्रथ्नाति काव्यशशिनं विततार्थरश्मिम्। [कुमा०]

अत्र काव्यस्य शशिना, अर्थानाञ्च रश्मिभिः साधर्म्यं कुत्रापि न प्रतीतमित्यनुचितार्थत्वम्।

निपेतुरास्यादिव तस्य दीप्ताः
शरा धनुर्मण्डलमध्यभाजः।
जाज्वल्यमाना इव वारिधारा
दिनार्द्धभाजः परिवेषिणोऽर्कात्॥ [कम०]

अत्रापि ज्वलन्त्योऽम्बुधाराः सूर्य्यमण्डलात् निष्पतन्त्यो न सम्भवन्तीत्युपनिबध्यमानोऽर्थोऽनौचित्यमेव पुष्णाति॥

उत्प्रेक्षायामपि सम्भावनं ध्रुवेवादय एव शब्दा वक्तुं

---

(२५५) रसपोषं पुष्णातीत्यत्र यथा (काशिकान्यासकारादिमते) धनकरणकपोषणाभिन्ना पुष्टिरितिरीत्या धात्वर्थस्य सामान्यविशेषभावेन विशेषणविशेष्यभावान्न पौनरुक्त्यम्, तथात्रापीति। एवमेव निदर्शनम्। अत्र युधिष्ठिर इवेत्यनेन सत्यवदनस्वभावत्वं प्रतीयते।

(२५६) प्रस्तुतस्य प्राकरणिकस्य वस्तुनः उपमायाः। साधर्म्यस्य झटितिप्रतीत्यनुदयेन प्रतीतेर्विलम्बरूपो विघातः।

सहन्ते, न यथाशब्दोऽपि, केवलस्य (२५७) अस्य साधर्म्यमेव प्रतिपादयितुं पर्य्याप्तत्वात्, तस्य चास्यामविवक्षितत्वादिति तत्राशक्तिरसावाचकत्वं दोषः । यथा,-

उदयौ दीर्घिकागर्भात् मुकुलं मेचकोपमम् ।
नारीलोचनचातुर्य्य-शङ्कासङ्कुचितं यथा ॥

उत्प्रेक्षितमपि तात्त्विकेन रूपेण परिवर्जितत्वात् निरुपाख्यप्रख्यं (२५८), तत्समर्थनाय यदर्थान्तरन्यासोपादानं, तत् आलेख्यमिव गगनतलेऽत्यन्तमसमीचीनमिति निर्विषयत्वमेतस्य, अनुचितार्थतैव दोषः । यथा,-

दिवाकराद्रक्षति यो गुहासु लीनं दिवाभीतमिवान्धकारम् ।
क्षुद्रेऽपि नूनं शरणं प्रपन्ने ममत्वमुच्चैःशिरसां सतीव ॥

अत्राचेतनस्य तमसो दिवाकरात् त्रास एव न सम्भवतीति कुत एव तत्प्रयोजितमद्रिणा परित्राणं, सम्भावितेन तु रूपेण प्रतिभासमानस्यास्य न काचिदनुपपत्तिरवतरतीति व्यर्थ एव तत्समर्थनायां यत्नः (२५९) ।

---

(२५७) केवलस्य पदान्तरेणासमस्तस्य, समस्तस्य तु यथोचितयथार्थादिषु अन्यार्थत्वमप्यस्त्येवेति महेश्वरः ।

(२५८) निरुपाख्यम् अलीकम् गगनकुसुमादि, तत्प्रख्यं तत्तुल्यम् । निर्विषयत्वम् (अनन्तरोक्तस्वरूपम्) निर्विषयत्वं नाम दूषणम् । एतस्य अर्थान्तरन्यासस्य ।

(२५९) अनुपपत्तिनिवारणार्थं हि अर्थान्तरमुपन्यस्यते, न चात्रानुपपत्तिः अनवधारितस्वरूपत्वादस्य; निश्चितस्वरूपस्यैव हि उपपादनमुचितमिति । यत्र तु अतात्त्विकमपि कविप्रौढ़ोक्त्या निश्चितस्वरूपम्, तत्र "सुचिरबद्धनावङ्कारायमि" (१०८५०) इत्यादौ अतात्त्विकस्यापि समर्थनं न दोषायेति बोध्यम् ।

साधारणविशेषणवशादेव समासोक्तिरुक्तमप्युपमानविशेषं प्रकाशयतीति तस्मात् पुनरुपादाने प्रयोजनाभावात् अनुपादेयत्वं यत्, तत् अपुष्टार्थत्वं पुनरुक्तता वा (२६०) दोषः । यथा,-

स्पृशति तिग्मरुचौ ककुभः करै-
र्दयितयेव विजृम्भिततापया ।
अ-तनु-मान-परिग्रहया स्थितम्
रुचिरया चिरयापि दिनश्रिया ॥

अत्र तिग्मरुचेः ककुभाश्च यथा सदृशविशेषणवशेन व्यक्तिविशेषपरिग्रहेण (२६१) च नायकतया नायिकात्वेन च व्यक्तिः, तथा ग्रीष्मदिवसश्रियोऽपि प्रतिनायिकात्वं भविष्यतीति किं दयितयेति स्वशब्दोपादानेन । श्लेषोपमायास्तु (२६२) स विषयः, यत्र उपमानस्योपादानमन्तरेण, साधारणेष्वपि विशेषणेषु न तथा प्रतीतिः, यथा,

स्वयञ्च पल्लवाताम्रभास्वत्करविराजिता ।
प्रभातसन्ध्येवास्वापफललुब्धेहितप्रदा ॥ -इति ॥

अप्रस्तुतप्रशंसायामपि उपमेयम् अनयैव रीत्या प्रतीतं न पुनःप्रयोगेण कदर्थतां नेयम् ।

---

(२६०) प्रतीतस्यापि पुनरुपादानं, न प्रस्तुतार्थं पुष्णातीत्यपुष्टार्थत्वम् । "यदि अर्थतः प्रतीतस्यापि उपादाने पुनरुक्तिस्तदा अर्थपुनरुक्तत्वं दोषः" इति प्रदीपः ।

(२६१) व्यक्तिविशेषः पुंस्त्रीलिङ्गविशेषः । व्यक्तिः प्रतीतिः ।

(२६२) नन्वत्र श्लेषोपमैव स्यादित्यत आह' श्लेषेति । साधारणविशेषणबलात् कुत्र तथा उपमाप्रतीतिः कुत्र नेत्यत्र सहृदय एव प्रमाणम् ।

यथा,-

आकृतेषु विहङ्गमेष मशको नायान् पुरो वार्य्यते,
मध्ये-वारिधि वा वसंस्तृणमणिर्धत्ते मणीनां रुचम्।
खद्योतोऽपि न कम्पते प्रचलितुं मध्येऽपि तेजस्विनां
धिक् सामान्यमचेतसं प्रभुमिवानाम्टष्टतत्त्वान्तरम् (२६३)॥

अत्र, अचेतनस्य प्रभोरप्रस्तुत-विशिष्ट-सामान्य-द्वारेण (२६४) अभिव्यक्तौ न युक्तमेव पुनःकथनम्।

तदेतेऽलङ्कारदोषाः यथासम्भविनोऽन्येऽप्येवञ्जातीयकाः (२६५) पूर्व्वोक्तयैव दोषजात्या अन्तर्भाविताः, न पृथक् प्रतिपादनमर्हन्तीति "

सम्पूर्णमिदं काव्यलक्षणम्॥

इति काव्यप्रकाशेऽर्थालङ्कारनिर्णयो नाम

दशम उल्लासः॥

॥ समाप्तश्चायं श्रीमम्मटभट्टकृतः काव्यप्रकाशः॥

---

(२६३) तृणमणिः काचादिमणिः प्रवालं वा। इवेत्यस्य सामान्यमित्यनेनान्वयः। मध्ये वा धुरि वेति क्वचित् पाठः।

(२६४) अप्रस्तुतं यद् विशिष्टम् (आकृतेष्वित्यादिविशेषणयुक्तम्) सामान्यं, तद्द्वारेण तन्मुखेन; धिक् सामान्यमित्यनेनैवेत्यर्थः।

(२६५) समासोक्तौ नपुंसके नायकव्यवहारसमारोपः, उपमायां उपमाविकलोक्तिः, एवं विरोधे विद्याधरयो र्व्विरोधवर्णनमित्येवञ्जातीयकाः। एतेऽनुचितार्थत्वादौ अन्तर्भावमर्हन्ति। इत्यास्तां विस्तरः।

अलमेव शिवम्।

सम्पूर्णमिदं श्रीमहेशचन्द्रन्यायरत्नसङ्कलिततात्पर्य्यविवरणम्॥

कलिकातासंस्कृतविद्यालयः
संवत् १९४२। खृ० अब्दः १८८६।

# शुद्धिपत्रम् ।

| पृष्ठस्य | पङ्क्तौ | अशुद्धम् | शुद्धम् |
|---|---|---|---|
| २ | २६ | विभावादि सम्वलन | विभावादिसम्वलन |
| ४ | १८ | एतन्मूलकमन्देह | एतन्मूलकसन्देह |
| ४ | २२ | प्राधानीभूत | प्रधानीभूत |
| ४ | २३ | निर्य्यासः | निर्य्यासः |
| ८ | ६ | चतुर्भेदो | चतुर्भेदो |
| ९ | ९ | खङ्ग | खड्ग |
| १० | १५ | व्यावृत्तिदर्शनाच्च | व्यावृत्तिदर्शनाच्च |
| ११ | २१ | असम्भावादिति | असम्भवादिति |
| १२ | २३ | स्वरूपमुच्यार्थं | स्वरूपमुख्यार्थं |
| १२ | २३ | ताटस्थं | ताटस्थ्यम् |
| १३ | १३ | असत्याच्चामेद | असत्याच्चाभेद |
| १४ | २४ | जाद्यादि | जाड्यादि |
| १५ | १९ | इदं शन्देन | इदं शब्देन |
| १८ | २२ | विपयेन | विषयेण |
| २३ | १५ | श्रमखेद | श्रमखेद |
| २५ | १० | मणामि | भणामि |
| २५ | २० | गुरुजन परवश | गुरुजनपरवश |
| २५ | २० | भनामि | भणामि |
| २६ | १८ | द्वयोः | द्वयोः |
| २७ | ५ | तिरष्कृतम् | तिरस्कृतम् |
| २७ | ७ | यत्र स, | यत्र सः, |
| २८ | १ | परितामितम् | परिणामितम् |

| पृष्ठस्य | पङ्क्तौ | अशुद्धम् | शुद्धम् |
|---|---|---|---|
| २८ | १० | सुखितमास्व | सुखितमास्स्व |
| २८ | ११ | अनुपयुज्यमानत्वान् | अनुपयुज्यमानत्वात् |
| २९ | ४ | क्रभव्यङ्ग्यो | क्रमव्यङ्ग्यो |
| ३० | १३ | तैव्यिभावाद्यैः | तैर्विभावाद्यैः |
| ३३ | २ | शन्द | शब्द |
| ३३ | १६ | चर्व्यभाणः | चर्व्यमाणः |
| ३३ | २० | च मत्कार | चमत्कार |
| ३५ | ८ | पाठवं | पाटवं |
| ३५ | १० | प्ररित्यागः | परित्यागः |
| ३५ | २५ | खकीयत्वेन | स्वकीयत्वेन |
| ३६ | ५ | क्षीरेत्रोदीयात् | क्षीरेवोदियात् |
| ३६ | ९ | खीकर्त्तव्यः | स्वीकर्त्तव्यः |
| ३६ | १८ | प्रभाता | प्रमाता |
| ३६ | २६ | कत्त्रर्ग्री | कर्त्री |
| ३७ | १२ | खाकार | स्वाकार |
| ३८ | १६ | रतेरास्वादः | रतेरास्वादः |
| ३८ | १६ | स्थितायाः | स्थितायाः |
| ३८ | १६ | एयेत्यनयोर्भेदः | एवेत्यनयोर्भेदः |
| ३९ | २२ | निर्विकल्पमत्व | निर्विकल्पकत्व |
| ४० | २१ | पाषाराभे दकास्त्वं | पाषाणभेदकास्त्वं |
| ४० | २१ | यस्या सा | यस्याः सा |
| ४१ | १७ | निर्द्दिष्टः | निर्दिष्टः |
| ४३ | १० | इत्यं | इत्थं |
| ४५ | १५ | दिवासाः | दिवसाः |
| ४६ | ३ | कान्तायिषया | कान्ताविषया |
| ४६ | १९ | काककूटस्य | कालकूटस्य |
| ४८ | २ | ॥ ३५ ॥ | ॥ ३६ ॥ |
| ५० | १९ | जठरं | जरठं |

| पृष्ठम् | पङ्क्तौ | अशुद्धम् | शुद्धम् |
|---|---|---|---|
| ५६ | १५ | सम्पसरति | समपसरति |
| ५६ | २५ | निवद्ध | निबद्ध |
| ५७ | ४ | सोढुं | सोढुं |
| ५७ | १७ | आर्द्रार्द्र | आद्रार्द्र |
| ५७ | १९ | नखच्चतादि | नखक्षतादि |
| ५८ | १८ | सह्त्यात् | सह्त्वात् |
| ६० | ७ | मुग्धतयव | मुग्धतयैव |
| ६२ | ५ | मुहुर्मुहुः | मुहुर्मुहुः |
| ६३ | २१ | स्कन्धप्राप्ते: | स्कन्धप्राप्ते: |
| ६९ | १२ | तच्छम्बन्धेन | तत्सम्बन्धेन |
| ७० | ५ | स्त्रिजगति | स्त्रिजगति |
| ७१ | २१ | प्रातिपादिक | प्रातिपदिक |
| ७४ | ४ | चतुभिर्गुणने | चतुर्भिर्गुणने |
| ७५ | २ | खेन्दरः | खेन्दवः |
| ७५ | १२ | अपकर्षा | अपकर्षा |
| ७७ | १ | एव | एवं |
| ७९ | १८ | कम्मने | कम्मनै |
| ८६ | २१ | निवद्धमानः | निबध्यमानः |
| ८८ | ४ | तच्चेष्टया | तच्चेष्टया |
| ९१ | २३ | त्वेति | त्विति |
| ९२ | १९ | कारकानां | कारकाणां |
| ९३ | २३ | 'मा चास्ये' | 'मा चास्य' |
| ९४ | १० | जैमिनिता | जैमिनिना |
| ९५ | १ | वावदे | वादे |
| ९५ | १ | विधे | विधे |
| ९५ | १३ | अपेचन्ती | अपेक्षमाणा |
| ९६ | ३ | ह्रयं,, गतं | "ह्रयं गतं |
| ९६ | ४ | कपालिनः | कपालिनः" |

| पृष्ठस्य | पङ्क्तौ | अशुद्धम् | शुद्धम् |
|---|---|---|---|
| ९८ | २४ | बग्राच्यत्वादिना | वाच्यत्वादिना |
| १०० | १४ | नियग्राह्यो | निर्ग्राह्यो |
| १०३ | ८ | ॥ २ ॥ | ॥ १ ॥ |
| १०५ | ३ | ॥ २ ॥ | ॥ १ ॥ |
| १०६ | १९ | द्यन्यतमत्वं | द्यन्यतमत्वं |
| ११२ | १० | मोर्व्वींद्वितीया | मौर्व्वीं द्वितीया |
| ११२ | २४ | पृथग्निर्देशः | पृथङ्निर्देशः |
| ११६ | ५ | प्रक्षट | प्रक्षष्ट |
| ११९ | २३ | भावानगम | भावानवगम |
| १२१ | ४ | इत्यत्र | इत्यत्र |
| १२१ | २३ | वीप्सयां | वीप्सायां |
| १२४ | ११ | च्युतसंस्कुतं | च्युतसंस्कृतं |
| १२४ | २१ | परशुणा | परशुना |
| १२५ | २१ | सामन्यतो | सामान्यतो |
| १२७ | २१ | इत्यत्रैच्छिको | इत्यत्रैच्छिकः |
| १३० | १० | स्विन्ने | खिन्ने |
| १३० | २३ | माकाङ्क्षति | माकाङ्क्षति |
| १३० | २७ | साकाङ्क्षस्थले | साकाङ्क्षस्थले |
| १३४ | १ | त्वमेवं सौन्दर्य्यां | त्वमेवंसौन्दर्य्यो |
| १३५ | १२ | यच्छब्दस्य | यच्छब्दस्य |
| १३६ | ९ | प्रत्यग्रा | प्रत्यग्रा |
| १३६ | २३ | किमप्यर्थं | कमप्यर्थं |
| १३६ | २४ | पृथक्वाक्य | पृथग्वाक्य |
| १४४ | २० | हेतुगर्भ्भं | हेतुगर्भं |
| १४४ | २० | स्वरूम | स्वरूप |
| १४४ | २३ | प्रयोजनान्तारामावात् | प्रयोजनान्तराभावात् |
| १४७ | १ | ९३ पू० | ९३ पृ० |
| १४८ | २० | संश्रवाः | संश्रयाः |

